# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]




३१ वर्षे
१-२ अङ्कौ

ज्येष्ठभाद्रपदपूर्णिमे, वै० सं० २०३३
जून-सितम्बर, १९७६ ई०

## सुसङ्ग्राह्याः तन्त्रशास्त्रीयाः पालिभाषामयाश्च ग्रन्थाः

क्रमसं० ग्रन्थनाम मूल्यम्

१. नित्याषोडशिकार्णवः—ग्रन्थरत्नमिदम् ऋजुविमर्शिन्या, अर्थरत्नावल्या च व्याख्यया विभूष्य विदुषा सम्पादकेन बहुपरिश्रम्य, अनुसन्धाय च सम्पादितम्। ग्रन्थोऽयं म० म० गोपीनाथकविराजमहोदयानाम् आङ्ग्लभाषालिखितोपोद्घातेन समलङ्कृतः— २५—००

२. तन्त्रसङ्ग्रहः — [प्रथमद्वितीयभागात्मकः] योगतन्त्रग्रन्थमालायाश्चतुर्थ-पुष्परूपमिदं ग्रन्थरत्नं निर्वाणतन्त्र-तोडलतन्त्र-कामधेनु-तन्त्र-फेत्कारिणीतन्त्र-ज्ञानसङ्कलिनीतन्त्र-सवृत्तिकदेवी-कालोत्तरागमेति षड्ग्रन्थसङ्ग्रहरूपम्। विमर्श-प्रधानया भूमिकया पाठान्तरेण च विभूषितोऽयं ग्रन्थो म० म० गोपीनाथकविराजमहोदयैः सम्पादितः—

प्रथमभागस्य—१६—००

द्वितीयभागस्य—१७—००

३. महार्थमञ्जरी— [श्रीमहेश्वरानन्दप्रणीता] परिमलाख्यस्वोपज्ञव्याख्या-विभूषितमिदं ग्रन्थरत्नं विदुषा सम्पादकेनानुसन्धानिकैः भूमिकाटिप्पणीपरिशिष्टादिभिः सनाथितम्— १७—५०

४. त्रिपुरारहस्यम्—ज्ञानखण्डमात्रम्। तन्त्रशास्त्रसर्वस्वभूतमिदं ग्रन्थरत्नं श्रीनिवासभट्टविरचिततात्पर्यदीपिकाख्यया व्याख्यया परिमण्डितम्, अथ च म० म० गोपीनाथकविराज-महोदयानां सम्पादनेन सनाथितम्— ९—००

५. लुप्तागमसङ्ग्रहः—[ प्रथमो भागः ] ग्रन्थोऽयं तत्तत्तन्त्रशास्त्रग्रन्थेषु तत्तद्ग्रन्थनाम्ना उद्धृतानां वचसां सङ्ग्रहरूपः, अथ च विदुषा सम्पादकेन म० म० गोपीनाथ-कविराजमहोदयेन विनिर्मितया टिप्पण्या, भूमिकया, तत्तत्परिशिष्टैश्च परिमण्डितः— १२—००

६. विसुद्धिमग्गो — [ बुद्धघोषाचार्यविरचितः ] भागत्रयात्मकोऽयं ग्रन्थो भदन्ताचारियधम्मपालत्थेरकृतपरमत्थमञ्जूषानाम — विसुद्धिमग्गमहाटीकासमेधितः, अथ च विदुषा सम्पादकेन गवेषणागर्भभूमिकया विभूषितः— प्रथमभागस्य—३६—००

द्वितीयभागस्य—३२—००

तृतीयभागस्य—२७—००

७. अभिधम्मत्थसंगहो—[अनिरुद्धाचार्यप्रणीतः] पालिभाषामयोऽयं ग्रन्थः अभिधर्मप्रकाशिन्या व्याख्यया हिन्दीभाषानुवादेन च समलङ्कृतः, अथ च पाठभेद-पादटिप्पणीभावार्थ-तुलनात्मकटिप्पणीसन्निवेशेन गवेषणामूलकभूमिकाऽ-नुक्रमण्यादिभिश्च सुसमेधितः— प्रथमभागस्य —१५—००

द्वितीयभागस्य—२०—००

प्रकाशकः-निदेशकः, अनुसन्धानसंस्थानम् सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-२२१००२

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

मुख्यसम्पादकः

**डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**

सह-सम्पादकः

**डॉ० हरिश्चन्द्रमणित्रिपाठी**





३१ वर्षे
१-२ अङ्कौ

वार्षिकमूल्यम् १० रूप्यकाणि
संयुक्ताङ्कयोः ६ रूप्यकाणि

# सम्पादकीयम्

त्रिंशवर्षाङ्केषु विविधशास्त्राण्याधारीकृत्य प्रकाशिता गवेषणानिबन्धाः समधीताः सुषमारसज्ञैः। इदानीमियम् आत्मनो वयस एकत्रिंशे संवत्सरे चरणं विन्यस्यन्ती विभ्राजते। विविधशास्त्रपारावारावगाहनपटीयोभिः परम्परागत-शास्त्राध्यापनधिषणैर्विपश्चिद्भिरध्ययनाध्यापनपदवीमुपेयमानानां विषयाणामेव ग्रन्थाः प्रायशो गवेषणाविषयतामानीयन्ते साम्प्रतम्। जनजीवनोपकारकाणाम् अनुदिनं संशोधनपरिवर्धनाद्यासादयतां गणितज्योतिषायुर्वेद-(रसायन-शल्य) संगीतशिल्पकलाप्रभृतिविषयाणां निबन्धादिलेखनेषु विद्वज्जना एतर्हि नानायासेन प्रवर्तमाना दृश्यन्ते। इहैकत्रिंशद्दायनस्यानयोरङ्कयो रसायन-गणित-तिथिस्वरूपादि-विषयानाधारीकृत्य प्रणीता निबन्धाः प्रकाशिताः। पञ्चाङ्गनिर्माणपद्धतिश्चिराद् विवादविषयमुपेता। धर्मशास्त्रानुमोदितपञ्चाङ्गनिर्माणार्थमिह निबन्धे राद्धान्तस्य स्थापनार्थं श्लाघनीयः प्रयासः समाचरितः।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्याष्टादशदीक्षान्तमहोत्सवावसरे विश्व-विद्यालयेन समायोजितायां गङ्गानाथझाप्रवचनमालायां पण्डितप्रवरेण श्रीकेदारनाथओझामहोदयेन यद् विशिष्टं व्याख्यानमुपन्यस्तम्, तदपीह प्रकाशितं विद्वज्जनमनोमोदाय जिज्ञासुजनोपकाराय च सेत्स्यति। वेदव्याकरणसाहित्यादि-विषयका गभीरगवेषणोपबृंहिता अन्येऽपि कतिचन निबन्धा इह लोचनगोचरता-मेष्यन्ति। 'ऋक्षस्य विस्मृतार्थेषु वानरः' इति पण्डितानन्दशर्मणो निबन्धो नितरां श्लाघ्यप्रयत्नो विचारार्थमाह्वयते विद्यारसिकान्। श्रीमतोऽप्पय्यदीक्षितेन रचितः 'वृत्तिवार्त्तिकम्' इत्याख्यो लघुग्रन्थ इह पर्यन्ते प्रकाशितो विस्तृतभूमिका-संवलितो भविष्यति विदुषां जिज्ञासूनां चोपकारक इति नो विश्वासः।

## स्वर्गताः पण्डितरामव्यासपाण्डेयदैवज्ञमहोदयाः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य सम्मानितप्राध्यापकाः स्वर्गताः **पण्डितरामव्यासपाण्डेयदैवज्ञमहोदयाः** त्रयस्त्रिंशदुत्तरद्विसहस्रतमवैक्रमाब्दस्य ज्येष्ठमासस्य शुक्लपक्षस्य निर्जलैकादश्यां तिथावस्मान् विहाय नित्यकैलासधाम जग्मुरिति व्याहरतामस्माकं चेतश्चेखिद्यते। बहोः कालात् पूर्वमेवैभिः स्वमृत्यु-तिथिर्निर्जलैकादशीति कथितमासीत्। पुण्यश्लोकस्य महामनसः श्रीमदनमोहन-मालवीयमहोदयस्येमे कृपास्पदमासन्निति विद्वांसो विदन्त्येव। काशीहिन्दूविश्व-विद्यालये ज्योतिषविभागाध्यक्षपदम्, पञ्चाङ्गविभागाध्यक्षपदम्, प्राच्यविद्याधर्म-विज्ञानसङ्कायाध्यक्षपदञ्चालङ्कृतयेमे प्रायोऽष्टात्रिंशद् वर्षाणि यावद् विश्व-विद्यालयगौरवं वर्धयामासुः। ऊनषष्ट्यधिकैकोनविंशतिशततमखृस्ताब्दे ततो

निवृत्ताः स्वगृह एव शास्त्राण्यध्यापितवन्तः । काशीहिन्दूविश्वविद्यालयस्य विद्या-परिषत्प्रभृतिपरिषत्सु इमे सदस्या आसन् । काशीविश्वपञ्चाङ्ग-मारीशस-हिन्दीपञ्चाङ्ग - फिजी-हिन्दीपञ्चाङ्ग - ज्ञानमण्डलीयसौरपञ्चाङ्ग-डावरपञ्चाङ्ग-वैद्य-नाथपञ्चाङ्गानि सम्पादितानि ।

श्रीमन्महामनोमालवीयमहोदयानां त्विमे दक्षिणहस्तायमाना एवासन् । राष्ट्रवादिनः स्वतन्त्रनेतारो यदा कारागारबद्धा आसन्, तदा कदा किं भविष्यतीत्यादि श्रीरामव्यासमहोदयान् पृष्टवन्तः ।

एतेषां ज्योतिषमार्तण्ड-ज्योतिषरत्नाकरेत्यादिविविधपदव्य आसन् । एतेषां निधनेन संस्कृतस्य, तत्रापि त्रिस्कन्धज्यौतिषस्यापूरणीया क्षतिर्जातित्यत्र नास्ति संशीतिः ।

अस्माभिर्विश्वविद्यालयपक्षतः सुषमापक्षतश्च श्रीकाशीश्वरभवानीविश्वेश्वरौ प्रार्थ्येते यदेतेषामानन्दकानननिवासफलभूत आनन्दलाभस्स्यादिति शम् ।

## स्वर्गता म०म० गोपीनाथकविराजमहोदयाः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य सम्मानितप्राध्यापकाः, विश्वविश्रुत-यशस्काः, सुगृहीतनामधेया **महामहोपाध्यायगोपीनाथकविराजमहोदयाः** त्रय-स्त्रिंशदुत्तरद्विसहस्रतमवैक्रमाब्दस्य आषाढमासस्य कृष्णपक्षस्य दशम्यां तिथौ ( २२-६-१९७६ तमे खैस्ताब्दे ) अस्मान् विहाय ब्रह्मात्मतामयासुरिति विज्ञापयतामस्माकं मनो भृशं चेखिद्यते । पुण्यश्लोकानामेतेषां निधनेन काशीस्थ-विद्वन्मण्डलोमणिषु किलैकः प्रोज्ज्वलतमो ज्ञानविज्ञानपरिमण्डितश्च मणिर्विलोपं गतः ।

गोपीनाथः ७-९-१८८७ तमे खैस्ताब्दे स्वजनुषा पूर्ववङ्गस्थं ( अधुनातनं वाङ्ग्लादेशस्थं) **'धामराई'** इति नामकं ग्राममलङ्कृतवान् । जन्मनः पञ्चमासपूर्व-मेवैतस्य पिता **श्रीवैकुण्ठनाथो** दिवं जगाम । तदनु पुण्यश्लोका **'सुखदासुन्दरी'** इति नामधेया माता बालस्यास्य लालनं पालनं च धार्मिकाध्यात्मिकपरिष्कारपरिपूते संस्कारे कृतवती । गोपीनाथनामधेयो धार्मिकसंस्कारपरिष्कृतोऽयं बालः प्रारम्भिकीं शिक्षां स्वीयग्रामएव लब्धवान् । ततः किलायं पूर्वमाध्यमिकीं परीक्षां कालिकाता-नगरीतः समुत्तीर्य माध्यमिकपरीक्षां स्नातकपरीक्षां च 'जयपुरीय-महाराजाकालेज' इति सुगृहीतनामधेयाद् महाविद्यालयात् समुत्तीर्णवान् । तदनन्तरं १९११ तमे खैस्ताब्दे विद्याराजधानीं काशीं समागत्य तदानीन्तने प्रथितनामधेये 'क्वींसकालेज' इति विद्यालये स्नातकोत्तर-(एम्० ए०) कक्षां प्रविश्य १९१३ तमे खैस्ताब्दे प्रयागविश्वविद्यालयत एम्० ए० परीक्षायां सर्वतोऽधिकान् अङ्कान् लब्ध्वा प्रथमश्रेण्यामुत्तीर्णवान् ।

तदानीं 'क्वींसकालेज' इति नाम्ना प्रथितस्य महाविद्यालयस्य प्राचार्या डॉ० वेनिसमहोदया आसन्। श्रीगोपीनाथो डॉ० वेनिसमहोदयानां विशेषकृपास्पदमासीत्। तेषामेव निर्देशेन सदुपदेशेन च पुरातत्त्वविद्यानुशीलनेऽपि स बद्धाग्रहोऽभूत्।

काश्यां १९१४ तमे खृस्ताब्दे विश्वविश्रुतस्य **'सरस्वतीभवनम्'** इति नामधेयस्य ग्रन्थालयस्योद्घाटनं समजनि। तदानीं डॉ० वेनिसमहाशया एव ग्रन्थालयस्यास्याधीक्षका आसन्। त एव विद्याविनयपरिमण्डितं श्रीगोपीनाथं सरस्वतीभवनग्रन्थालये नियुक्तवन्तः। डॉ० वेनिसमहाभागानां निर्देशानुसारेणैव कविराजमहोदयाः सरस्वतीभवनग्रन्थमालायाः सूत्रपातं कृतवन्तः, यस्यां **'सरस्वतीभवनटेक्स्ट्स'** तथा **'सरस्वतीभवनस्टडीज'** सदृशे प्रकाशने प्रारब्धे।

श्रीकविराजमहानुभावः सरस्वतीभवनग्रन्थालयाध्यक्षपदमलङ्कुर्वन्नेव १९२४ तमे खृस्ताब्दे काशिकराजकीयसंस्कृतमहाविद्यालयस्य प्राचार्यपदमप्यलमकार्षीत्। त्रयोदशवर्षाणि यावत् प्राचार्यपदमलङ्कुर्वाणेनानेन विश्रामग्रहणावधेः अष्टवर्षप्रागेव ततोऽवकाशो गृहीतः।

तदानीन्तनेन ब्रिटिशशासनेन प्राच्यविद्यामनीषिधौरेयाः कविराजमहाशयाः ४-६-१९३४ तमे खृस्ताब्दे **'महामहोपाध्याय'** इति पदव्या विभूषिताः। एवमेव १९६४ तमे खृस्ताब्दे भारतीयशासनेनापि **'पद्मविभूषणम्'** इत्यलङ्करणेन कविराजमहोदया अलङ्कृताः।

आत्मीये सारस्वतसाधनासमेधिते जीवने कविराजमहाभागा भारतीयवाङ्मयमहोदधौ किलानेकानि ग्रन्थरत्नानि गवेषणामर्मगर्भीकृतान् लेखांश्चोपायनीकृतवन्तः। १९६५ तमे खृस्ताब्दे **'साहित्य एकेडेमी'** इत्याख्यया संस्थया पञ्चसहस्रमुद्राभिः कविराजमहानुभावानां **'तान्त्रिक वाङ्मय में शाक्तदृष्टि'** इति कृतिः पुरस्कृता। तदनु १३-९-१९७५ तमे खृस्ताब्द उत्तरप्रदेशीयराज्यपालेन महामहिमश्रीचेन्नारेड्डीमहाभागेन दशसहस्रमुद्रात्मकः सारस्वतपुरस्कारः प्रदत्तः।

एवंविधस्योदारचरितानां निगमागममर्मज्ञानां सुरगवीसेवानिरतानां विद्यार्थिनिवहनीडायितानामेषां महानुभावानां निधनं संस्कृतसमाजस्य ह्यपूरणीयां क्षतिमावहति। अतो विषादाकुलमानसैरस्माभिर्विश्वविद्यालयपक्षतः सारस्वतसुषमापक्षतश्च श्रीकाशीश्वरभवानीविश्वेश्वरौ प्रार्थ्येते यदेतेषां शाश्वतकैवल्यलाभस्स्यादिति शम् !!!

# विषयानुक्रमणी

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ३१ वर्षः | ज्येष्ठभाद्रपदपूर्णिमे, वि० सं० २०३३ | १-२ अङ्कौ |
|---|---|---|

# पाणिनीयं व्याकरणम्[1]

केदारनाथ ओझाः

सम्मानितप्राध्यापकः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी ।

मुनीन् तथाचार्यपदाब्जरेणुकामुपास्य चित्तेन करोमि कौतुकम् ।
अनन्तशाखावरपाणिनीयकं द्रुमं समरोढुमना यतेऽपि खन् ॥

शब्दं व्याकरणं जगज्जनिकरं सर्वान्तरं भास्वरम्,
वाचां साध्वनुशासनेन कुरुते वृद्धिं गुणं वस्तुनः ।
सर्वात्मीयपरस्य रूपमधुरं ज्योतिः परं यच्छति,
तं देवं विभुमात्मरूपसकलव्याप्तं सदा भावये ॥

पाणिन्युपज्ञमपीदं वर्तमानं व्याकरणं न व्याकरणान्तरमिव व्याकरणमेव, अपि तु संस्कृतवाङ्मयस्य प्रधानमेकं शास्त्रम्, प्राधान्यं तु सर्वशास्त्रोपकारितया, शास्त्रस्वातन्त्र्यमप्यैहिकं लौकिकं पारलौकिकञ्च मार्गं निर्माति, व्याख्याति, परिष्कुरुते च । वेद-वैदिकसाहित्य-संरक्षण-पोषण-व्याख्यानादिद्वारा परलोकोपयोगित्वमस्य **'रक्षोहागमलघ्वसंदेहाः प्रयोजनम्'** इत्यादिमहाभाष्येणैव वर्णितम् ।

अत्र भर्तृहरिप्रभृतिव्याख्यातसूचितलौकिकैहिकपारलौकिकसकलवस्तुसर्जनव्यवस्थापन-विवरणादिभिः शब्दाद्वैतस्य, शब्दात्मकचैतन्यवादस्य, शब्दब्रह्मणोऽविकृतपरिणामस्य, विवर्तस्य वा प्रचारद्वारा मोक्षोपयोगिशास्त्रत्वमपि अभिधित्सितम् । पाणिनीयमिति विशेषणमपि लौकिक-प्रसिद्धिसुबोधतया, न तु पाणिनिप्रारब्धार्थकतया, येषां वैयाकरणानां नामग्राहं सस्मार पाणिनिः, येभ्योऽधीतवान्, येषां लेखेन वचोभिर्वा पाणिनिमुनेरेतदुपयोगिनी बुद्धिः प्राचीकटत्, तेषां समेषां बुद्धि-कृतिभ्याम् अङ्कुरितम्, पल्लवितम्, कुसुमितञ्चेदं सर्जनात्मकं व्याकरण-मभिप्रेतम् ।

हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि इतो व्याकरवाणि शब्दाद् व्याकरणशब्दः प्रारभत ।

---

१. सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्याष्टादश (१८) दीक्षान्तमहोत्सवावसरे विश्वविद्यालयेनायोजितायां गङ्गानाथझाप्रवचनमालायां काशीस्थेन विदुषा पं० श्रीकेदारनाथओझामहोदयेन प्रदत्तमिदं द्वितीयं विशिष्टं व्याख्यानम्—सं० ।

'अस्ति-भाति-प्रियं रूपं नाम चेत्यंशपञ्चकम्' इत्यादिवेदान्तप्रसिद्धपद्येन सत्-चित्-आनन्दः प्रियत्वं वाऽस्मिन् जगति अनुभूयमानाः प्रथमास्त्रयः सच्चिदानन्दा ब्रह्मणोंऽशो न सृज्यमाना वस्त्वन्तर्भूताः पदार्थान्तराणि । 'तत्सृष्ट्वा तदेवानुप्राविशद्' इत्यादिरीत्या मूलब्रह्मणो जायमानेषु पदार्थेषु सच्चिदानन्दात्मकस्य ब्रह्मणः संक्रमोऽभिव्याप्तिर्भवति । यावदनुभूयमानं सच्चिदानन्दात्मकं लाघवतर्केणैकं मूलकारणब्रह्मरूपमेव, ब्रह्मणः सर्वत्राभिव्याप्ततया व्यवहारस्यान्यविधस्य वा कार्यस्योपपत्तावनेकसच्चिदानन्दानां कल्पना गौरवग्रस्ता व्यर्था च ।

रूपम् = आकारः, नामव्यवहारसाधकः शब्दः, अंशद्वयमिदं मायाया इति वेदान्ते वर्ण्यते । व्यावहारिकशब्दानां मिथ्यात्वमभिप्रेतञ्चेत् तथैवास्तु, यदि व्यावहारिकशब्दानां सत्यत्वम्, तदा 'मूलकारणब्रह्मणः' एवांशो नाम, आकारस्याप्यर्थस्यामिथ्यात्वे सोऽपि ब्रह्मण एव । यथाकथमपि नामरूपयोरेव सृष्टिः । तस्यापि द्विधा व्याख्यानम् । रूपस्यार्थस्य व्याकृतिर्व्याकरणम्, न्यायवैशेषिकादयो दर्शनानि, शब्दव्याकरणञ्चेदं साध्वनुशासनं नाम व्याकृतिः । यदि चेदं व्याकरणं दर्शनमपि **'विवर्ततेऽर्थभावेन'** जगतः प्रक्रिया न शब्दमात्रस्येति **हरेरभिप्रायेण** नामरूपयोरुभयोर्व्याकृतिरिदं व्याकरणम् ।

**अस्य निर्माणे पाणिनेरुद्देश्यम्**

लौकिकानां वैदिकानां च रूढशब्दानामर्थानुसारं निर्वचनं निरुक्तकार्यम् । अनन्तशब्दात्मके जगति केचन जनपदस्यान्ये प्रान्तस्यापरे राष्ट्रस्य च शब्दा व्यवहारबाहुल्यात् संस्कृते मिश्रिताः, नानादेशे प्रचलिता एकत्र सङ्गृहीताः पर्यायतां गताः, न ते सर्वे प्रसिद्धधातुप्रत्ययानुबन्धादिभिर्व्युत्पादयितुं शक्यन्ते । यथाऽमरकोषरामाश्रमीटीकायां बहवः पर्यायशब्दा अर्थानुसारं विगृहीता उणादिप्रक्रियानुसारं साधिताश्च ।

यद्यपि तत्समये विशेषविषयाण्युणादिसूत्राण्युपलब्धानि । एषु चोणादिसूत्रेषु प्रत्यया नूतना ऊहिताः, अनुबन्धाश्च पाणिनेरनुसारमेवोपयोगिनः कल्पिताः । पाणिनिप्रसिद्धधातुभिरेव तेषां साधनमपि प्रक्रान्तम् । कस्यचिद् गवेषकस्य धिया पञ्चषा नूतना धातवः कल्पनीया जायन्ते । परं एवं सूत्राणां निर्माणे पाणिनीयोऽभिप्रायो नासीत् । तेषां तृणादयो बहुलमिति सामान्यत एव सङ्ग्राह्यमासीत् ।

**संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।**
**कार्याद्विद्यादनुबन्धमेतच्छास्त्रमुणादिषु ।।**

इति पतञ्जलेः प्राक्तनं कियत् प्राचीनमिति संशयास्पदमपि प्रामाणिकम् । एतदनुसारं धातवोऽपि नूतनाः कल्पनीया निर्दिष्टाः ।

आधुनिका भाषाविज्ञानशालिनः प्रचलितधातुभ्योऽपि सूक्ष्मा बहुष्वनुगताः कतिपये धातवः कल्पिताः । केचन आधुनिकाः संस्कृतज्ञा भारतस्य दक्षिणोत्तरप्रदेशेषु भ्रमणशीला वार्तालापप्रसङ्गे संस्कृतस्य पर्यायशब्दास्तत्तद्देशीयभाषासु प्रसिद्धाः, कतिचन नामग्राहमप्युक्ताः । एवं प्राचीना रूढिशब्दाः प्राय इदानीन्तनैरुणादिविशेषसूत्रैर्व्युत्पादिताः सरलाः सञ्जाताः । चिराद् व्यवहारात् पृथक्कृता सुरगवी न नूतनं व्यावहारिकं प्रयोगं घासं प्राप्नवतीति दुर्बला न नूतननिर्वचनस्यावश्यकतां धत्ते । प्रसिद्धानां यौगिकशब्दानां च किमपि निगूहितं निर्वचनं प्राचलत् । ततो भाषाभेदोऽपि अल्पीयान् जजागार ।

कालिदास-भारवि-माघ-श्रीहर्षभाषास्वपि क्रमशो भेदः समायातः । स च यौगिकशब्द-निर्वचनमूलकनूतनशब्दनिर्माणः प्रयोगकृत इति मम प्रतिभाति । परमेषामुपरि दृष्टिपात एव करालकलिकालभिया दुर्लभो विशेषपरिचयोऽध्ययनं गवेषणं वा कथमुदीयात्, कस्य पुरो वक्तव्यम् ? कश्च कथं विश्वसीत ?

तथाप्येवं प्रार्थयामि विश्वासार्थम्-दश हिन्दीवाक्यानि एवं चेतव्यानि येषां संस्कृता-नुवादो रघुवंशस्य द्वितीयसर्गस्थैरेव व्यावहारिकैः शब्दैः सम्भवेत् क्रियेत च । स च अनुवाद आधुनिकानां पञ्चानां संस्कृतनिपुणानां पुरः क्रमशोऽवस्थाप्येत । ते च पञ्च परस्परमन्यस्या-भिप्रायमजानाना एवानुवादं शोधयेयुः । कश्च कस्य शब्दस्य परिवर्तनं समीहते इत्यवगच्छेत् ? शब्दपरिवर्तने चावगते नूनं भाषापरिवर्तिता अवगम्यते । कालिदाससमयेऽस्यार्थस्य वाक्यार्थस्य वोपयोगी अयं शब्दोऽधुना चैतादृश इति परिज्ञानमेव भाषापरिवर्तनज्ञानम् । श्रीतुलसीदास-मानसस्य भूयः प्रचारात् किमप्यनुसन्धातुं शक्ष्यन्ति अनुसन्धानशीलाः । क्रव्यादः, अस्रप इति संस्कृतशब्दाधारेण मांस-रुधिरपर्यायैः अद्-खाद्-अश्-पाधातुभिश्च प्रसिद्धाः सुबोधाः कियन्तः शब्दा महात्मना समुद्भासिताः, ये प्राचीनसंस्कृतशब्देषु शुद्धा अपि न प्रयुक्ताः । आधुनिका अपि संस्कृतज्ञा न तान् सर्वान् गृह्णन्ति, परं ग्रहीष्यन्तीति निश्चितम् ।

चत्वारिंशतो वर्षेभ्यः प्राक्कालिको महाविद्वान् स्वर्गीयः पं० श्रीरामावतारशर्मा कालिदासप्रभृतिकविषु कस्य पद्यं निर्माणीति पृष्ट्वा तादृशमेव पद्यं निर्माति स्म, तस्य भाषायां महान् अधिकार इति शृणोमि । इदं तु पश्यामि—तस्य परमार्थदर्शनस्य प्रारम्भिकं प्रयोजनभाष्यमल्पं मुद्रितं प्राप्तं वर्तते । तदवलोकनेन महाभाष्यपतञ्जलेर्भाषाया विलक्षणोऽ-नुगमस्तस्य चेतोऽभ्यसितुम् आगृह्णाति । एतावत्यालं सुरगिरोऽल्पीयःकलेवरसूक्ष्मपरिवर्तन-सूचनया ।

रूढिशब्दानां व्युत्पत्तेः कृते रचितान्युणादिसूत्राणि विद्वद्भिरनादृतानीति पश्यामि । मन्ये संक्षिप्तेन पाणिनिसूत्रेणैव अतोषि । अत एव परीक्षापाठ्यपुस्तकेषु व्यर्थश्रमतया न निहितानि । परीक्ष्यच्छात्रानादृतापि स्वरवैदिकप्रक्रिया परीक्षापाठ्यत्वेनादृता विद्वद्भिः । यद्यपि छात्रा एवाध्यापका भवन्ति समयेन, स्वरसञ्चारप्रक्रियाह्रासोऽपि वैदिकेषु वैयाकरणेषु च पण्डितमण्डल्याम् । विशेषजिज्ञासूनामाङ्ग्लभाषाभिज्ञानां पाणिनिसूत्रसमन्वयपुरस्सरं साररूपेण च मैकडोनललिखिता स्वरसञ्चारप्रक्रिया तोषकरी जायत इति सर्वदा बुभुक्षितस्य भारतस्य कृते न खेदकरम् ।

यास्कादिनिरुक्ताचार्याणां वैदिकशब्दानां निर्वचनं संक्षेपेण सूचितोणादिप्रक्रियया सङ्ग्राह्यमभिप्रैति पाणिनिः । निरुक्तनिर्वचनेन नूतना धातवो दृष्टावायान्ति, तथा पाणिनिरपि नूतनधातुकल्पनामनुमनुते । प्रासङ्गिकार्थानुसन्धानन्तु निरुक्तस्य पाणिनीयस्याप्यवश्य-मभिप्रेतम् ।

कश्चित्तु निरुक्तस्य **'व्याकरणस्य सर्वस्वम्'** इति लेखं दृष्ट्वा सर्वं धनं निरुक्तं व्याकरणस्य पूर्णताकारि इति व्याख्याय च पाणिनीये व्याकरणे न्यूनतामङ्गीकरोति, तन्न सम्यक् प्रतिभाति । स्वरसंस्कारयोगो हि व्याकरणस्य प्रयोजनं कार्यं वा निरुक्त आयाति । प्रातिशाख्ये च स्वरसंस्कारयोगः कार्यं शब्दत उपात्तम्, प्रातिशाख्यमपि व्याकरणमभिधीयते । तथा

च प्रातिशाख्यव्याकरणस्य पूरकं 'निरुक्तम्' सम्भवति च निर्वचनमनुसृत्य स्वरसंस्कारयोगः। न चास्ति प्रातिशाख्ये निर्वचनसाधनम्।

**(२) प्रातिशाख्यकार्यम्**

अनेनैव व्याकरणेन निर्वाह्यमित्यपि पाणिनेरभिप्रेतं कल्पयितुं शक्यते। शाखामुद्दिश्य विहितं व्याकरणकार्यं प्रातिशाख्यमुच्यते। एकां शाखामुद्दिश्य विरचितं प्रातिशाख्यम्। पाणिनेरष्टाध्यायामपि शाखाविशेषोद्देश्यकप्रक्रिया, सा नोपपद्येत तादृशाभिप्रेतं विना, केचनान्वेषयन्नपि प्रायः पाणिनिसूत्रैरेव गतार्थं जायते। पाणिनिसूत्राणि संक्षेपस्य प्रतीकभूतानि श्रमेण व्याख्येयानि। चतुशब्दा अपि बहूनर्थान् द्योतयन्ति कियन्ति निर्देशेनैव साध्यन्ते, ज्ञापनेन नियमेनोत्सर्गापवादादिविचारैश्च बहवः साधवो भवन्ति। किमपि अदसीयसूत्रैर्जगतार्थं चेत् श्रमेण स्याद् गतार्थम्। पश्चाद् वा प्राचलत्तदिति कल्प्यताम्।

पाणिनीयव्याकरणस्य महान् ग्रन्थः सङ्ग्रहनाम्ना महाभाष्यसूचितः। लक्षश्लोकपरिमितः सः। व्याडिश्च तस्याचार्य इति किंवदन्ती परम्परा। निरुक्तसामश्रमीविकृतिवल्लीकर्तारं व्याडिं स्मरति घनजटादयः पाठपद्धतयोर्विकृतय उच्यन्ते। तेनासौ व्याडिर्वैदिकवाङ्मयस्यासाधारणधीमान्। सङ्ग्रहेऽवश्यमसौ सर्वाः स्वरसंस्कारप्रक्रिया वेदानां पाणिनिसूत्रैस्तद्व्याख्यानोपव्याख्यानैश्च समुद्भासिताः स्युरित्यपि कल्पना।

**(३) स्वरसञ्चारः**

अपौरुषेयवैदिकपदवाक्ययोः स्वरसञ्चारं शिक्षयति व्याकरणम्। स्वरविशेषाधीनोऽर्थविशेष इति नापरिचितं यथेन्द्रशत्रुः स्वरतोऽपराधादित्यादिपरिशीलननिपुणानाम्। अपौरुषेयवाक्येषु स्वरसञ्चारश्च मन्त्रद्रष्टृभिर् ऋषिभिरेव विहितः। तेषां स्वराणां परिज्ञानाय लघुमुपायमनुगमद्वारा व्यधुः पाणिनिप्रभृतयस्तदेव व्याकरणम्। तथा च शब्दरूपवेदस्य यथाऽध्यापकपरम्परा तथा तदर्थरूपवेदार्थस्यापि तादृश्येव परम्परा शब्द इव वेदार्थोऽपि अनादिः। यद् बहुभिर्लौकिकवाक्यमिव स्वशब्दार्थव्युत्पत्त्यनुसारं यथाकथमपि वेदा व्याख्यायन्ते, न स वेदार्थः, किन्तु वैदिकपरम्पराप्राप्त एव। तादृशपरम्पराया व्युत्पत्तये पूर्वमीमांसासूत्राणि, अधिकरणानि, निघण्टु–निरुक्त–स्वरवैदिकप्रक्रियाप्रभृतयः। तथा चैताननुसृत्य कृतो वेदार्थो न वेदार्थः स्वरसमन्वयं विना कृतोऽर्थोऽनर्थ इति भावः।

बहवश्च हिन्दुजातेरितिहासं वेदान्निःसारयन्तो वेदव्याख्यानायाभिमन्यन्ते, तान् किं कुर्मः शास्त्ररहस्यानभिज्ञान्? अनधिगतार्थगन्तृत्वं हि प्रामाण्यम्। प्रमाणान्तरेण ज्ञातान् अर्थान् यदि वेदा ज्ञापयेयुस्तदा प्रमाणान्येव न भवेयुरिति न जानन्ति। प्रायः पञ्चाशतो वर्षेभ्यः प्राग् लेखपरम्परा आङ्ग्लभाषायाः, निरुक्ते '**अनर्थका मन्त्रा**' इति वाक्यमायाति, तच्च मीमांसापूर्वपक्षसूत्रमिव ब्राह्मणवाक्यैरेव कर्मसमवेता अर्थाः स्मर्यन्ताम्, किं प्रयोजनं मन्त्रैरेव स्मरणस्य? इत्यभिप्रायकं वर्तते। किन्तु तदेवाधीत्य केचन विदेशीया एवमभिमन्यन्तालिखँश्च। अनर्थका मन्त्रा इति निरुक्तसन्दर्भेण भारते वेदार्थपरम्परा विच्छिन्नाभूदित्यायाति। अधुना यो हि वेदार्थो भारते स नूतनैः कृतो नूतनः।

एवं सति यथा तै र्वेदा व्याख्यायन्ते, तथा अस्माभि र्विदेशीयैरपि, यथा तेषामर्थो मान्यस्तथाऽस्माकमपीति। तदानीम् आङ्ग्लभाषाभिज्ञा द्वित्रा भारतीया विद्वांसो निरुक्तवाक्यतात्पर्य-

विश्लेषणपुरस्सरं वेदपरम्परेव वेदार्थपरम्पराऽपि अस्माकं भारतीयानामिति आङ्ग्लभाषायां लिलिखुः। विदेशीयवेदव्याख्यातृभिः प्रचारितो भारतीयैः समादृतो हिन्दूनामितिहासः **'आर्या उत्तरीयध्रुवादत्र समायाताः, अत्रत्यान् मूलवासिनो दस्यून् कथमपि पराजित्यावसन्'** इति ममाध्ययनकालेऽपि निर्विचिकित्सित आसीत्। ततो दशभ्यः पञ्चदशभ्यो वा वर्षेभ्योऽनन्तरं विदेशीया अलिखन्। कथमभिमन्यन्ते भारतं मम देशः, विदेशीया इतो गच्छन्तु इति, आर्या अपि उत्तरीयध्रुवदेशादेव समागताः। यथा भवतां भारतं तथा ममापि। तदा भारतीयानां दृष्टेरुन्मीलनं जातम्, अलिखन् च भारतीयाः—न वयं ध्रुवप्रदेशादागताः। अस्माकं मूलदेशोऽयमेव, तदाभासकवेदमन्त्रस्यान्य एवार्थ इत्यादिकम्। तथा चैवंविधवेदव्याख्यानं वेदेन सह क्रीडन् वेदाध्ययनम्। सहसा समुत्पद्येत सद्य एव परिवर्तेत, एतादृशोऽनादेरपौरुषेयस्य वेदस्यार्थो न भवति। तथा च तादृशोपयोगिनी स्वरप्रक्रिया पाणिनीयव्याकरणस्य निर्वाह्यो विषयो व्याकरणान्तराणां नास्ति।

**( ४ ) वैदिकप्रक्रिया**

वेदवेदार्थयो रक्षायां विशेषोपकारिणीं यामसाधारणरीत्या पाणिनीयं व्याकरणं सञ्चालयति। एनां स्वरसञ्चारञ्च विहाय कतिपये वैयाकरणाः सरल-सुबोध-संक्षिप्तशरीरलोभेन नूतनं व्याकरणं रचयाञ्चक्रुः। आशशंसुश्चाग्रिमाः संस्कृतजिज्ञासवोऽनेन मम लघुना व्याकरणेन कृतकृत्या महति गहने पाणिनीयेऽनुशासनेनैव समीहां सञ्चारयिष्यन्ति, परं विपरीतं जातम्, तेषां व्याकरणम् इतिहासमण्डनमेवाभूत्, नैकविपरीतवात्याहतमपि कथमपि संस्कृतसाहित्यं समेधयत्यलङ्करोति च पाणिनीयम्। महति महनीया गुणा अपि विराजन्ते गुणविद्वेषश्च न चिरं राजेत केवलं लौकिकभाषाव्याकरणं वैदिकवाङ्मयं दूरं व्यधात्।

अनादिभारतीयसाहित्यावलुलोकयिषा लोकानां स्वाभाविकी तां वन्ध्यामकरोत्। ततः कियत्कालं रुचिपात्रं तिष्ठेत्? वैदिकलौकिककालिन्दीभागीरथ्योः सङ्गमोऽयं पाणिनीयं शास्त्रं स्वपरिसरमवर्द्धयत्। कतिपये प्राचीनाः कवयः स्वकाव्यनिकुञ्जे कतिपयवैदिकप्रयोगकुसुमान्यपि व्यकासयन् अग्रेतनास्तेन निरङ्कुशाः कवय इति भणित्याऽभूषयन्। सहैव भाषाद्वयस्य परिचयः, अपरिवर्तनीयनिश्चलवैदिकशिलातो नित्यनूतना सर्वदा प्रवहन्ती लौकिकी संस्कृतभाषाधारा कथं प्रास्रवत् कथञ्च प्रावहदिति विज्ञातुमेनमेवादाय प्रभवति मेधावी। अधिकारानुवृत्तिसंज्ञापरिभाषादिभिरेतावत्संक्षिप्तसूत्रेषु भाषाद्वयस्य संगोपनं क्व मिलेद् द्रष्टुमन्यत्र?

**( ५ ) उपनिषदनुकूलदर्शनस्वरूपविवरणम्**

शब्दार्थयोरुभयोरपि जगतोर्व्याख्यानम्—

**शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।**
**छन्दोभ्य एव प्रथममिदं विश्वं व्यवर्तत॥**

इति हरिकारिकयैव तुष्यन्तु पाठकाः श्रोतारश्च, लघुनिनिबन्धे छन्दसां मया समुद्धरणं न समीहन्ताम्। परिणामो विवर्तश्च हरिग्रन्थे समुपलभ्यते प्रतिभाति च समानार्थकता एतयोर्हरेरभिप्रेता।

आधुनिकदार्शनिकवनी विरुद्धौ ऋतू परिणामविवर्तौ दधाति। साङ्ख्यस्य वस्तुतः परिणामवादः कार्यकारणयोस्तादात्म्यमुभयोः सत्त्वञ्च विर्भति न जगन्मिथ्यां भूते वेदान्तस्य मायापेक्षया परिणामः साङ्ख्यस्येव प्रायः, परं मायाया एव मिथ्यात्वेन मायापरिणतस्य विश्वस्य मिथ्यात्वं करणादेवायाति। मायाया जडत्वात् तत्परिणामस्यापि जडतया चैतन्य-सम्बन्धं विना प्रकाशो न स्यात्। श्रुतिसम्मतचेतनकारणवादस्योपपत्तये च ब्रह्मोपादानकमपि जगदभिप्रैति, ब्रह्मणश्च निर्विकारित्वरक्षार्थं परिणामस्य हेयतया विवर्तोपादानमलं स्थापयति। रज्जौ सर्पदण्डजलधारामालादिवद् ब्रह्मणि एकस्मिन्नध्यस्तं नैकविधमिदं विश्वम्। अध्यस्ततया विश्वस्य मिथ्यात्वमायाति।

**वैयाकरणानां** सम्मुखं समस्या-विश्वं वेदान्तवन्मिथ्या विवर्त आदेयोऽथवा साङ्ख्य-वद्विश्वं सत्यं परिणामः तृतीयो वा पन्थाः? बहवो लेखा बहूनां विदुषां परं लेखा एव न परिपूर्णं दर्शनस्वरूपम्। समस्यामेतामनुसन्धाय न केनापि प्रदर्शितम्। बहवो बोधकशब्दं स्फोटं निरूप-यितुं प्रवृत्ता नादं बिन्दुञ्च विवृत्य विरताः। आदिमूलकारणस्वरूपम्, ततो बिन्दोः स्वरूपं मूलकारणेन तस्य सम्बन्ध इत्यादिकं न विवृत्तम्। अत्र च नाधुना विशेषेण विश्लेषयिष्यामि, अविकृतपरिणामवादे च दृष्टिं निधाय विवरितुं विनिवेदयामि विदुषः। शब्दार्थयोस्तादात्म्यम्, सर्वत्र च सहभानम्, व्यवहारानुसारं विशेषणविशेष्यभावः। विलक्षणोऽयं विशेष्यविशेषण-भावस्तादात्म्यञ्च। श्रोत्रेण ग्राह्यत्वे शब्द एव विशेष्यम्, घटं स्पृशतीत्यादौ शब्दो विशेषण-मेवार्थ एव विशेष्यम्। अत्र विशेषणस्य विशेष्यान्वयिनि अन्वयित्वं नास्ति।

**नैयायिका** अर्थं विषयं विना भानं न भवतीति मन्यन्ते, **वैयाकरणाः** शब्दं विना भानं न भवतीति। तथा च सर्वत्र शब्दार्थयोर्भानम्। उभयोरंशयोः शब्दार्थयोः परिज्ञानं विना पूर्णवस्तुज्ञानमिव न मन्यन्ते **व्यावहारिकाः**, शब्दमात्रे श्रुते अर्थस्य, अर्थे च दृष्टे शब्दस्य जिज्ञासा नियता एवमेव। एतादृशकाठिन्यमनुसन्धायाध्यासिकं तादात्म्यमिति नागेशभट्ट-महोदया व्यवस्थापयामासुः, किन्तु तत्रापि वैलक्षण्यम्। अधिष्ठानाध्यस्तयोर्हि आध्यासिकः सम्बन्धः, अध्यस्तापेक्षयाऽधिष्ठानस्याधिका सत्ता अपेक्षिता। अत्र तु समसत्ताकयोरध्यासः, अधिष्ठा-नाध्यस्तभावोऽपि विनिगमनाविरहादुभयोः। तथा च जगति प्रचलितान्यसम्बन्धापेक्षया विलक्षणयोः शब्दार्थयोः सम्बन्धस्य वैलक्षण्यमवसेयं नाम च यत् किमपि भवेत्।

अस्योपयोगम् अन्ये शास्त्रिणोऽपि कुर्वन्ति, यथा कारणमालाप्रकरणे रसगङ्गाधरे न्यायभाषया कार्यकारणभावनिरूपणपुरस्सरमुपस्थितौ शाब्दबोधे च शब्दार्थयोर्व्यवस्थितं भान-मुपपादितम्। एकस्यैवार्थस्य पर्यायान्तरेण बोधे शब्दविशेषणतया बोधवैलक्षण्ये जाते अर्थस्य प्रत्यभिज्ञा दृढा न भवति, शिथिला जायते। अर्थादर्थस्यैक्यमपसरति, ऐक्यानपसरणमथमिदो दृढतादात्म्यं विना न भवेत्। अतस्तत्र कथितपदत्वं गुणाय अवाकल्प्यत। आलङ्कारिकाध्वनि तु महान् सहायकोऽयं सिद्धान्तः। समानार्थकावपि कपालिपरमेशशब्दौ सुधाकरदोषशब्दौ च बलादेव विलक्षणविच्छित्तिकरौ।

ग्रन्थार्थसमन्वयायापि महास्त्रमयं वादः। साहित्यदर्पणे रसगङ्गाधरे च शब्दः काव्यमित्यायाति, काव्यप्रकाशे च शब्दार्थयुगलौ। शब्दार्थयुगलतायाः परित्यागाभावे क्व विरोधः? काव्यप्रकाशो विशेष्यविशेषणभावौ न विवृणोति, काव्यं शृणोतीत्यत्रार्थगुणकः

शब्दः श्रावणविषयः । क्वचिच्च शब्दगुणकोऽर्थो विषयः । अग्नेर्ढगिति पाणिनिसूत्रेण न निरर्थकाङ्ढका न वा शब्दानालिङ्गितादग्नेर्दाहः ।

( ६ ) व्याकरणनिर्माणप्रक्रियाज्ञानम्

पाणिनीयव्याकरणं परिशीलयतां विदुषां वैदिकलौकिकभाषयोः सहैव व्याकरणनिर्माणं तस्य गले पतितम् कदाचन तस्माच्चिरं प्राग् । एकैव भाषाऽऽसीत् । परं चिरकालाल्लौकिकी भाषा पृथक् कृताऽऽसीत्, यस्यानेकानि व्याकरणानि अनुगमकारीणि जातान्यभूवन् । जनभाषात्वेन व्यवहारक्षेत्रमवतीर्णा सा नित्यनूतना व्यराजत । परिवर्तनेन प्राचीनं व्याकरणं शिथिलं नूतनमन्यन्निर्मीयते स्म । एवमनेकानि व्याकरणानि तां निगडितुं वाञ्छन्ति स्म, परं सा अग्रे धावति स्म । तस्या धारा वाल्मीकितटमपि कियत् परित्यक्तवती । एतादृश्या भाषायाः सूत्रैर्बन्धनमासीत् कर्तव्यम् ।

वैदिक्याः परिवर्तनाभावेन अभङ्गुरैव तस्याः प्रक्रिया स्थापिता । सापि यदि लौकिकप्रक्रियातः पृथङ्निरूप्येत, महान् ग्रन्थराशिर्भवेत् । विदूरे च तिष्ठेत् संस्कृतज्ञेभ्यो वैदिकी भाषा । वाल्मीकिप्रभृतीनां प्राचीनार्षसाहित्येषु नृत्यन्ती इयमेव लौकिकीभाषा । परं तस्याः कश्चिदंशो न गृहीतः । यामाधुनिका आर्षं प्रयोगं निरङ्कुशाश्च कवीन् मत्वा समादधति । तत्परित्याग आसीत् कारणम् । भाषाया धारा भवति परिज्ञेया भाषाविदाम् । अतीते साहित्ये परिचलति वा साहित्ये समायाताः कतिपये शब्दा भवन्ति, अनुसरणीया व्याकरणनिर्मातॄणाम् । कीदृशी भाषाया धारा भविष्यति च काले कीदृशं भविष्यति धारायाः क्षेत्रम् ? तदानीमपि भाषानुगमो मम व्याकरणं मार्गप्रदर्शकं भवतु इत्यादिविज्ञानं समीहा च भवतो हृद्गते व्याकरणलेखकस्य ।

भाषापरिचयो हि विज्ञानं न समेषां भवति भाषया व्यवहरतां लिखतां कवयतां वा । कवित्वमन्यद् भाषानुगमात् । तथा च तादृशविज्ञाननिपुणः पाणिनिर्व्याकरणमेवं निर्ममौ यदद्यापि व्याख्यानोपव्याख्यानैर्न पूर्णं व्याख्यातम् । बहुलं भाषासमस्यां समादधाति च । पाणिनिः स्वसमयस्य भाषाप्रवाहम् अनुजगाम । तदनन्तरं कियता कालेन प्रवहन्ती भाषाधारा क्वचित् कृशताम्, क्वचिद्विपुलतां च प्राप्ता, तां कात्यायनो वार्त्तिककारः पाणिनिसूत्रैः समयोजयत् । ततोऽपि विपुले समये व्यतीते जातं कियत्परिवर्तनं पतञ्जलिरन्वगमत् । अनुगमनसमाधाने च मुनिद्वयस्य विशेषतो व्याख्यानेन अल्पे च नूतनवचोभिः । तेन मूलं पाणिनेरतिष्ठत्, पाणिनीयमेव व्याकरणम्, कात्यायनीयं पातञ्जलञ्च नाभवत् ।

इदं ममोपपादनम् ऐतिहासिकसरण्या भाषास्वभावपर्यालोचनया च । प्राचीने भारते विदूरव्यवहारस्य कठिनतया इतिहाससामग्री नाभवत् सुसङ्घटा । समुपस्थिते च विषये मनीषिणां मनांसि न तिष्ठन्ति क्रियां विना, किमपि कल्पयन्ति, प्रचारयन्ति, कवयन्ति च ।

यथा आद्यशङ्कराचार्यभगवताम् अनेके दिग्विजयाः कतिपयविरुद्धघटनाः काव्यगुणगुम्फिताः सरसा वाग्विलासा ऐतिहासिकत्वे मूलान्तरमपेक्षमाणाः, तथा मुनित्रयस्यापि चरितम् । तदधुना नान्वसरम् ।

अधुना च भाषाया अनुगमं विना हिन्दीभाषाया व्याकरणनिर्माणं दुर्दशाग्रस्तं प्रतिभाति । चिराद् बहूनि हिन्दीव्याकरणानि निस्सृतानि, कानिचन पुस्तकानि मम दृष्टिपथ-

मुपगतानि, तेषु हिन्दीभाषास्वभावपरिचयस्य न्यूनताऽपि संस्कृतव्याकरणस्य आंग्लभाषा-व्याकरणस्य च के केंऽशा अत्र ग्राह्या इति विषये सयत्ना अपि व्याकरणनिर्मातारो न सफला भाषास्वभावपरिचयं विना प्रतिभान्ति। एकं हिन्दीव्याकरणपुस्तकमवलोक्य जयपुर एव प्रायः पञ्चचत्वारिंशे गते ईशाब्दे अयोध्यासंस्कृतमिति पत्रेऽलिखम्, हिन्द्यां द्विकर्मकधातून् परिगणय्योदाहरणानि ददाति स्म। मम विचारे हिन्द्यां न द्विकर्मकधातूनाम् आवश्यकता, तदुदाहरणानां कारकान्तरैः सरला गतार्थता स्फुरति, तथा च संस्कृतानुकरणेनेदमनिष्टम्। एवम् आंग्लभाषाव्याकरणे 'रीच्' 'रीड' धातुद्वयं दृष्ट्वा हिन्द्यां 'पढ़ना' पढ़ानाधातुद्वयमकल्पयत्। तदपि न सम्यगभात्। पठनं पाठनमपि हिन्दया गृहीतम्। किं तत्रापि पठपाठौ द्वौ धातू स्याताम्। अतो हिन्द्यां प्रेरणाकृते धातुभेदो नाश्रयणीयः, प्रेरणायाः प्रत्ययार्थतयैव हिन्द्याः प्रक्रिया साधीयसी।

ऐषमो निबन्धमिमं लिखन्नेव हिन्दीव्याकरणपुस्तकमुच्चैः पठतो बालकस्य मुखाच्छ्रुतम्। 'द्वितीयाश्रितातीतपतित' इत्यादिसूत्रानुसारं कर्मकारकतत्पुरुषसमासवर्णनं हिन्द्याम्। आपाततो मनस्यभूद् न कर्मकारकत्वेन समेषां हिन्द्यां वर्णनं सम्यक्।

कानिचिदेव हिन्दीव्याकरणपुस्तकान्यापाततो दृष्टानि न सर्वाणि, अतोऽद्यापि मम मनसि निम्नाङ्कितः संशयो जागर्ति। छात्रैः 'अध्ययनान्न प्रमदितव्यम्' इत्यस्यानुवादे हिन्द्यां कर्तुः 'को' चिह्नं सङ्गृहीतं न वा केनापि व्याकरणनिर्मात्रा।

**( ७ ) सर्वशास्त्रोपकार:**

अनुवृत्त्या सन्निहितसङ्गतिरधिकारेण दूरसङ्गतिः प्रतिभाति, अन्यपदेनापि आसत्तिः कल्प्यते, एतादृशव्युत्पत्तिमूलकविशेषव्युत्पत्तिशालीश्रीवल्लभाचार्यमहाभागः श्रीमद्भागवतस्य सप्त अर्थान् व्यधात्। उत्सर्गापवादसामान्यविशेषशास्त्रव्युत्पत्त्या धर्मशास्त्रार्थावगमसामर्थ्यम्, विशेषशास्त्रार्थसङ्कुचितोत्सर्गशास्त्रोद्देश्यपरिज्ञानेन शास्त्रयोर्विरोधपरिहारः। पूर्वमीमांसामीमांस्या पूर्वनियमपरिसंख्यादिविधिविवेकः। रीतिश्चैषा न शास्त्रव्याख्या न एवोपयुज्यते, अपि तु निबन्धादिलेखने व्युत्पादने च। परस्परं सम्बद्धानां दशानामपि वाक्यानां महावाक्यत्वकल्पना महावाक्यार्थबोधश्चोद्देश्यविधेययोः सामान्यविशेषयोश्च परिज्ञानं विना न सम्भवतः। महावाक्यत्वासम्भवे च प्रबन्धस्य शीर्षकसूचितमेकोद्देश्यं वाक्यानां परस्परसङ्गतिश्च विहन्येत।

इदानीं संस्कृतभाषाया ह्रासात् परित्यक्ताऽपि व्याकरणसम्बधिपरिष्कारभाषा अतीवो-पयोगिनी कथमन्यथा व्याकरणबुधो नूतननिबन्धग्रन्थेषु धर्मशास्त्रीयेषु अधिकुर्वीत, रसगङ्गाधर-प्रभृतींश्चालङ्कारग्रन्थान् अध्यापयेत्। आसीद् हि समयश्चिरं रूढः---अल्पीयांसः साहित्ये परीक्ष्याः सर्वाधिकाश्च व्याकरणे वैयाकरणस्य नैकशास्त्रेष्वधिकारात्। साक्षात्कृतश्च छात्रावस्थायां लेखकेन व्याकरणपरिष्कारव्युत्पन्नो वैयाकरणोऽनधीतन्यायग्रन्थो दिनकरीं सम्यगध्यापयन्।

अलङ्कारशास्त्रेण तु व्याकरणस्य प्राचीनः सम्बन्धः। न केवलं ध्वनिकारकृतवैयाकरण-बुधेति समादरस्मरणेनैव, किन्तु अलङ्कारव्यवस्थायामप्याचार्यदण्डिवचो विविच्यताम्—

**कर्ता यद्युपमानं स्यान्न्यग्भूतोऽसौ क्रियापदे।**
**स्वक्रियासाधनव्यग्रो नालमन्यद् व्यपोहितम्॥**

**'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः'** इत्यादिमृच्छकटिकपद्य उपमावारणे व्यापार-मुख्यविशेष्यकशाब्दबोधवादिवैयाकरणसिद्धान्तेन ब्रूते—तिङर्थः कर्ता, उपमानं न सम्भवति, अङ्गकर्मकलेपनकर्तृसदृशं तम इत्याद्युपमाबोधस्यासम्भवात्। धात्वर्थलेपने आख्यातार्थकर्तु-र्विशेषणतया इवार्थसादृश्येऽन्वयस्याभावात्। व्याकरणानुशासनादरोऽपि दण्डिनो दर्शनीयः—

**केषाञ्चिदुपमाभ्रान्तिरिव श्रुत्येह जायते।**
**नोपमानं तिङन्तेनेत्यतिक्रम्याप्तभाषितम्॥**

सम्भावनामिवशब्दार्थमजानतः कस्यचिद् इवशब्देन सादृश्यार्थकत्वभ्रमो जायते। सोऽपि भ्रमो बलवत्तरः, न तिङन्तेनोपमानमस्तीति आप्तेन महाभाष्यकारपतञ्जलिना भाषितम् अतिक्रम्य जायते।

लिम्पतीत्यादिपूर्वपद्यविषय एवेयं कारिका धातोः कर्मणः समानकर्तृकादिच्छायामिति सूत्रे लुलुठिषते इव लुलुठिषते, पिपतिषतीव पिपतिषतीत्यादावचेतनेऽपि सादृश्यवशाद् भविष्यति सन्नित्यभिप्रायकं **'उपमानाद्वा सिद्धम्'** इति वार्त्तिकं खण्डयितुं न वा तिङन्तेनोपमानमस्तीति महाभाष्यम्। अत्र विशेषविवेचनं सागरविश्वविद्यालयीयसागरिकापत्रिकाप्रकाशिते **'उपमोत्प्रेक्षा-कलकलः'** नामनि लेखे वर्तते। अत्र तु महत् पाणिनीयं शास्त्रं बहुविषयपूरितं महावैदुष्य-सम्पादकं न कौमुदीभिर्न वा परीक्षानिविष्टैः कतिपयग्रन्थैर्ग्रन्थांशैर्वा गतार्थं जायते। सुबोधस्य कस्यचिदेव व्याकरणाचार्यस्य तत्राध्ययनाधिकारो जायते। बहवस्त्वनधिकारिण एव तिष्ठन्ति। यथात्रैव महाभाष्यमिदमनुशासनं वस्तुस्वभावानुवादकं वा? किमलङ्कारव्यवस्था अनुशासनाधीना वस्तुतन्त्रा वा? तिङन्तस्थले तिङर्थो धात्वर्थो वा? कीदृशो यत्रोपमायोग्यता नास्ति। एतादृश एव प्रसङ्गे रसगङ्गाधर आलङ्कारिकतन्त्रस्य स्वतन्त्रत्वेन वैयाकरणमतविरोधस्यादूषणतां ब्रूते, विधत्ते चाख्यातार्थकर्तृत्वम्।

दण्डी च व्याकरणमतमनुरुन्धे, समीहते च धात्वर्थस्य विधेयताम्। अत्र किं युक्तम्? आलङ्कारिकतन्त्रं तिङर्थप्राधान्याप्राधान्यविषये स्वतन्त्रं व्याकरणपरतन्त्रं वा? पण्डितराजस्य प्रौढोक्तिः सिद्धान्तोक्तिर्वा? ब्राह्मणवदधीते क्षत्रिय इत्यादावुपमानता स्वीकारात्, न वै तिङन्तेनोपमानमस्तीति भाष्यस्य कीदृशोऽर्थः? कूलं पिपतिषतीत्यादावाशङ्कायां सन् विहितः। आशङ्कासम्भावनेति कैयटो लिखति, संदेहभ्रमभिन्ना सम्भावना कीदृशं ज्ञानम्? इवशब्दप्रयोगे अध्यारोपस्तु वर्तते, रोदितीव गायति, नृत्यतीव गच्छति देवदत्त इति कैयटः। अध्यारोप उत्प्रेक्षेत्युद्द्योतः। रोदितीव गायतीत्यादावुपमा कथन्नोत्प्रेक्षा कथम्? तत्र प्रथमान्तार्थविशेष्यको बोधो न्यायसम्मतश्चमत्कारी धात्वर्थविशेष्यको वा? इत्यादयो बहवो विषया विवेचनीयाः सन्ति। विचारशक्तिः शास्त्ररसिकता चापेक्षिता। सम्भावनाज्ञानविषये मम लेखः प्रयागस्थ-संगमनी इति पत्रे प्रकाशितः।

नानारत्ननिधेरस्य पाणिनितन्त्रस्य अन्यदेकं निदर्शनं दृश्यताम्—सार्वधातुके यगिति सूत्रमहाभाष्ये अकर्मकधातोर्भाववाच्यक्रियायां सोपपादनं बहुवचनम्। उष्ट्रासिका आस्यन्ते, हतशायिकाः शय्यन्ते इति। उष्ट्राणां नानाविधान्यासनानि तत्सदृशानि आसनानि, हतानां

ताडितानां ताड्यमानानां वा नानाविधानि शयनानि, तत्सदृशशयनानि इति क्रमशो बोधः। विशेषणवशाद् धात्वर्थासनादीनि अनेकानि जातानि, तद्रूपा एव भावा अनेके तिङर्थं इति बहुवचनम् इत्युपपादनम् । प्रथमं बहुवचनमेव नूतनम्, ततोऽपि क्रियाविशेषणे स्त्रीलिङ्गप्रथमान्तबहुवचनस्य प्रयोगः । महावैयाकरणश्रीनागोजीभट्टः प्रथमेति ब्रूते । कस्तुलामर्हति अस्य व्याकरणस्य ? कियतीश्च व्याख्या अपेक्षते शास्त्रम् ? शास्त्ररसिकानां महाविदुषां श्रमं लभमानमिदं कियन्तं विस्तरं यास्यति ?

आख्यातार्थसङ्ख्यान्वयव्यवस्थायामपि कोलाहलः समुपस्थितः, आख्यातार्थे कर्तरि, कर्मणि वा आख्यातार्थसङ्ख्यान्वयं समीहन्ते भूषणादयः । अत्र आख्यातार्थकर्तृकर्मणोरभावः। कार्यकारणभावोऽपि तथैव तेषाम् । अत्राख्यातार्थभावे सङ्ख्यान्वयः, उपपादनेन धात्वर्थव्यापारस्यात्रानेकत्वम्, धात्वर्थव्यापारा एव भावा अत्राख्यातार्थः । किम् आख्यातोपस्थितेषु कर्तृ-कर्मभावान्यतमेषु सङ्ख्यान्वयः । अथवा सर्वत्र धात्वर्थव्यापार एव आख्यातार्थसङ्ख्यान्वयः। अन्यत्र धात्वर्थव्यापारस्यैक्येऽपि कर्तृकर्मरूपाश्रयभेदाद् व्यापारभेदात् । कर्तृकर्मगतसङ्ख्यां व्यापारे समारोप्य तत्र आख्यातार्थसङ्ख्यान्वय इति किं युक्तमिति वैयाकरणानां विचारणीयं व्यवस्थापनीयश्च विद्यते, परं द्वितीयपक्षे छात्रैरास्यताम् इत्यादौ बहुवचनवारणाय पराक्रमान्तरमपेक्ष्येत । नैतावद्भिरेव ग्रन्थैः शास्त्रस्य समाप्तिर्जायते । न्यायविदामपि न व्यवस्थितमार्गेण गतार्थता । इतरविशेषणत्वेन तात्पर्यविषये प्रथमान्तार्थे आख्यातार्थसङ्ख्यान्वयो व्यवस्थापितः । क्रियाविशेषणप्रथमान्तार्थो ह्यत्र क्रियाविशेषणमेव नेतराविशेषणम्। व्याकरणान्तररीत्या द्वितीयान्तत्वे बालकैरुष्ट्रासिका आस्यन्त इत्यादिवाक्येषु प्रथमान्तपदस्यैवाभावः । प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधस्य सिद्धान्तस्यात्रावश्यकत्वं वैयाकरणैरापादनीयम्।

महाभाष्यसन्दर्भार्थसमन्वयासक्तिविधुराणां यथाकथमपि पदलक्षणया वाक्यार्थोपपादनधुरन्धराणां न्यायमनीषिणां कस्यचित् पदस्य व्यर्थताप्रायतात्पर्यग्राहकताङ्गीकारपुरस्सरं प्रथमान्तार्थालिङ्गितधात्वर्थं प्रथमान्तपदेनोपस्थाप्य तत्राख्यातार्थसङ्ख्यान्वया अभिद्रावणम्। फलान्तर्भावेन सकर्मकक्रियया क्रियाविशेषणस्य कर्मतामुपपाद्य नागेशो भाष्यार्थानारूढतया अत्यजदिति त्वन्यत् । अस्य भाष्यसन्दर्भस्य सूचनां क्रियाविशेषणविभक्तिविमर्शप्रसङ्गेन पञ्चदशभ्यः प्रायो वर्षेभ्यः प्राग् अयोध्यास्थसंस्कृतं पत्रे गतपञ्चाब्धामेव काशीस्थे सूर्योदयपत्रे प्रादाम्, समापयामि चैतावतैव ।

मुनिवरविपिने का शेमुषीमन्थरामे,
नयपिकपरिज्ञानेऽचिन्त्यवल्लीविताने ॥
प्रतिपदमतिखिन्ना वस्तुलाभेऽपि दीना
विरमति सुभकामा प्राञ्जलिः सप्रणामा ॥



# विप्रतिषेधसूत्रस्य संज्ञाशास्त्रातिरिक्तविषयत्वमपि

डॉ० रामप्रसादत्रिपाठी
**प्राचीनव्याकरणदर्शनागमविभागाध्यक्षः**
**सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी ।**

आकडारीयसंज्ञाशास्त्रातिरिक्तविषयेष्वपि विप्रतिषेधसूत्रस्य प्रवृत्तिर्भवति, तत्र सन्ति बहूनि निदर्शनानि । तथा हि—

१. रामेभ्यः—अत्र "सुपि च" इति सूत्रेण[1] प्राप्तं दीर्घं बाधित्वा परत्वाद् **"बहुवचने झल्येत्"**[2] इति सूत्रेण एकारादेशः ।

अन्यत्रान्यत्रलब्धावकाशयोरेकत्र युगपत्प्राप्तिस्तुल्यबलविरोधरूपो विप्रतिषेधः । **'रामाय' रामाभ्याम्**–इत्यादौ दीर्घादेशः सावकाशः, **'रामेषु'** इत्यत्रैकारादेशः, राम+भ्यस् इत्यत्रोभयोर्युगपत्प्राप्तौ परत्वादेत्वम् । महाभाष्ये विप्रतिषेधोपपादनम्—भाष्येऽपि प्रयोगमिममुद्दिश्य विप्रतिषेधविचारः कृतो वर्त्तते । स चेत्थम्—द्वौ प्रसङ्गावन्यार्थौ, एकस्मिन् स विप्रतिषेधः । द्वौ प्रसङ्गौ यदाऽन्यार्थौ भवत एकस्मिंश्च युगपत्प्राप्नुतः, स विप्रतिषेधः क्व पुनरन्यार्थौ, क्व चैकस्मिन् युगपत् प्राप्नुतः ।

अन्यत्रापि भाष्ये विप्रतिषेधविचार इत्थं कृतः—

**"नावश्यं द्विकार्ययोग एव विप्रतिषेधः, किं तर्हि असम्भवोऽपि । स चास्त्यत्रासम्भवः, कोऽसावसम्भवः इह तावद् वृक्षेभ्यः प्लक्षेभ्य इति । एकः स्थानी द्वावादेशौ, न चास्ति सम्भवो यदेकस्य स्थानिनो द्वावादेशौ स्याताम्, इहेदानीम्–मेद्यति, मेद्यतः, मेद्यन्ति इति । द्वौ स्थानिनौ एक आदेशः । न चास्ति सम्भवो द्वयोः स्थानिनोरेक आदेशः स्यादित्येषोऽसम्भवः । सत्येतस्मिन्नसम्भवे युक्तो विप्रतिषेधः"** इति ।

अयमाशयः—द्वाभ्यां कार्याभ्यामन्यत्रान्यत्रलब्धावकाशाभ्यां योगोऽस्य स्थानिनः, स स्थानी विप्रतिषेधविषय इति कृत्वा विप्रतिषेधशब्देनाऽप्युच्यते । अत्रेदमपि अवधातव्यं यद् द्विकार्ययोग एव न हि विप्रतिषेधः, अपि तु असम्भवगर्भोऽपि ।

ननु राम+भ्यस् 'आ ए' इति रूपेण 'ए आ' इति रूपेण वा द्वयोर्दीर्घैत्वयोः सम्भवोऽस्त्येवेति चेत्, अत्रोच्यते—अनन्तरे यञादौ सुपि दीर्घादेशो विधीयते, अनन्तरे च झलादौ सुपि एकारादेशः । नहि द्वयोः स्वेन स्वेन निमित्तेनानन्तर्यं सम्भवति । 'राम+आ+ए+भ्यस्' इत्यत्राकारस्य नास्ति सम्भवो यञादौ सुपि अनन्तरे सति स्याद्, एकारेण व्यवधानात् । 'राम+ए+आ+भ्यस्' इत्यत्र आकारस्य तत्सम्भवेऽपि एकारस्य स्वनिमित्तानन्तर्यसम्भवो नास्त्येव, आकारेण व्यवधानात् ।

---

१. पा० सू० ७।३।१०२ २. पा० सू० ७।३।१०३
३. म० भा० १।४।२ ४. म० भा० १।१।३

यद्युच्यते—**'बहुवचने झल्येत्'** इत्यत्र 'झल्'प्रत्याहारग्रहणसामर्थ्येन भादौ सुपि भ्यसि एत्वं भविष्यति, अन्यथा सुप्येदित्येव सूत्रं कुर्यात्। सप्तमी बहुवचने सुपि, अतोऽङ्गस्यैकारः स्यादिति च सूत्रार्थः स्यात्—'रामेषु' इति निर्बाधं सिद्धं भवेत्। किं तावद् गुरुणा न्यासेन **'बहुवचने झलि'** इत्यनेन—इति। तत्रोच्यते संज्ञाद्वयविषये परस्याः प्राबल्यबोधनाय विप्रतिषेधसूत्रं भवताऽपि स्वीक्रियत एवेति संज्ञातिरिक्तविषयेऽपि तेनैव व्यवस्थायां क्लृप्तेन प्रमाणेन निर्वाहः, न तु सामर्थ्यकल्पनया। तत्र तु पूर्वप्रमाणबाधः कल्पनीयः स्यात्, यश्चातिजघन्यः, ज्ञानगौरवदोषयुक्तश्चेति अनन्यथा सिद्धमेतदुदाहरणम्। लाघवादराय बहुवचने स्म्येदित्यनुक्त्वा बहुवचने झल्येदित्युक्तं सूत्रकृता। अन्यथा सादौ भादौ बहुवचने सुपि, अतोऽङ्गस्यैकार इत्यर्थकं बहुवचने स्भ्येदिति सूत्रं कर्तव्यं स्यात्। तत्र च सकारभकारयोर्द्वन्द्वः स्यात्। पदद्वयप्रयुक्तं गौरवं स्यात्। झलग्रहणपक्षेऽपि यदि सामर्थ्यकल्पनया प्रवृत्तिः स्यात्, तर्हि पुनर्ज्ञानगौरवं बाधकल्पना च गले पतिता स्यात्।

२. **'राजन्'** शब्दात् सौ विभक्तौ **"हल्ङ्याब्भ्यो दीर्घात्"**[1] इति सुलोपः प्राप्तः। **"सर्वनामस्थाने चासम्बुद्धौ"**[2] इति उपधादीर्घश्च प्राप्तः, द्वयोरन्यत्र चरितार्थयोः परत्वादुपधादीर्घः। पुनः प्रसङ्गविज्ञानात् सुलोपः, ततः **"प्रत्ययलक्षणेन"**[3] पदत्वान्नलोपः। यद्यप्यत्र सुलोपे कृतेऽपि प्रत्ययलक्षणेनोपधादीर्घः सम्भवति; तथाऽपि अत्र पक्षे विप्रतिषेधसूत्रबाधः स्यात्। पुनः प्रत्ययलक्षणस्य साहाय्यमपेक्षितं स्यादिति शास्त्रबाधकल्पना, अनपेक्षितसाहाय्यकल्पना चेति दोषद्वयेनायं पक्षो न युक्तः।

३. **तिसृणाम्**—त्रिशब्दात् स्त्रीत्वविवक्षायामपि **"त्रेस्त्रयः"**[4] इति त्रयादेशः प्राप्तः। **"त्रिचतुरोः स्त्रियां तिसृचतसृ"**[5] इति तिस्रादेशः प्राप्तः। परत्वात् तिस्रादेशः। स्थानिवद्भावेन तिस्रादेशे त्रिशब्दत्वमादाय पुनस्त्रयादेशो न भवति। **"त्रयादेशे स्रन्तस्य स्थानिवत्त्व[6] प्रतिषेधः"** इति वार्त्तिकेन स्थानिवत्त्वनिषेधात्। भाष्यकृता तु **"सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव"** इति न्यायेन तद्वार्त्तिकं प्रत्याख्याय त्रयादेशो वारितः। विप्रतिषेधसूत्रं त्ववश्यं क्लृप्तमेवेति तस्य नियामकत्वपक्षे सिद्धेन सकृद्गतिन्यायेन व्यवस्थायां लाघवम्। वार्त्तिकमते त्वपूर्ववचनकल्पने गौरवं स्यात्।

४. **शिष्टात्**—अत्र 'शास् हि' इत्यवस्थायां हेः स्थाने **"तुह्योस्तातङ्"**[7] इति तातङादेशे प्राप्ते **"शा[8] हौ"** इत्यनेन हौ परतः शासः स्थाने शादेशे च प्राप्ते परत्वात् तातङादेशे कृते **"शास इदङ्हलोः"**[9] इति शास आकारस्येदादेशे कृते **"शासिवसिघसीनां च"**[10] इति सूत्रेण षत्वे ष्टुत्वे च[11] शिष्टादिति सिध्यति।

---

१. पा० सू० ६।१।६८
२. ६।४।८
३. १।१।६२
४. ७।१।५३
५. ७।२।९९
६. भा० वा० १।१।५३
७. भा० वा० १।१।५३
८. पा० सू० ७।१।३५
९. ६।४।३५
१०. ८।३।६०
११. ८।४।४१

यद्यपि तातङादेशे कृते तस्य स्थानिवत्त्वेन हित्वमादाय शाभावः पुनः प्राप्नोति, तस्य च **"लोडादेशे शाभावजभावधित्वहिलोपैत्वप्रतिषेधः[1]"** इति वार्त्तिकेन प्रतिषेधः कृतः, तथाऽपि भाष्यकृता सकृद्गतिन्यायेन तस्य वारणं विधाय तद्वार्त्तिकं प्रत्याख्यातम्[2]।

अत्र प्रतिषेधोपपादनम्—अस्मिन् प्रयोगे तातङ्शाभावयोर्युगपत् प्रवृत्तौ स्वस्वनिमित्तयोरानन्तर्यस्याभावरूपोऽसम्भवोऽस्त्येव, तादृशासम्भव एव विप्रतिषेधशास्त्रप्रवृत्त्युपयोगी। स्थानिवद्भावस्तु कार्यप्रवृत्त्युत्तरम्, न तु प्रवृत्तिकाल इति युगपदसम्भवः स्पष्ट एवेति भावः[3]।

अत्र विरोधोपपत्तये केनचिदुच्यते—**"शा हौ"** इत्यस्य सूत्रस्य हिशब्दाव्यवहितपूर्वस्य शासः स्थाने शादेशः कर्त्तव्य इति नार्थः, अपि तु शासः स्थाने हिशब्दाव्यवहितपूर्वत्वविशिष्टः शादेशः साधुरित्येवं रीत्या निमित्तस्य विधेयविशेषणता स्वीकर्त्तव्या। एवमेव **"तुह्योस्तातङ्"** इत्यस्यापि तुह्योः स्थाने धात्वव्यवहितपरत्वविशिष्टः तातङ् साधुरित्येवार्थः कार्यः। तथा सत्येव स्वस्वनिमित्तानन्तर्य्यासम्भवः, अन्यथा—उद्देश्यविशेषणत्वे तु युगपद् द्वयोः कार्ययोः सम्भवोऽस्त्येवेति[4]।

वस्तुतो हिशब्दाव्यवहितपूर्वत्वस्योद्देश्यविशेषणतैवोचिता, अन्यथा शास्तीत्यादौ हिपरकस्य शादेशस्यापत्तिः स्यात्। विधेयविशेषणत्वेऽपि प्राप्ताप्राप्तविवेकन्यायेन शादेश एव विधेयतापर्यावसानम्। हिशब्दाव्यवहितपूर्वत्वं तूद्देश्यदले एव प्रवेक्ष्यति। तस्य प्रत्यक्षसिद्धतयाऽपूर्वज्ञानविषयत्वाभावेन विधेयत्वासम्भवात्। प्राप्ताप्राप्तयोर्योऽशः प्राप्तो भवति, स न विधेयो भवति, अपि त्वप्राप्त एवांश इति भावः। एवं च निमित्तस्योद्देश्यविशेषणत्वेऽसम्भवो दुरुपपादः, विधेयविशेषणत्वे **"शास्ति"** इत्यादौ दोषः, आवृत्त्योभयविशेषणत्वे गौरवम्, अतो निमित्तस्य न क्वापि विशेषणता, अपि तूपलक्षणता इति कृत्वाऽसम्भवो न सङ्घटते।

अतस्तत्तच्छास्त्राणां स्वस्वविधेयघटितं साधु इति बोधानादितरदसाधु इत्यपि बोधनीयं स्यात्। तथा च शिष्टादित्यादौ **"शा हौ"** इति सूत्रेण 'शा हि' इत्यस्य साधुत्वम्, शास्तादित्यस्यासाधुत्वं बोध्यते। तुह्योरिति शास्त्रेण शास्तादित्यस्य साधुत्वम्, **'शा हि'** इत्यस्यासाधुत्वं बोध्यत इति परस्परविरोधः[5] स्पष्ट एव।

**५. हतात्**—हन्धातोर्लोटि मध्यमपुरुषैकवचने सिपि ह्यादेशे **'हन्तेर्जः'**[6] इति जादेशे तुह्योरिति तातङि च प्राप्ते परत्वात् तातङि कृते स्थानिवद्भावेन हित्वमादाय जादेशः प्राप्तः। **"लोडादेशे शाभावजभावधित्वहिलोपैत्वप्रतिषेधः[7]"** इति वार्त्तिकेन प्रतिषिद्धः। भाष्यकृता सकृद्गतिन्यायेन वारितः[8]। अपूर्ववार्तिककल्पनापेक्षयाऽत्रैव पक्षे लाघवम्।

**६. भिन्तात्**—भिद्धातोर्लोटि सिपि हौ **"हुझल्भ्यो हेर्धिः"**[9] इति ध्यादेशः प्राप्तः। तुह्योरिति तातङपि प्राप्तः। धिभावं बाधित्वा परत्वात् तातङ्। पुनः स्थानिवद्भावेन हित्व-

१. भा० वा० १।१।५६  २. म० भा० १।१।५६

३. म० भा० उद्योत १।१।५६  ४. परिभाषेन्दुशेखरः, भूतिटीका—२।४०। पृ० १५७

५. परिभाषेन्दुशेखरः २।४०  ६. पाणिनिसूत्र० ६।४।३६

७. महाभाष्य वा० १।१।५६  ८. म० भा० १।१ ५६

९. पा० सू० ६।४।८७

मादाय प्राप्तस्य धिभावस्य सकृद्गतिन्यायेनैव धिभावो[1] वारितः, अपूर्ववचनकल्पनाऽपेक्षयाऽप्ययमेव पक्षः श्रेयान् ।

७. **कुरुतात्**—कृधातोर्लोटि सिपि हौ **"तनादिकृञ्भ्य उः"**[2] इति उप्रत्यये गुणः **"अत उत्सर्वधातुके"**[3] इति उकारादेशः, **"उतश्च प्रत्ययादसंयोगपूर्वात्"**[4] इति हिलोपे प्राप्ते, तं वाधित्वा तुह्योरिति परत्वात् तातङि कुरुतादिति । तातङि हित्वमादाय प्राप्तो हिलोप उक्तवार्त्तिकेन वार्यते । भाष्ये तु सकृद्गतिन्यायेन वारितः[5] । वार्त्तिककल्पनापेक्षया भाष्योक्त एव पन्थाः श्रेयान् ।

८. **स्तात्**—असधातोर्लोटि सिपि हौ **"श्नसोरल्लोपः"**[6] इति अकारलोपे **"ध्वसोरेद्धावभ्यासलोपश्च"**[7] इति प्राप्तमेत्वं वाधित्वा परत्वात् तातङ् । अत्रापि तातङि हित्वमादाय एत्वस्य पुनः प्राप्तिरुक्तवार्त्तिकेन वारिता, भाष्यकृता तु सकृद्गतिन्यायेनात्रापि वारणं कृतम्[8], तदेव युक्तम् अन्यथाऽपूर्वस्य वार्त्तिकस्य करणीयता स्यात् ।

९. **प्रियक्रोष्टूनि**—प्रियः क्रोष्टा येषु तानि प्रियक्रोष्टूनि । प्रियक्रोष्टुशब्दात् प्रथमाबहुवचने जसि शयादेशे **"तृज्वत्क्रोष्टुः"**[9] इति तृज्वद्भावे प्राप्ते **'नपुंसकस्य झलच[10]'** इत्यनुवृत्तौ । **"इकोऽचि विभक्तौ"**[11] इति नुमि च प्राप्ते **"वृद्धचौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन"**[12] इति वार्त्तिकेन नुमि प्रियक्रोष्टूनीति ।

यद्यपि नुमि सति यदागमा इति न्यायेन[13] नुम्विशिष्टे क्रोष्टुशब्दान्ताङ्गत्वमादाय तृज्वद्भावः प्राप्नोति । एवमेव तृज्वद्भावे कृतेऽपि स्थानिवद्भावेनाङ्गत्वमादाय नुम् प्राप्नोति, तथाऽपि आगमादिप्रवृत्त्युत्तरमेव सा प्राप्तिः, न तु आगमादिप्रवृत्तिकाले । तत्काले तु युगपदसम्भवो वर्त्तत एव । सति तु न तृज्वद्भावः, निर्दिश्यमानस्य क्रोष्टुशब्दस्य नुमा व्यवधानेन परत्वाभावात् ।

१०. **वारीणाम्**—वारिशब्दादामि **"ह्रस्वनद्यापो नुट्"**[14] इति नुटि प्राप्ते, **"इकोऽचि विभक्तौ"**[15] इति नुमि च प्राप्ते **'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन'**[16] इति वचनेन नुटि **"नामि"**[17] इति दीर्घे णत्वे च सति वारीणाम् ।

अत्र नुटि सत्यजादिविभक्त्यानन्तर्यबाधः । नुमि तु ह्रस्वान्ताङ्गबाध इत्यसम्भवोऽस्त्येवेति ।

---

१. भा० वा० १ । १ । ५६
२. पा० सू० ३ । १ । १९
३. पा० सू० ६ । ४ । ११
४. पा० सू० ६ । ४ । १०६
५. म० भा० १ । १ । ५६
६. पा० सू. ६ । ४ । १११
७. पा० सू० ६ । ४ । ११९
८. म० भा० १ । १ । ५६
९. पा० सू० ७ । १ । ९५
१०. पा० सू० ७ । १ । ७२
११. पा० सू० ७ । १ । ७३
१२. पा० सू० म० भा० १ । ४ । २
१३. परिभाषेन्दुशेखरः—१ । ११
१४. पा० सू० ७ । १ । ५४
१५. पा० सू० ७ । १ । ७३
१६. म० भा० १ । ४ । २
१७. पा० सू० ६ । ४ । ३

वस्तुतस्तु वारि-नाम् इति लक्ष्यस्यैवोभाभ्यां साधुत्वबोधने उभयोरपूर्वबोधकत्वाभावेन कस्य विधायकत्वम्, अपरस्यानुवादकत्वं कल्पनीयमिति कस्यानुवादकत्वं कल्प्यमिति विमर्शेऽनुवादकत्वस्य लोके निकृष्टतया स्वीकारेण विरोधः स्फुट[1] एव ।

११. 'चतुर्' शब्दात्स्त्रीत्वविवक्षायां जसि **"त्रिचतुरोः स्त्रियां तिसृचतसृ"**[2] इति चतस्रादेशः प्राप्तः [3]**"चतुरनडुहोरामुदात्तः"** इति सूत्रेणामागमश्च प्राप्तः । परत्वाच्चतसरि कृतेऽपि तत्र स्थानिवत्त्वेन चतुर्शब्दत्वे पुनः आम् प्राप्तः **"आम्विधौ त्रन्तस्य प्रतिषेधो वक्तव्यः"**[4] इति वार्तिकेन वार्यते ।

भाष्ये तु सकृद्गतिन्यायेन वारितः[5] इत्यपूर्ववचनकल्पनापेक्षायां लाघवमस्ति । यद्यपि अद्यापि चतसरि सति आमः प्राप्तिः, सत्यामि तन्मध्यपतितन्यायेन [6]चतस्रादेशस्यापि प्राप्तिः । तथाऽपि आदेशागमयोः प्रवृत्त्युत्तरमेव सा, न तु तयोः प्रवृत्तिकालेऽपीति द्वयोः कार्ययोर्यौगपद्येनासम्भवः ।

१२. **कर्त्तव्यम्**—कृधातोस्तव्यप्रत्यये[7] गुणे[8] च कर्त्तव्यमिति । अत्र **"धातोः"**[9] इत्यनेन सूत्रेण 'कृ' इत्यस्यान्त उदात्तः प्राप्तः, प्रत्ययस्वरेण[10] तव्यप्रत्ययस्याद्युदात्तश्च प्राप्तः, तत्र विप्रतिषेधसूत्रेण प्रत्ययस्वरस्यैव प्राबल्यं दर्शितं [11]भाष्ये ।

प्रकृतिस्वरः 'पचति'—इत्यत्र चरितार्थः । प्रत्ययस्य पित्त्वेनानुदात्तत्वात्[12] । प्रत्ययस्वरश्च यत्रानुदात्तप्रकृतिस्तत्र सावकाशः, यथा समत्वम्, सिमत्वमिति । अत्र हि समसिमेत्यनुच्चानि इति फिट्स्वरेण अनुदात्तता । यद्यपि प्रत्ययस्वरस्य न परत्वम्, अपि तु पूर्वत्वम्, तथाऽपि परशब्दस्येष्टवाचित्वात् तत्सङ्ग्रहः ।

यद्यपि सति शिष्टस्वरबलीयस्त्वमिति नियमेन प्रत्ययस्वरो बलवान् भविष्यति पश्चाद् धातुस्वरेऽनुदात्तं पदमिति अनुदात्त एव स्यादिति विप्रतिषेधसूत्रस्यावश्यकता नास्ति, तथाऽपि शब्दपरविप्रतिषेधं दर्शयितुमस्योपक्रमो विहितो भाष्ये । शब्दपरविप्रतिषेधः सम्भवति—यत्रोभयोर्युगपत् प्रसङ्ग इति [13]भाष्य उक्तम्, प्रदीपकृता च स्पष्टीकृतम्—**'विप्रतिषेधे परं कार्यमित्यत्र नायं नियमो लक्षणयोर्विप्रतिषेधे परं भवतीति किं तर्हि एकलक्षणविहितयोरपि कार्ययोर्विप्रतिषेधे परशब्दविषयत्वाद् भवतीत्येषोऽर्थ आश्रीयते'** इति । पुनश्चाग्रेऽत्रैव सूत्रे प्रदीपे—**'गतिकारकोपपदात् कृदुत्तरपदप्रकृतिस्वरो नञ्स्वरेण बाध्यते'** इति । **तत्रोद्योतो** गतिकारकेति परत्वात् कृदुत्तरपदप्रकृतिस्वरे प्राप्ते वचनम् । एवमेव प्रसङ्गं वहति प्रासङ्ग्यः, प्रसज्यते इति **'प्रसङ्गः'**

---

१. प० शे० भूति–पृष्ठ १५७ । १३
२. पा० सू० ७ । २ । ९९
३. पा० सू० ७ । १ । ९८
४. म० भा० १ । १ । ५६
५. म० भा० १ । १ । ५६
६. परिभाषेन्दुशे०–३ । ९०
७. पा० सू० ३ । १ । ९६
८. पा० सू० ७ । ३ । ८४
९. पा० सू० ६ । १ । १६२
१०. पा० सू० ३ । १ । ३
११. म० भा० ६ । १ । १५८
१२. पा० सू० ३ । १ । ४
१३. म० भा० ६ । १ । १५८

'कर्मणि घञ्'[1] थाथादिस्वरेणान्तोदात्तत्वं[2] 'तदर्हतीति [3]यत्प्रत्ययः', "तित्स्वरितम्" इति [4]स्वरितः। तत्र चायमुदात्तस्वरिते सति लुप्यते।

न च स्वरिते सति अनुदात्तं [5]पदमेकवर्जमित्यकारस्यानुदात्तत्वे कृते अनुदात्तस्यैव लोपः स्यादिति वाच्यम्, यस्येति चेति लोपरूपे परत्वेन बाधकत्वात्। स्पष्टं चैतत् [6]सर्वं भाष्ये। एतैः प्रसङ्गैरपि अतिरिक्तविषयता सुष्ठु लभ्यते।

**१३. मेद्यति**—मिद्धातोर्लटि श्यनि तस्यापित्सार्वधातुकत्वेन ङित्वाद् लघूपलधगुण-निषेधे **"मिदेर्गुणः"**[7] इत्यनेन गुणे सति **'मेद्यति'** इति।

अत्र **"इको गुणवृद्धी"**[8] इति सूत्रसहकारेणेकारस्य गुणः प्राप्तः। **"अलोऽन्त्यस्य"** इति सूत्रेण दकारस्य। तत्र विप्रतिषेधसूत्रबलेनेको गुण इति सूत्रस्य प्राबल्यमिति इकारस्यैव गुणे **'मेद्यति'** इति।

अत्र परशब्दस्येष्टवाचितया इष्टस्य पूर्वस्येको गुण इत्यस्य बाधकत्वं भवति।

अत्र द्वौ स्थानिनौ इकारदकारौ। एक आदेश इति नास्ति सम्भवो यद् द्वयोः स्थानिनोरेक आदेशः स्यादिति विप्रतिषेधः।

अयमाशयः—मिदेरित्येका षष्ठी, सा च यद्यवयवायवविभावसम्बन्धे, तर्हि इकारस्य गुणः प्राप्तः। यदि तु स्थानषष्ठी, तदाऽलोऽन्त्यस्येति दकारस्य तत्प्राप्तिः, तत्र नास्ति सम्भवो यद् युगपत् उभयोर्गुणः स्यात्। युगपद्वाक्यार्थद्वयबोधाभावात् स्पष्टं चैतद् [9]भाष्ये।

**१४. रामैः**—राम भिस् इत्यत्र [10]**"अतोभिस् ऐस्"** इत्यनेनैसादेशः क्रियते। स च [11]**"आदेः परस्य"** इत्यनेनादेरलो भकारस्य स्थाने प्राप्तः, "[12]**अनेकाल्शित्सर्वस्य"** इत्यनेन सर्वस्य स्थाने प्राप्तः, तत्र विप्रतिषेधे परं कार्यमिति परत्वात् सर्वादेशो भवति।

आदेः परस्येत्यस्यावकाशः [13]**"द्व्यन्तरुपसर्गेभ्योऽप ईत्"** द्वीपम् अन्तरीपम्। द्विगता आपो यस्मिंस्तद् द्वीपम्। अन्तर्गता आपो यस्मिंस्तदन्तरीपम्। द्वि+अप इत्यत्रेकारादेशः, अपशब्दस्यादेरलोऽकारस्य। एवमेवान्तरीपमित्यत्रापि। अनेकाल्शित्सर्वस्यावकाशः **"अस्तेर्भूः"**[14] भविता भविष्यति, **"किमः कः"**[15] कः 'कौ' के इति।

**१५. अष्टौ**—अष्टन्शब्दाज्जसि **"अष्टाभ्य औश्"**[16] इति सर्वस्य जस औशादेशेऽष्टाविति सिद्धम्। अत्राप्यादेः परस्येत्येतत्परत्वात् सर्वादेशेन बाध्यते। यतश्च आदेः परस्येत्यस्या-

---

१. पा० सू० ३।३।१९
२. पा० सू० ६।२।१४४
३. पा० सू० ४।४।७६
४. पा० सू० ६।१।१८५
५. पा० सू० ६।१।१५८
६. म० भा० ६।१।१५८
७. पा० सू० ७।३।८२
८. पा० सू० १।१।३
९. म० भा० १।१।३
१०. पा० सू० ७।१।९
११. पा० सू० १।१।५४
१२. पा० सू० १।१।५५
१३. पा० सू० ६।३।९७
१४. पा० सू० २।४।५२
१५. पा० सू० ७।२।१०३
१६. पा० सू० ७।१।२१

वकाशः पूर्वोक्त एव शित्सर्वस्येत्यस्यावकाशः **"इदम्[1] इश्"** इतः । भाष्यकृता—**'अलोऽन्त्यस्य'[2]** इत्यस्यापवादभूतौ **'आदेः परस्य'**, **'अनेकाल्शित्सर्वस्य'** इति द्वौ योगौ । तत्रानयोर्द्वयोः परस्परं युगपत्प्राप्तौ परत्वात् सर्वादेशो भविष्यतीति स्पष्टमुक्तम्[3] ।

१६. **भवतात्**—भूधातोर्लोटि सिपि ह्यादेशे तुह्योरिति तातङि भवतादिति सिद्धम् । अत्र तातङन्त्यस्य स्थाने भवतु **"ङिच्च"[4]** इति सूत्रबलात्, तन्न समीचीनम्, तातङि ङित्करणं सावकाशं गुणवृद्धिप्रतिषेधाय सम्प्रसारणकार्याय च । इण्धातोः इतात्, युधातोर्युतात्, वच्धातोरुक्तात् इत्येतानि त्रीणि क्रमेणोदाहरणानि । अनन्यार्थङित्त्वेषु अनङादिषु चरितार्थः ङिच्चेत्ययं विधिः सम्भवत्प्रयोजनङकारे तातङ्यपि मन्थरं प्रवर्त्तमानः सर्वादेशेन बाध्यते । इहोत्सर्गापवादयोः समबलत्वात् अपवादो यद्यन्यत्र चरितार्थस्तर्हि परेण बाध्यत इति सिद्धान्तात् स्पष्टं चैतत् सर्वं भाष्ये, प्रदीपे उद्द्योते[5] च ।

१७. गुणवृद्ध्यौत्त्वतृज्वद्भावेभ्यो नुम् पूर्वविप्रतिषेधेन **"नुमचिरतृज्वद्भावेभ्यो नुड्"** इत्येवं बहूनि पूर्वविप्रतिषेधपरकाणि वचनानि भाष्यकृता विप्रतिषेधसूत्रे परशब्दस्येष्टवाचित्वमभ्युपेत्य प्रत्याख्यातानि[6], ततोऽपि ज्ञायते—यत्संज्ञाशास्त्रातिरिक्तस्थलेऽपि भवति। अस्य सूत्रस्यानन्यथा सिद्धा प्रवृत्तिरिति ।

१८. यथा **"ण्वुल्तृचौ"[7]** इति सूत्रेण ण्वुल्प्रत्ययस्य तृच्प्रत्ययस्य च विधानं धातुमात्रात् पर्यायेण क्रियते, कारकः, कर्त्ता इति, तथैव क्वचिच्चरितार्थयोरेकस्मिन् प्रयोगे युगपदुभयोः कार्ययोरसम्भवेन पर्यायेण शास्त्रद्वयस्य प्राप्तौ विप्रतिषेधसूत्रं नियमार्थमिति सकृद्गतिन्यायस्य सिद्धिः ।

यथा तुल्यबलयोरेकः प्रेष्यो भवति, स तयोः पर्यायेण कार्यं करोति, यदा तमुभौ युगपत्प्रेषयतः, नानादिक्षु च कार्ये भवतः । तदोभयोर्न करोति, यौगपद्यासम्भवात् । तथा शास्त्रयोर्लक्ष्यार्थयोः क्वचिल्लक्ष्ये यौगपद्येन प्रवृत्त्यसम्भवादप्रतिपत्तौ प्राप्तायामिदं परविध्यर्थम् । तत्र कृते यदि पूर्वस्य प्राप्तिरस्ति, तर्हि तदपि भवत्येवेति पुनः प्रसङ्गविज्ञानसिद्धिः[8] विप्रतिषेधसूत्रस्य परमेव भवतु इति नियामकत्वपक्षे सकृद्गतिन्यायः; परं भवतु इति विधायकत्वपक्षे पुनः प्रसङ्गविज्ञानन्यायश्च भाष्ये स्पष्टं प्रतिपादितः । ततोऽपि नूनं ज्ञातुं शक्यते यत्संज्ञाशास्त्रातिरिक्तविषयेऽपि अस्य शास्त्रस्य प्रवृत्तिरन्यथाऽऽकडारीयसंज्ञाविषये सकृद्गतिन्यायस्य सम्भवेऽपि पुनःप्रसङ्गविज्ञानस्य क्वापि नावसरः ।

किञ्च यदि संज्ञातिरिक्तविषये नाभिप्रेयात् भगवान् भाष्यकारः, तर्हि उक्तं न्यायद्वयमतिरिक्तविषये कथं प्रवर्त्तयेत् ।

---

१. पा० सू० ५।३।३  
२. पा० सू० १।१।५२  
३. पा० सू० १।१।५४  
४. पा० सू० १।१।५३  
५. म० भा० १।१।५३  
६. म० भा० १।४।२  
७. पा० सू० ३।१।१३३  
८. (क) परिभाषेन्दुशेखर २।४०  (ख) म० भा० १।४।२

१९. **पूर्वत्रासिद्धे** नास्ति विप्रतिषेधोऽभावादुत्तरस्येति[१] वार्त्तिकमपि तस्यातिरिक्त-विषयकत्वे प्रमाणम् । अन्यथा त्रैपादिकविषय आकडारीयसंज्ञानामभावात् सुतरां विप्रतिषेध-सूत्रस्याप्राप्तौ सिद्धायां तत्समाधानायोत्तरस्य शास्त्रस्याभावात् ( असिद्धत्वात् ) इति हेतू-पन्यासगर्भं वार्त्तिकं व्यर्थमेव स्यात् ।

२०. किञ्च तस्य संज्ञामात्रविषयकत्वे विप्रतिषेधपदस्य स्वारस्यमेव न सङ्गच्छेत, संज्ञाद्वयस्यैकत्र लक्ष्ये युगपत्प्राप्तावपि परस्परं विरोधाभावात् । विरोधस्तु भवति तत्प्रयुक्त-कार्ययोः, यथा **'गां दोग्धि पयः'** इत्यत्र । **"अकथितं च"**[२] इत्यस्य प्रत्याख्यानपक्षे 'गोः' इत्यस्य **"कर्तुरीप्सिततमम्"**[३] इत्यनेन कर्मसंज्ञा प्राप्ता, **"ध्रुवमपायेऽपादानम्"**[४] इत्यनेनापादानसंज्ञा च प्राप्ता । तत्र द्वयोः संज्ञयोः समकालं प्रवृत्तिर्भवतु नाम, नास्ति विरोधशङ्कालेशः । विरोधस्तु तत्प्रयुक्तयोः पञ्चमीद्वितीययोरेव, यौगपद्यासम्भवात् ।

किञ्च परं कार्यमिति कार्यपदोपादानेनापि तस्यातिरिक्तविषयता गम्यते, यतो हि कार्यं द्विविधमत्र दृश्यते—

(१) एकं साक्षाल्लक्ष्यसंस्कारोपयोगि, यथा—यण्गुणवृद्ध्यादि ।

(२) द्वितीयं तु परम्परया तदुपयोगि, यथा—संज्ञादि । तत्र द्विविधस्यापि सङ्ग्रहायेदं कार्यपदम्, अन्यथा परं कार्यमित्यनुक्त्वा परा संज्ञा इत्येव वदेत् ।

२२. किञ्च संज्ञामात्रविषयकत्वे विप्रतिषेधे परं कार्यमित्यस्य स्थाने **'सावकाशत्वे परा'** इत्येव लघुसूत्रं कर्त्तव्यं स्याद् द्वयोः संज्ञाशास्त्रयोः सावकाशत्वे परा संज्ञा भवेत् इत्यर्थश्च स्यात् । एकस्या निरवकाशत्वे तु सैवेति चार्थादायास्यति ।

२३. श्रीनागोजिभट्टेनोक्तं लघुशब्देन्दुशेखरे—**'यद्यपीयं परिभाषा, तथाऽपि कार्यग्रहणेन कार्यमात्रग्रहणात् तस्मिन्निति तस्मादिति परिभाषयोरपि व्यवस्थापिका'**[५] अनेन स्पष्टमायाति संज्ञातिरिक्तविषयताऽस्य । भाष्येऽपि उभयनिर्देशे पञ्चमीनिर्देशस्य बलवत्त्वं विप्रतिषेधसूत्रेणैव दर्शितमस्ति[६] ।

२४. किञ्च—

**संज्ञा च परिभाषा च विधिर्नियम एव च ।**
**अतिदेशोऽधिकारश्च षड्विधं [७]सूत्रमुच्यते ॥ इति ।**

षड्विधसूत्रेषु परिभाषासूत्रत्वमस्याभ्युपेयते । परिभाषासूत्रलक्षणञ्च सङ्केतग्राहक-भिन्नत्वे सति अप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकशास्त्रजन्यबोधे सहकारित्वेन मुन्यभिप्रेतत्वम्[८] इति । एतल्लक्षणं चात्र तदैव सङ्घटते, यदेदं विधिशास्त्रं सम्यगुपकुर्यात् ।

१. म० भा० ८।२।१
२. पा० सू० १।४।५१
३. पा० सू० १।४।४९
४. पा० सू० १।४।२४
५. लघुशब्देन्दुशेखरस्वादिसन्धिविप्रतिषेधसूत्रम् ।
६. म० भा० १।१।६५ ।
७. लघुशब्देन्दुशेखरः, दीपकव्याख्याश्रीपर्वतीयकृता मङ्गलश्लोके ।
८. परिभाषेन्दुशेखरः, भूतिटीका उपक्रमे पृ० ४ ।

यतश्चोक्तलक्षणे शास्त्रपदेन मुख्यतया विधिशास्त्रमेव गृहीतमस्ति, तज्जन्यो बोध इकः स्थाने यण् स्यादचि संहितायां विषये इत्याकारकश्चेत् तदा चायमप्रामाण्यज्ञानानास्कन्दितः, व्यवहितादावपि प्रवृत्तिसम्भवात् ।

अतः **'अजव्यवहितपूर्वस्येकः स्थाने यण् स्यात् संहितायां विषये'** इत्यादिबोधः प्रमात्मक इति अप्रामाण्यज्ञानानास्कन्दितः, किन्तु न हि लक्ष्यधार्मिकः, नापि साधुत्वप्रकारकः, अतश्च अजव्यवहितपूर्वस्येकः स्थाने यण् संहितायां विषये यण्घटितं च लक्ष्यं साधु, तच्च प्रयोक्तव्यमिति वाक्यार्थबोधः[1] करणीयः । स च बोधो लक्ष्यधर्मिकः साधुत्वप्रकारकश्चेति तादृशे बोधेऽव्यवहितपूर्वत्वलाभाय **"तस्मिन्निति निर्दिष्टे पूर्वस्य"**[2] इति सूत्रस्योपयोगितेति परिभाषासूत्रत्वं तस्य सङ्गच्छते । तथैव विप्रतिषेधसूत्रस्यापि परिभाषासूत्रत्वं विधिशास्त्रजन्यबोधे उपकारकतयैव भविष्यति, अतोऽपि हेतोरस्य संज्ञाशास्त्रातिरिक्तविषयत्वं सिद्धं भवति ।

एवं च विधिशास्त्रेण सह वाक्यैकवाक्यतयैवेयं परिभाषा कार्यं प्रवर्तयति । यथा **'रामेभ्यः'** इत्यत्र **"बहुवचने झल्येत्"** इत्यनेन सह वाक्यैकवाक्यतां गत्वा एत्वं सम्पादयति । वाक्यैकवाक्यता च 'उपजीव्योपजीवकभावापन्नबोधप्रयोजकत्वरूपा'[3] प्रकृते च बहुवचने झल्येदित्यस्य बोध उपजीवकः । विप्रतिषेधसूत्रस्य बोध उपजीव्यस्तत्प्रयोजकत्वं द्वयोर्वाक्ययोरित्यलं बहूक्त्या । शुभं भूयात् ।

---

१. पा० सू० ६।१।७७

२. मनोरमाशब्दरत्ने सभापतिशर्मसम्पादिते, पृ० १३८

३. पा० सू० १।१।६६



# पाणिनीयकातन्त्रव्याकरणयोर्गौरवलाघवसमीक्षा

डॉ० जानकीप्रसादद्विवेदः
अनुसन्धानसहायकः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी ।

व्याकरणाध्ययनस्य बहूनि प्रयोजनानि[१] महाभाष्यकारेण पतञ्जलिना व्याख्यातानि। तत्र रक्षा–ऊह–असन्देहप्रभृतीनि कानिचित् प्रयोजनानि वैदिकशब्दव्यवहारोपयोगीनि, लघु–दशम्यां पुत्रस्य–दुष्टः शब्दः–प्रभृतीनि कानिचिच्च लौकिकशब्दव्यवहारसाधकानि। लौकिक-शब्दव्यवहारसाधकं लाघवं द्विविधं स्मर्यते—शब्दकृतम् अर्थकृतं चेति। यथा अच्–हलादि-शब्दप्रयोगे शब्दकृतं लाघवं पाणिनीये, स्वर-परोक्षा-श्वस्तनीप्रभृतिप्रयोगे अर्थकृतं च लाघवं कातन्त्रे समाद्रियते। शब्दकृतेन लाघवेन सत्यपि शब्दसंक्षेपे ज्ञाने गौरवमेव प्रवर्तते। दृश्यते च महर्षिपाणिनिना स्वरवर्णानामवबोधाय 'अच्' इति, व्यञ्जनवर्णानां च बोधाय 'हल्' इति संज्ञाशब्द उपदिष्टः। परं तज्ज्ञानाय माहेश्वरसूत्रस्मरणपूर्वकं 'हलन्त्यम्[२], आदिरन्त्येन[३] सहेता' इति सूत्रद्वययोजनादिकं यत् क्रियते, तेन गौरवमेवाधीयते। लोकप्रसिद्धव्यवहारस्याति-क्रमणमपि जायते। एतेन अर्थलाघवेन सत्यपि शब्दगौरवे ज्ञाने लाघवमेव दृश्यते। पाणिनिना न केवलं शब्दप्रयोगे एव प्रसिद्धः सरलश्च मार्ग उपेक्षितः, किं च शब्दसाधुत्व-प्रक्रियायामपि विलम्बेनावबोधिका शैली काचित् समारब्धा।

'भवांश्चकार'प्रभृतिप्रयोगसिद्धये पाणिनिः नकारस्य रुकारादेशम्[४], विसर्जनीयम्[५], सकारम्[६], शकारम्[७], अनुनासिकम्[८], अनुस्वारं[९] च विदधाति। कातन्त्रकारस्तु एकेनैव सूत्रेण[१०] अनुस्वारपूर्वकं नकारस्य शकारादेशं विधाय महल्लाघवं प्रसाधयति। अत्र महद्-भूतया पाणिनीयप्रक्रियया किं विज्ञानमारच्यत इति न जानीमः। परमेतत् सत्यमेव प्रतीयते यत् पाणिनीयव्याकरणं नास्ति सारल्येन संस्कृतभाषाव्यहारसाधकम्, किं च ततः पूर्वमैति-ह्यादिकं यत् किञ्चित् प्रायेण प्रसिद्धमासीत् तत् सर्वमष्टाध्याय्यां संगृहीतम्। अतस्तदर्थं सर्ववेदपारिषदत्वकथनमपि[११] संगच्छते।

केषाञ्चिदाधुनिकानामिदमभिमतं यद् अद्यत्वे पाणिनीयमेव व्याकरणं प्रमाणतया अङ्गीक्रियते, तेनापाणिनीयं किञ्चिदपि न रोचतेतराम् इति।

---

१. म० भा०—पस्प० ।
२. अ० १।३।३
३. अ० १।१।७१
४. नश्छव्यप्रशान् (८।३।७)
५. खरवसानयोर्विसर्जनीयः (८।३।१५)
६. विसर्जनीयस्य सः (८।३।३४)
७. स्तोः श्चुना श्चुः (८।४।४०)
८. अत्रानुनासिकः पूर्वस्य तु वा (८।३।२)
९. अनुनासिकात् परोऽनुस्वारः (८।३।४)
१०. नोऽन्तश्चछयोः शकारमनुस्वारपूर्वम् (१।४।८)
११. सर्ववेदपारिषदं हीदं शास्त्रम् (म० भा० २।१।५८; ६।३।१४)

अत्रोच्यते—शब्दानामर्थविशेषेषु साधुत्वे पाणिनेः प्रामाण्यमस्ति, न तु शब्दसाधुत्वदर्शनार्थं समादृतायां प्रक्रियायाम्। यथा पितृशब्दाद् द्वितीयाबहुवचने 'पितरः' इति पदमपाणिनीयम्, तदर्थं सूत्रनिर्देशस्याभावात्। कातन्त्रे[1] तु 'पितरस्तर्पयामास विधिदृष्टेन कर्मणा' इति श्लोकं कश्चिदुद्धृत्य द्वितीयाबहुवचनेऽपि 'पितरः' इति पदं साध्यते। तत्र पाणिनेः प्रामाण्यं काममास्थेयम्, परं कल्पितप्रक्रियाविषये इदमेव वक्तुं युक्तं यद् यत्र सूत्रविध्यादिनिर्देशप्रयुक्तं लाघवं स्यात् सैव प्रक्रिया समादरणीया। लाघवमस्ति प्रयोजनं व्याकरणाध्ययनस्य। सरलेन केनचित् प्रक्रियान्तरेण कार्ये सम्पन्ने महाभाष्येऽयमुच्यते—'सिध्यत्येवमपाणिनीयं तु भवति'[2] इति। तस्यायमभिप्रायः—पाणिनिना यो विधिर्निर्दिष्टस्तस्यायुक्तत्वाद् विध्यन्तरस्य च युक्तत्वाद् विध्यन्तरमेवोपादेयं भवति, सति च अपाणिनीयविधेरुपादेयत्वे प्रकृतं कार्यमपाणिनीयमेवोपपद्यते। तत्र बुधैर्यो विधिरभिमतः स ग्राह्य इति। अयं च नाभिप्रायो यत् पाणिनीयमेव निर्देशजातं ग्राह्यम्, तदितरच्च हेयम् इति।

पस्पशाह्निके निर्दिष्टेभ्यो व्याकरणाध्ययनप्रयोजनेभ्यो भिन्नं प्रयोजनमष्टाध्याय्या व्याहृतं भाष्यकारेण "पृषोदरादीनि यथोपदिष्टम्" (अ० ६।३।१०९) इति सूत्रं व्याचक्षमाणेन। तच्च वर्तते—'शिष्टज्ञानार्था चेयमष्टाध्यायी' इति। साधुशब्दप्रयोक्तारो भवन्ति शिष्टास्ते च आर्यावर्तनिवासिन एवेति भाष्यकारो वक्ति। आर्यावर्तावधिश्च बोधायनाचार्यसम्मतो[3] भाष्यकारेण[4] दर्शितः, तेन च विनशनक्षेत्रात् प्राग्वर्ती कालकवनाच्च प्रत्यग्वर्ती हिमगिरि–विन्ध्ययोरन्तरालस्थश्च देश आर्यावर्तनाम्ना गृह्यते। अनेन प्रयोजनकथनेन तत्र च देशिकावधिनिर्धारणेनेदमायाति—आर्यावर्तनिवासिभिः शिष्टैर्यथा साधुशब्दा उच्चार्यन्ते तथैव तेषां शब्दानां साधुत्वमङ्गीक्रियते। एवमार्यावर्तनिवासिनां शिष्टानां साधुशब्दविषयकं यज् ज्ञानं तज्ज्ञानमन्येषामपि स्यादिति अष्टाध्यायीग्रन्थस्य रचनाया प्रयोजनम् इति। एतेन आर्यावर्तदेशे एव शिष्टैः प्रयुक्तानां शब्दानामत्र साधुत्वं दर्शितं पाणिनिना इत्यपि वक्तुं शक्यते।

साधुशब्दप्रयोगेण धर्मावाप्तिर्भवतीति भाष्यकारादेरुपदेशः—

एवमिहापि समानायामर्थावगतौ शब्देन चापशब्देन च धर्मनियमः क्रियते–शब्देनैवार्थोऽभिधेयः, नापशब्देनेति। एवं क्रियमाणमभ्युदयकारि भवतीति (म० भा० पस्प०)।

**"वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः"** ( वा० प० ३।३।३० )।

शब्दस्य साधुत्वपरिज्ञानाय च किञ्चिद् व्याकरणमाश्रीयते। तत्र विषये व्याकरणाध्ययनस्य लघुरूपप्रयोजनसत्त्वाद् यत्र व्याकरणे शब्दसाधुत्वप्रक्रियायां लाघवं दर्शितं भवेत्,

---

१. क० च० २।१।६६।
२. म० भा०, पस्प०, पृ० ६९; १।१।१।
३. प्र० १, अ० १, ख० २, सू० १०।
४. कः पुनरार्यावर्तः? प्रागदर्शनात् प्रत्यक्कालकवनाद् दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम्। एतस्मिन्नार्यनिवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद् विद्यायाः पारगास्तत्र भवन्तः शिष्टाः (म० भा० ६।३।१०९)।

तदेव व्याकरणमुपादेयं वर्तते, तदितरच्च ( पाणिनीयम् ) विलम्बेन विस्तरेण च कार्यस्य बोधकत्वात् तथा नोपादेयं भवति ।

केचिद् विद्वांस एवं भणन्ति—व्याकरणं वेदाङ्गमुच्यते, एतेन यस्मिन् व्याकरणे वैदिकशब्दा न साधिताः सन्ति, न तद् व्याकरणं भवति वेदाङ्गम् । कातन्त्रादिषु पाणिनिपरवर्तिषु व्याकरणेषु वैदिकशब्दा न साधिता इति कृत्वा वेदाङ्गत्वं तेषां नोपपद्यते, वेदाङ्गत्वाभावे च कातन्त्रादीनि व्याकरणानि न प्रमाणभूतानि न चापि तान्यध्येतव्यानि इति । अध्ययनेन तेषां न वेदाङ्गाध्ययनफलप्राप्तिरित्यर्थः ।

अत्रेदमवगन्तव्यम्—'देवास-जभार'प्रभृतयो वैदिकशब्दा अल्पीयांस एव, तदपेक्षया भूयांसो लौकिकशब्दाः सन्ति । वैदिकसम्प्रदायस्तु अविच्छेदेनैव प्रवर्तते, अविच्छिन्ने च सम्प्रदाये शिष्टास्तेषां शब्दानां साधुत्वमविकलभावेनावगच्छन्त्येव, तत्सकाशादन्येऽपि जिज्ञासवः शब्दसाधुत्वमवबोद्धुं प्रभवन्ति । किञ्च वेदेऽपि लौकिका एव शब्दा भूयस्त्वेन प्रयुक्ताः सन्ति, येषां साधुत्वान्वाख्यानं पाणिनिना कातन्त्रकारादिभिश्च क्रियते । एवं पाणिनीयव्याकरणस्य यदि वेदाङ्गत्वमसंशयमङ्गीक्रियते, तर्हि लौकिकमात्रशब्दसाधुत्वान्वाख्यानपरस्य कातन्त्रादेरपि न वेदाङ्गत्वहानिः । तस्मात् कातन्त्रादीन्यपि अध्येतव्यान्येव, न तु वेदाङ्गत्वाभावभिया तानि उपेक्षणीयान्येव । कातन्त्रवृत्तिकारेण दुर्गसिंहेनोक्तमपि वैदिकशब्दसंग्रहाभावस्य हेतुविषये—

**वैदिका लौकिकज्ञैस्तु ये यथोक्तास्तथैव ते ।**
**निर्णीतार्थास्तु विज्ञेया लोकात् तेषामसंग्रहः ॥**

( कात० वृ० १।१।२३ ) इति ।

संक्षेपेणैव शब्दसाधुत्वाववोधः स्यादिति प्रयोजनेन विरचिते कातन्त्रव्याकरणे लघुभूता शब्दसाधुत्वान्वाख्यानप्रक्रिया काचिद् दर्शिता । यया व्यापारान्तरेषु व्यापृतचेतसां धनिनां वणिजामीश्वराणामपि बोधो द्रुतं भवितुमर्हति । उक्तं च—

**छान्दसाः स्वल्पमतयः शास्त्रान्तररताश्च ये ।**
**ईश्वरा वाच्यनिरतास्तथालस्ययुताश्च ये ॥**
**वणिजस्तृष्णादिसंसक्ता लोकयात्रादिषु स्थिताः ।**
**तेषां क्षिप्रं प्रबोधार्थमनेकार्थं कलापकम् ॥**

( व्याख्यानप्रक्रिया १।१५,१६ ) इति ।

एतेनोद्देश्यकथनेन स्पष्टमवगम्यते संस्कृतभाषाया विकासाय प्रसाराय वा कातन्त्रस्याध्ययनं पर्याप्तम् । पाणिनीयं तु प्राच्यभारतीयसंस्कृति–ऐतिह्य–वैदिकशब्दसाधुत्वज्ञानार्थं चाध्येयम् ।

उक्तकथनस्य स्पष्टाभिव्यक्तये पाणिनीय-कातन्त्रयोः सन्धिप्रकरणे दर्शिताः काश्चित् प्रक्रिया लोकव्यवहारश्च सन्ति समीक्षणीयाः, येन पाणिनीयपरवर्तिनः कस्यचिद् व्याकरणस्य प्रक्रियोत्कर्षं विदन्तु वैयाकरणाः । तेन च 'अद्यत्वे पाणिनीयं व्याकरणं प्रमाणम्' इति विषये काचिन्नवीनापि स्यादभिव्यक्तिरिति धिया किञ्चिद् विवरीतुमिष्यते । तथाहि—

## १. वर्णसमाम्नायः

**पा०**— अ इ उण्, ऋ ऌक्, ए ओङ्, ऐ औच्, ह य व रट्, लण्, ञ म ङ ण नम्, झ भञ्, घ ढ धष्, ज ब ग ड दश्, ख फ छ ठ थ च ट तव्, क पय्, श ष सर्, हल्।

**कात०**—अ आ, इ ई, उ ऊ, ऋ ॠ, ऌ ॡ, ए ऐ, ओ औ, अनुस्वारः ( ं, ँ ), विसर्जनीयः ( : ), जिह्वामूलीयः (×), उपध्मानीयः (ꣳ, ꣴ, ω), क ख ग घ ङ, च छ ज झ ञ, ट ठ ड ढ ण, त थ द ध न, प फ ब भ म, य र ल व, श ष स ह, क्ष।

**स०**— चतुर्दशसु शिवसूत्रेषु पठिता द्वाचत्वारिंशद् वर्णाः पाणिनीयव्याकरणेऽभिमताः। एषु हकारस्य द्विरावृत्त्या, वकारस्य रकारात् ह-य-व-र-लवर्णानां च कादिभ्यः पूर्वं पाठो लोकप्रसिद्धपाठक्रममतिक्रम्य वर्तते। एतेषां वर्णानाम् 'अच्-हल्' प्रभृतिसंज्ञाव्यवहारोऽपि लोकव्यवहारमतिक्रामति। प्रक्रियानिर्वाहाय कृतस्यास्य कृत्रिमव्यवहारस्य सत्स्वपि णत्वादिप्रयोजनेषु लोकव्यवहारातिक्रमणं नार्थबोधे किञ्चित् सौकर्यं विदधातीति अर्थादिनिर्णये लोकव्यवहारस्य प्रामाण्यमङ्गीकुर्वतां शाब्दिकानां मनांसि समुद्वेजयत्येव स कृत्रिमव्यवहारः।

अनुस्वार-विसर्ग-जिह्वामूलीय-उपध्मानीयानां कृतेऽपि व्यवहारे वर्णसमाम्नाये पाठाभावाद् अयोगवाहास्ते उच्यन्ते। अयुक्ता वर्णसमाम्नायेऽपठिताः सन्तः कार्यं वहन्तीति प्रयोजनवशात्। दीर्घप्लुताः स्वरा न पठ्यन्ते, येन शिक्षाग्रन्थे[१] निर्दिष्टा एकविंशतिस्वराः सवर्ण[२]-संज्ञाज्ञानसमनन्तरमेव विज्ञायन्ते।

कातन्त्रीयवर्णसमाम्नाये द्विपञ्चाशद् वर्णाः काश्मीरकसंस्करणेऽभिमताः, एकोनपञ्चाशच्च वङ्गीयसंस्करणे। तत्र जिह्वामूलीय–उपध्मानीय-क्षकारवर्णा न पठ्यन्ते। अत्र पाठक्रमो लोकव्यवहारं नातिक्रामति। लोकव्यवहारानुसारिण एव वर्णसमाम्नायस्य पाठात् तद्बोधाय सूत्रं प्रणीतम्—"सिद्धो वर्णसमाम्नायः" (कात० १।१।१) इति। अत्र सिद्धशब्दः प्रसिद्धार्थकः। प्रसिद्धिश्च प्रायेण लोकव्यवहारमपेक्षते। अत्र स्वरेषु प्लुता न पठिता इति ते 'अनुपदिष्ट-' शब्देन बोध्यन्ते। अनुस्वार[३]-विसर्ग[४]-जिह्वामूलीय[५]-उपध्मानीयानां[६] पाठान्नास्ति तेषामयोगवाहत्वम्, किं च योगवाहत्वमेव। [७]क्षकारश्च व्यञ्जनद्वयसंयोगेन निष्पन्नानां वर्णानामवबोधाय निदर्शनार्थमिह पठितः। एतेषां वर्णानां [८]स्वर-[९]व्यञ्जनप्रभृतिभिर्लोकप्रसिद्धसंज्ञाभिरेवास्मिन् व्याकरणे व्यवहारः क्रियते।

---

१. स्वरा विंशतिरेकश्च ( पा० शि०, श्लो० ४ )
२. तुल्यास्यप्रयत्नं सवर्णम् ( १।१।९ ), अणुदित्सवर्णस्य चाप्रत्ययः ( १।१।६९ )
३. अं इत्यनुस्वारः ( कात० १।१।१९ )
४. अः इति विसर्जनीयः ( कात० १।१।१६ )
५. × क इति जिह्वामूलीयः ( कात० १।१।१७ )
६. ꣴ प इत्युपध्मानीयः ( कात० १।१।१८ )
७. द्र०—क० च०, पञ्जी।
८. तत्र चतुर्दशादौ स्वराः ( कात० १।१।२ )
९. कादीनि व्यञ्जनानि ( कात० १।१।९ )

एवमकृत्रिमं लोकव्यवहारं परित्यज्य कृत्रिमव्यवहारस्य समाश्रयणेन पाणिनीये न किञ्चित् सौकर्यं प्रतीयते। तदपेक्षया लोकव्यवहारानुसारिणा कातन्त्रीयवर्णसमाम्नायेनार्थावबोधे प्रक्रियानिर्वाहे च सौकर्यमेवानीयते।

## २. लोकव्यवहारस्य प्रामाण्यम्

**पा०**— (क) तदशिष्यं संज्ञाप्रमाणत्वात्, लुब्योगाप्रख्यानात्, प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्, कालोपसर्जने च तुल्यम्, ( १।२।५३,५४,५६,५७ )।

(ख) पृषोदरादीनि यथोपदिष्टम् ( ६।३।१०९ )।

**कात०** – लोकोपचाराद् ग्रहणसिद्धिः ( १।१।२३ )

**स०**— (क) व्याकरणस्य वेदाङ्गत्वाद् वेदे च लौकिक–वैदिकोभयविधशब्दानां प्रयोगदर्शनात् पाणिनिना लौकिकवैदिकोभयविधशब्दानां साधुत्वस्यान्वाख्यानाय सूत्राणि पठितानि। तत्र "प्रथमानिर्दिष्टं समास उपसर्जनम्" ( १।२।४३ ) इत्यनेनोपसर्जनसंज्ञा, 'लुपि युक्तवद् व्यक्तिवचने" ( १।२।५१ ) इत्यनेन लुपि सति लिङ्गसंख्ययोः प्रकृतिवद्भावः, "जनपदे लुप्, वरणादिभ्यश्च" ( ४।२।८१, ८२ ) इत्यादिभिर्लुब् विधीयते। परं योऽर्थो लोकतः सिद्धस्तस्य साधुत्वान्वाख्यानाय सूत्रं नावश्यकमित्यभिप्रेत्य तत्तत्सूत्रप्रत्याख्यानमपि निर्दिदेश पाणिनिः। "तदशिष्यं संज्ञाप्रमाणत्वात्...कालोपसर्जने च तुल्यम्' (१।२।५३,५४,५६,५७) इत्येतैः सूत्रैः।

(ख) येषु पृषोदरप्रभृतिषु समासशब्देषु लोपागमवर्णविकाराः क्वचिद् दृश्यन्ते, परं तत्साधनाय किञ्चित् सूत्रं न वर्तते तेषामपि शिष्टोच्चरितत्वात् साधुत्वं स्यादित्येतदर्थम् "पृषोदरादीनि यथोपदिष्टम्" ( ६।३।१०९ ) इति पाणिनीयं सूत्रम्। पृषोदरादिगणे पठिताः शब्दाः प्रायेण पञ्चधा सन्ति। तथाहि—१. कौ जीर्यते इति कुञ्जरः। अत्र नकारवर्णस्यागमः। २. हिनस्तीति सिंहः। अत्र आद्यन्तयोर्वर्णयोर्व्यत्यासः। ३. षड् दन्ता अस्य षोडन्। अत्र षकारस्योकाररूपो वर्णविकारः। ४. पृषद् उदरं यस्येति पृषोदरः। अत्र तकारवर्णस्य विनाशः। ५. मह्यां रौतीति मयूरः। अत्र रुधातो रमणार्थेनातिशयेन योगः।

निरुक्तशास्त्रे शब्दानां पञ्च निर्वचनप्रकारा उपादीयन्ते। तत्र ये शब्दा व्युत्पाद्यन्ते ते पृषोदरादिगणेऽत्र संगृह्य साधवो विज्ञाप्यन्ते। काशिकाकारेण ते निर्वचनप्रकारा निर्दिष्टाः। तथाहि—

**वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।**

**धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥** ( का० ६।३।१०९ ) इति।

कातन्त्रे लौकिका एव शब्दा अन्वाख्यायन्ते। एवमपि तस्य वेदाङ्गत्वमक्षुण्णमेव। वेदेऽपि बहूनां लौकिकानामेव शब्दानां प्रयोगसत्त्वात्, लौकिकानां चात्रान्वाख्यानात्। पाणिनीयापेक्षया अल्पतन्त्रे कातन्त्रे निपाताव्ययोपसर्गोपसर्जनादिसंज्ञा न व्याख्याताः, न चापि "जनपदे लुप्, वरणादिभ्यश्च" ( ४।२।८१,८२ ) प्रभृतिपाणिनीयसूत्रवद् निर्देशः कश्चित् कृतः। तेषामनुक्तानां लोकादेव=शिष्टव्यवहारादेव साधुत्वमवगन्तव्यम्, तदर्थं सूत्राणि नापेक्ष्यन्ते।

शिष्टाश्च द्विविधाः, एके शास्त्रकाराः, अपरे च कस्याश्चिद् विद्यायाः पारगा आर्यावर्त-वासिनः। ते यथा शब्दान् उच्चारयन्ति तथैव तेषां साधुत्वम्। शिष्टा हि भावविदो ब्रह्मतत्त्व-साक्षात्कारवन्तो भवन्ति। एवमत्र कातन्त्रे येषां शब्दानां साधनाय सूत्राणि न प्रणीतानि तेषां लौकिकशब्दानाम्, अनुपदिष्टानां वैदिकशब्दानां च साधुत्वबोधनं शिष्टाधीनं मन्यते। वैदिक-शब्दानामल्पीयस्त्वाद् वैदिकपरम्परायाश्चानवच्छिन्नत्वात् तेषां शब्दानां साधुत्वप्रकारं विदन्त्येव शिष्टाः, ततश्चानभिज्ञैरपि वेदितव्यास्ते इति कातन्त्रवृत्तिकारो दुर्गसिंहः समाख्यातवान्—

**वैदिका लौकिकाश्चैव ये यथोक्तास्तथैव ते।**
**निर्णीतार्थास्तु विज्ञेया लोकात् तेषामसंग्रहः॥** (१।१।२३) इति।

अत्रेदमवगन्तव्यम्—पाणिनिना उपसर्जन-युक्तवद्भावादिकार्यमुपदिश्य ततस्तस्या-शिष्यत्वं निर्दिश्य ग्रन्थगौरवमेव कृतम्। यतो हि येऽर्था लोकतः सिद्धाः, तेषां साधुत्वबोधनाय सूत्रप्रणयनरूपयत्नो व्यर्थ एवाभिमतः। कातन्त्रे लोकव्यवहारादेव सिद्धा अर्था न व्याख्याता-स्तदर्थमेव सूत्रम्—"लोकोपचाराद् ग्रहणसिद्धिः" इति। अत्र व्याख्याकारैः कातन्त्रानुक्ता निपाताव्ययादयोऽर्थाः प्रदर्श्यन्ते। एतेन कातन्त्रनिर्देशः समीचीनः प्रतीयते।

कश्चिदत्रेत्थमूहते—विषयस्यादावुल्लेखे सत्येव तस्याशिष्यत्वकथनं युज्यते। एतस्मादेव हेतोः पाणिनिना उक्तः पन्था आश्रित इति। इदमवधेयम्—कालमपरिभाष्यैव स काल-व्याख्यानमशिष्यं मनुते—"कालोपसर्जने च तुल्यम्" (१।२।५७) इति। एवमुपसर्जनादि-विषयेऽपि तत्तत्सूत्रप्रणयनमन्तरैव अशिष्यत्वनिर्देशः कर्तुं शक्यत एव। तेन तदीयाशिष्यत्व-निर्देशो गौरवाधायक एव।

## ३. सवर्णदीर्घः

**पा०**—एकः पूर्वपरयोः (६।१।८४), अकः सवर्णे दीर्घः (६।१।१०१)।

**कात०**—समानः सवर्णे दीर्घीभवति परश्च लोपम् (१।२।१)।

**उदा०**—देव+अरिः=देवारिः, नदी+ईहते=नदीहते, शिशु+उदयः=शिशूदयः।

**स०**— उभयत्र प्रक्रियावैषम्यं वर्तते। पाणिनीये अवर्णादिद्वयस्य स्थाने एको दीर्घाकारादिरूप आदेशो जायते। कातन्त्रे च पूर्ववर्त्त्येवावर्ण आकाररूपमाप्नोति, परवर्ती च अवर्णो लुप्यते। एवं पाणिनीयकातन्त्रयोः कार्यद्वयवशात् साम्येऽपि एकेनैव सूत्रेण कार्यद्वय-निर्देशात् कातन्त्रे लाघवमेव वक्तुं शक्यते। किं च अकार-अकारयोः, अकार-आकारयोः, आकार-अकारयोः, आकार-आकारयोर्वा स्थाने आकाररूप-एकादेश-करणापेक्षया पूर्ववर्तिनः अकारस्य आकारस्यैव वा दीर्घादेशकरणे परवर्णस्य च लोप-विधाने स्वारस्यं वर्तते, ह्रस्वाकारस्यैव दीर्घादि-अष्टादशभेदसत्त्वात्।

## ४. गुणविधिः

**पा०**—आद् गुणः (६।१।८७)।

**कात०**—अवर्ण इवर्णे ए, उवर्णे ओ, ऋवर्णे अर्, ऌवर्णे अल् (१।२।२–५)।

उदा०—रमा + ईशः = रमेशः, गङ्गा + उदकम् = गङ्गोदकम् ।

स०— पाणिनेरयं विधिरेकादेशरूपः, पूर्वपरयोर्वर्णयोः स्थाने निष्पद्यते । अवर्णेवर्णयोः स्थाने एकारः, अवर्णोवर्णयोः स्थाने च ओकार एकादेशः प्रवर्तते ।

कातन्त्रे तु पूर्ववर्ती अवर्ण एव एकार-ओकार-अर्-अल्रूपेषु अन्यतमं रूपं प्राप्नोति, इवर्णादयः परवर्तिनस्तु लुप्यन्ते । एवं कातन्त्रे एतद्विध्यर्थं प्रणीतेन सूत्रचतुष्टयेन यद्यपि शब्दगौरवं प्रतीयते, तथापि पाणिनीये अच्पदानुवृत्तिः, एकादेशाधिकारप्रवर्तनम्, सावर्ण्यविधिचिन्तनमित्यादि कार्यं ततोऽपि गुरुतरं प्रतिभातीति कातन्त्रप्रक्रिया सरला सुबोधा चेत्यवगन्तव्यम् । कातन्त्रे सूत्रचतुष्टयस्य पृथङ् निर्देशः, "अवर्ण इवर्णे ए" ( १।२।२–५ ) इत्यादावयादिसन्धिकरणाभावश्च स्पष्टप्रतिपत्तये कृत इति वदन्ति व्याख्यातारः ।

## ५. वृद्धिविधिः

पा०—वृद्धिरेचि ( ६।१।८८ ) ।

कात०—एकारे ऐ ऐकारे च, ओकारे औ औकारे च ( १।२।६,७ ) ।

उदा०—सा + एषा = सैषा, तव + ओदनम् = तवौदनम् ।

स०— अत्रापि गुणप्रक्रियावत् पाणिनीये एकादेशाधिकारे विधेरस्य विहितत्वाद् अवर्ण-एकारयोः, अवर्ण-ऐकारयोः, अवर्ण-ओकारयोः, अवर्ण-औकारयोर्वा स्थाने एको वृद्ध्यादेशः प्रवर्तते । कातन्त्रे तु पूर्ववर्ती अवर्ण एव एकार-ऐकारयोः परत ऐकारम्, ओकार-औकारयोश्च परत औकारं प्राप्नोति । एवं कातन्त्रप्रक्रियायां सारल्यमवगम्यते ।

## ६. यण्विधिः

पा०—इको यणचि ( ६।१।७७ ) ।

कात०—इवर्णो यमसवर्णे न च परो लोप्यः, वमुवर्णः, रमृवर्णः, लम् लृवर्णः ( १।२।८-११ ) ।

उदा० दधि + अत्र = दध्यत्र, नदी + एषा = नद्येषा ।

स०— पाणिनीये यद्यपि एकेनैव सूत्रेण इ–उ–ऋ–लृवर्णानां क्रमेण 'य्-व्-र्-ल्' इत्येते आदेशाः प्रवर्तन्ते । परं तदनुष्ठानाय इक्–यण्–अच्प्रत्याहारज्ञानम्, इकः ( इ–उ–ऋ–लृवर्णानाम् ) षट्षष्टिमात्राणां यणश्च ( य्–व्–र्–ल्वर्णानाम् ) सप्तमात्राणां विचारः, "यथासङ्ख्यमनुदेशः समानाम्" ( १।३।१० ) इति सूत्रप्रवृत्तिश्चेति सर्वं समाहृत्य गौरवाधायकमेव संजायते । एतदपेक्षया कातन्त्रीयसूत्रनिर्देशे सारल्यं स्पष्टतरमेव । एवं पाणिनीये शब्दसंक्षेपेणार्थबोधे गौरवमेव दृश्यते, कातन्त्रे च शब्दाधिक्येऽपि अर्थबोधे लाघवमेव, कातन्त्रे सर्वत्रार्थलाघवस्यैवाभिप्रेतत्वात् ।

## ७. अयादिविधिः

पा०—एचोऽयवायावः ( ६।१।७८ ) ।

कात०—ए अय्, ऐ आय्, ओ अव्, औ आव् ( १।२।१२–१५ ) ।

**उदा०**—नयति, नायकः, लवणम्, गावः ।

**स०**— पाणिनीयप्रक्रियानुसारेण 'एच्' प्रत्याहारे क्रमेण समाविष्टानाम् 'ए–ओ–ऐ–औ' इति चतुर्णां वर्णानाम् "यथासंख्यमनुदेशः समानाम्" ( १।३।१० ) इति परिभाषया 'अय्–अव्–आय्–आव्' आदेशाः प्रवर्तन्ते । कातन्त्रे तु लोकप्रसिद्धपाठापेक्षया क्रमेण एकारादेः अयाद्यादेशाः सूत्रचतुष्टयेन विहिताः, येन यथासंख्यविधानं तत्र नापेक्ष्यते, लोकव्यवहारे प्रसिद्धस्य वर्णपाठक्रमस्य चातिक्रमणमपि न भवति । एतेन कातन्त्रीय-प्रक्रिया सुखेन शब्दसाधिकेति अवगम्यते ।

## ८. पूर्वरूपम्

**पा०**—एङः पदान्तादति ( ६।१।१०९ ) ।

**क.त०**—एदोत्परः पदान्ते लोपमकारः ( १।२।१७ ) ।

**उदा०**— तेऽत्र, पटोऽत्र ।

**स०**— अत्र पाणिनिः "एकः पूर्वपरयोः" ( ६।१।८४ ) इत्यधिकारे पूर्वरूपं विदधाति, तेन अकारः पूर्ववर्तिनि एकारे ओकारे चात्मरूपमन्तर्भावयति, एवमेकारे ओकारे च वर्त-मानस्याकारस्यावबोधाय 'ऽ' एतच्चिह्नमर्वाचीनैर्लेखकैर्योज्यते । कातन्त्रकारस्तु अत्र परवर्तिनोऽकारस्य लोपं निर्दिशति । लोपनिर्देशेऽस्मिन् लाघवं सारल्यं च स्पष्टमेव संनिहितमस्ति ।

## ९. प्रकृतिभावः

**पा०**— ईदूदेद् द्विवचनं प्रगृह्यम्, अदसो मात्, निपात एकाजनाङ्, ओत् ( १।१।११,१२,१४, १५ ) । प्लुतप्रगृह्या अचि नित्यम् ( ६।१।१२५ ) ।

**कात०**—ओदन्ता अ–इ–उ–आ निपाताः स्वरे प्रकृत्या, द्विवचनमनौ, बहुवचनममी, अनुप-दिष्टाश्च ( १।३।१-४ ) ।

**उदा०**—अग्नी एतौ, माले इमे, अहो आश्चर्यम्, इ इन्द्रं पश्य, अमी अश्वाः ।

**स०**— पाणिनीयेऽत्र पूर्वं प्रगृह्यसंज्ञा प्रवर्तते, तदनु तेषां प्रगृह्यसंज्ञकानां प्रकृतिभावः । कातन्त्रे प्रगृह्यसंज्ञामन्तरैव ओदन्तनिपातादीनां प्रकृतिभावो निर्दिष्टः । कातन्त्रीयवर्णसमाम्नाये प्लुतवर्णा न पठिता इत्यपठितत्वात् तेषामवबोधाय 'अनुपदिष्ट' शब्दो व्यवह्रियते ।

संज्ञाव्यवहारस्य सुखार्थत्वेऽपि पाणिनीयप्रक्रिया न सुखावहा । तत्र 'मात्' पदोपादा-नेन 'अमुकेऽत्र' इत्यत्र प्रगृह्यसंज्ञाया वारणं भवतीत्येतादृशो विचारः प्रवर्तते, स च विचारः पदसाधुत्वकथनप्रसङ्गे नाधिकमपेक्ष्यते । कातन्त्रे च "बहुवचनममी' इत्येतादृशस्य स्पष्टनिर्दे-शस्य सत्त्वात् 'अमुके' इति शब्दस्य चातथात्वाद् माद्ग्रहणसदृशं न किञ्चिद् विचार्यते ।

अत्रेदमप्यवगन्तव्यम्—लोके गान-रोदन-आह्वानेषु प्लुतव्यवहारो दृश्यते । एतादृश-विषयस्य परिज्ञानाय सूत्रं नावश्यकं भवति । पाणिनिना एतेषां निबन्धनं सूत्रैः कृतम् । मन्ये—

लोकव्यवहारेण विज्ञेयान् विषयानपि अष्टाध्याय्यां सूत्रैः प्रदर्श्य पाणिनिना लोकव्यवहारजिज्ञासवो वञ्चिताः । ते लोकव्यवहारे कथं प्लुतः प्रयुज्यत इति ज्ञानाय न चेष्टन्ते, किं च सूत्राणि अधीयानाः पाणिन्युपदिष्टविषयानेव वैज्ञानिकान् व्यापकांश्चावधार्य संतोषमावहन्ति ।

## १०. पररूपम्

**पा०**— तोर्लि, स्तोः श्चुना श्चुः, ष्टुना ष्टुः ( ८।४।६०, ४०, ४१ ) ।

**कात०**—पररूपं तकारो ल-च-टवर्गेषु ( १।४।५ ) ।

**उदा०**—तल्लुनाति, तच्चरति, तज्जयति, तट्टीकते ।

**स०**— पाणिनीयेऽत्र लकारे परतः तवर्गस्य परसवर्णादेशो जायते । चवर्गे परतः तवर्गस्य चवर्गादेशः, टवर्गे च परतः तवर्गस्य टवर्गादेशो विधीयते ।

कातन्त्रप्रक्रियानुसारेण च ल-च-टवर्गेषु परतः पररूपं भवति । एतेन लकारे परतस्तकारो लकारतां याति, चवर्गे परतः चवर्गरूपताम्, टवर्गे च परतः टवर्गरूपताम् ।

एवं पाणिनीये विविधसूत्रनिर्देश-विविधविधि-निर्देशापेक्षया कातन्त्रप्रक्रियायां लाघवं सुखेनाववोधश्च फलति ।

इदमपि ध्येयम्—पाणिनिर्यत्र-प्रेजते उपोषतिप्रभृतिशब्देषु पररूपं[1] निर्दिशति, तत्र अकार एकारे ओकारे वा वर्णे आत्मानं विलीनयति । कातन्त्रकारनिर्देशानुसारेण परवर्तिनो वर्णस्याकारमवाप्य पूर्ववर्ती अकारः पृथगेव तिष्ठतीति । उभयत्र पररूपव्यवहारेऽयं भेदो विज्ञेयः सुधीभिः ।

## ११. द्वित्वविधिः

**पा०**— ङमो ह्रस्वादचि ङमुण् नित्यम् ( ८।३।३२ ) ।

**कात०**—ङणना ह्रस्वोपधाः स्वरे द्विः ( १।४।७ ) ।

**उदा०**—क्रुङ्ङत्र, सुगण्णत्र, पचन्नत्र ।

**स०**— अत्र पाणिनिः 'ङुट्-णुट्-नुट्' आगमान् क्रमेण विदधाति, टिदागमानां स्थाननिर्धारणाय "आद्यन्तौ टकितौ" ( १।१।४६ ) इति परिभाषां च कृतवान् ।

कातन्त्रकारस्तु 'ङ-ण-न' वर्णानां स्वरे परतो द्वित्वं विधायोक्तशब्दान् साधयति । एवं कातन्त्रप्रक्रियायां लाघवं सुखेनार्थावबोधश्च दृश्यते ।

## १२. शकारादेशः

**पा०**— नश्छव्यप्रशान् ( ८।३।७ ) ।

**कात०**—नोऽन्तश्चछयोःशकारमनुस्वारपूर्वम् ( १।४।८ ) ।

**उदा०**—भवांश्चरति, भवांश्छादयति ।

**स०**— पाणिनीयव्याकरणानुसारेण नकारस्य रुत्वे, रुत्वस्य विसर्गे, विसर्गस्य सकारादेशे, सकारस्य च श्चुत्वेन शकारादेशे, अनुनासिके, अनुस्वारे च कृते उक्तं रूपं निष्पद्यते ।

---

१. एङि पररूपम् ( ६।१।९४ )

कातन्त्रीयनिर्देशानुसारेण चैकेनैव सूत्रेणानुस्वारपूर्वः शकारादेशो नकारस्य प्रवर्तते, तेन च साधुत्वमुक्तरूपस्यावसीयते ।

एतेन लाघवप्रियः कश्चिदपि धीमान् पाणिनिदर्शितां महतीं प्रक्रियामवश्यमेव दुरूहां दुःखकरीं चाभ्युपेयात् । तदपेक्षया कातन्त्रप्रक्रिया सरलतरा, लाघवसम्मता चास्ति ।

### १३. षकार-सकारादेशौ

**पा०**— ष्टुना ष्टुः, विसर्जनीयस्य सः ( ८।४।४१; ३।३४ ) ।

**कात०** —टठयोः षकारम्, तथयोः सकारम् ( १।४।९, १० ) ।

**उदा०**—भवांष्टीकते, भवांस्तरति ।

**स०**— पाणिनीयप्रक्रियानुसारेणात्रापि नकारस्य रुत्वम्, रुत्वस्य विसर्गः, विसर्गस्य सकारः, सकारस्य षकारादेशः, अनुनासिकः, अनुस्वारश्च विधीयते 'भवांष्टीकते' इत्यस्य साधुत्वार्थम् । कातन्त्रे चैकेनैव सूत्रेणेष्टं निर्वर्त्यते । उक्तदिशाऽनया कातन्त्रीयं लाघवं प्रशस्यमभिवर्तते ।

एवं सन्धिप्रकरणे पञ्चपादात्मके ऊनाशीति ( ७९ ) सूत्रात्मके च एते त्रयोदश प्रक्रियानिर्देशाः सरलायाः सुबोधाया लघुभूतायाश्च कातन्त्रप्रक्रियाया निदर्शनभूता अत्र संक्षेपेण विवृताः । एवं नामचतुष्टय-आख्यात-कृदध्यायेष्वपि बहुत्र प्रक्रियालाघवं सन्निहितं दृश्यते । तत्रत्यानि कानिचिद् निदर्शनानि सति समये विवेचयिष्यन्ते । वस्तुतस्तु मया प्रकृतविषयपरीक्षणाय कातन्त्रीयचतुर्दशशतसूत्राणि (१४००) पाणिनीयसूत्रैः सह तुलनया पृथग् विचारितानि । तत्रायमेव निष्कर्षः समुद्भूतः—लाघवेन शब्दसाधुत्वस्यावबोधार्थं कातन्त्राध्ययनेन महानुपकारः कश्चिज्जायेत । पाणिनीयव्याकरणं तु आर्यावर्त-निवासिभिः शिष्टैः प्रयुक्तानां शब्दानां साधुत्वस्यावगमार्थमध्येयम् इति ।



# माध्यन्दिनीयवेदस्य दीर्घपाठशब्दविचारः[1]

डॉ० श्रीगोपालचन्द्रमिश्रः,
वेदविभागाध्यक्षः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी ।

'दीर्घपाठे' इति पुंलिङ्गपदं संहिताविशेषणं नास्तीति संहितायाः पाठद्वयं पदेनानेन कल्पयितुमप्यशक्यमिति पूर्वं साधितम् । अथापि **'स्थितस्य गतिश्चिन्तनीया'** इति न्यायेन दीर्घपाठशब्दः कस्मादुपयुक्त इति तु स्वातन्त्र्येण विचारणीयमेव ।

तदत्र दीर्घपाठशब्दे **'को दीर्घशब्दार्थः'** इति विचारे **'स्वस्वरूपादप्रच्यावतो वर्णस्य दीर्घमात्राकालिकसम्पृक्तविषयोच्चारणम्'** इत्यर्थः सम्प्रदायविद्भिरुच्यते ।

ननु यथा पाठद्वयकल्पनं प्रमाणविरहादप्रमाणम्, एवं दीर्घशब्दस्योक्तं व्याख्यानमप्ययुक्तमिति चेत्, न; एतादृशार्थस्य माध्यन्दिनीयमन्त्रधर्मप्रतिपादके प्रतिज्ञापरिशिष्टे 'ईषत्'शब्देनोक्तत्वात् । शास्त्रज्ञा हि 'ईषत्'शब्देन तमर्थं जानीयुर्न तथा साधारणधिय इति सर्वजनप्रत्यायनाय झटिति माणवकस्य तादृशार्थप्रतिपत्तये संहिताग्रन्थलेखने 'दीर्घपाठे' इत्युच्चारणविधेः स्वरूपं निर्दिष्टम् । एवं चोच्चारणविधेर्विशेष्यत्वे 'दीर्घपाठे' इति पुंलिङ्गमप्यक्षतमेव ।

**औभावश्च विवृत्तिश्च शषसा रेफ एव च ।**
**जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥** (पा० शि० १४) इति ।

एवमादिस्थलेषु माध्यन्दिनीयानां यथा कोष-निघण्ट्वाद्यनुल्लिखितोऽपि विसर्गे ऊष्मशब्दव्यवहारः साम्प्रदायिकः, एकमेव 'ईषत्'शब्दोऽपि दीर्घमात्राकालिकोच्चारणविधां सङ्केतयतीति साम्प्रदायिका अभिप्रयन्ति । सम्प्रदायश्च न टीकाभाष्यग्रन्थनिर्देशेभ्यो बद्धः, स त्वानुश्रविक एव गुरुशिष्यपरम्परया प्राप्यते ।

**ईषतो लोकप्रयोगदृष्टान्तः**

'ईषत्'शब्दो लौकिकसाहित्येऽपि कुत्रचित् सूक्ष्मेक्षिकया दीर्घविधोच्चारणरूपतामाचष्ट इति केचित् । कथयन्ति च यथा श्रीमद्भागवते—**'बभाष ईषत्स्मितशोभया गिरा'** ( ८।१।१२ ) इत्यत्र स्मितस्य ।

---

१. सारस्वत्याः सुषमायाः २६ वर्षे २ अङ्के प्रकाशितस्य निबन्धस्य अवशिष्टोऽयमंशः—सं० ।

**'स मनाक् स्मितम्'** (४३० पं०) इत्यमरात् स्वभावत एवेषद्धासे स्मितशब्दप्रयोगस्य व्यवस्थापितत्वेऽपि पुनरीषद्विशेषणं स्मितस्य यावद्भ्रूपणं स्थित्या दीर्घकालिकतामेवाभिव्यनक्तीति । एतेन 'ईषत्'शब्दस्य उच्चारणे सम्बद्धा दीर्घकालिकताव्यवस्थानुगृह्यते ।

**नैरुक्तदृष्ट्या ईषच्छब्दार्थः**

नैरुक्तदिशापि 'ईषत्'शब्दस्य दीर्घकालिकोच्चारणव्यवस्थापकत्वं भवति । तथा हि 'ईषत्'शब्दः 'ईषावत्' इति शब्दस्यार्थं दधद्रूपम् । ईषा खट्वायाः शकटस्य वा दीर्घदण्डः । स यथा तदीयाङ्गान्तरापेक्षया दीर्घं भवति, तद्वद् दीर्घवृत्त्योच्चारणीयमित्यर्थे 'ईषत्' शब्दो युज्यते ।

एवं **'ईषामात्रोग्रदंष्ट्रास्यः'** इत्यादिपर्यालोचनया दीर्घतावोधनाय ईषाशब्दः प्रयुज्यत इति ज्ञायते । दीर्घवदित्यर्थे 'ईषत्'शब्दः 'ईषावत्' इत्यस्य 'इष् + वत्' इत्यनयोराद्यन्तांशयोः सङ्घटनेनोपपन्नः ।

**'ईषत्'शब्दार्थः**

अथात्र दीर्घपाठप्रमाणभूतः 'ईषत्'शब्दो व्याख्यासापेक्षः । तत्र **'किञ्चिदीषन्मनागल्पे'** ( २८६५ पं० ) इत्यमराद् 'ईषत्'शब्दस्याल्पवाचित्वं सुप्रसिद्धम् । परमत्र माध्यन्दिनीये प्रतिज्ञापरिशिष्टे 'ईषत्' इति नाल्पार्थकम्, किन्तु पारिभाषिकम्, सम्प्रदायानुरोधात् । 'ई' इति शब्दस्वरूपं **"ऊकालोऽज्झ्रस्वदीर्घप्लुतः"**[1] इति सूत्रोक्त ऊकारवद् वर्णमात्राबोधकम् । 'षद्' इति मिश्रितां स्थितिं बोधयति ।

**'हंसः शुचिषद् वसुरन्तरिक्षसद् होता वेदिषदतिथिर्दुरोणसत्'** (ऋ० ४।४०।५) इति ।

एवं च वर्णस्य स्वस्वरूपादप्रच्यवमानस्य दीर्घमात्राकालिकसम्पृक्तविषय उच्चारणम् इति 'ईषत्'शब्दार्थः । पाणिनीयेषु 'षः नद्यादिवत्' माध्यन्दिनीयेषु पारिभाषिकस्य 'ईषत्' शब्दस्य प्रयोगः प्रतिज्ञापरिशिष्टे त्रिषु स्थानेष्वायाति ।

ननु यथा 'कूट'शब्दः कूटकर्मकूटनीतिप्रभृतिशब्देषु प्रच्छन्नार्थः ( भा० ८।१०।५५ ) कूटस्थादौ सर्वोच्चितायाः, 'कूटपुरुषः' इत्यादौ मूलस्य च बोधकः, एवमयम् 'ईषत्'शब्दो न दीर्घकालताबोधनार्थः कुत्रापि दृश्यत इति चेद् ब्रूमः—प्रत्येकं शास्त्रेषु विभिन्नाः पारिभाषिकाः शब्दा भवन्ति । येऽन्यत्र नोपलभ्यन्ते । एवं माध्यन्दिनीयशिक्षाशास्त्रे पार्षदशास्त्रे चैवंविधाः पारिभाषिकाः शब्दा उपयुज्यन्ते, येऽन्यत्र न व्यवह्रियन्ते, इत्येव न हि, किन्तु शास्त्रान्तरनिर्देशविरोधिनोऽपि ते भवन्ति । यथा हि पाणिनीयः 'ऊष्म'शब्दः 'शल्'प्रत्याहारवर्णेष्वेव व्यवहृतः । विसर्गबोधनाय ऊष्मशब्दप्रयोगः शास्त्रविरुद्धः । परं माध्यन्दिनीयैः साम्प्रदायिकैराचार्यैः शिक्षाविद्भिः 'ऊष्म'शब्देन विसर्गस्यापि निर्देशः कृतो वर्तते । तद्यथा—

**त्रिविधा तु भवेदूष्मा प्रचिता बलका तरा ।**
**स्वरिते प्रचितां विद्यान्निपाते बलदां विदुः ॥**
**उत्थाने तु तथा तारामेताभिस्त्रिभिरूष्मभिः ।**
**मात्रामादौ विदित्वा तु ततः क्षेपं प्रयोजयेत् ॥** ( पा० शि० ) इति ।

---

१. पा० सू० १।२।२७ ।

**मात्राकालविरोधपरिहारः**

नन्वेवं मात्राया यः कालः सामान्यतया निर्धारितः, स दीर्घपाठेऽनुपपन्न इत्यपि न, यतो हि सर्वत्र मात्राकाल उच्चारणवृत्तिभेदाद् विभिद्यत एव । अत एव ऋग्वेदप्रातिशाख्ये—"**मात्राविशेषः प्रतिवृत्त्युपैति**"[1] इति सूत्रे वृत्तिं वृत्तिं प्रति प्रतिवृत्तिविशेषो मात्राधिक्यमुपेत्युपगच्छति । द्रुतायां वृत्तौ ये वर्णास्ते मध्यमायां त्रिभागाधिका भवन्ति । तथा मध्यमायां ये वर्णास्ते विलम्बितायां त्रिभागाधिका भवन्ति । चतुर्भागाधिका भवन्तीत्येकमिति भाष्यकृत उव्वटस्य व्याख्यानम् ।

माध्यन्दिनीयवेदे वेदान्तरेषु यस्या वृत्तेर्यावान् कालस्तस्या वृत्तेः कालस्य सर्वत्र प्रायशो द्वैगुण्यस्यानुभूतत्वादत्र दीर्घपाठशब्दो युक्त एव ।

**विलम्बितवृत्तिकत्वेन दीर्घपाठशब्दव्यवहारः**

शास्त्रीयपरम्परायां हि 'पाठ'शब्द उच्चारणविधिमाक्षिपति । उच्चारणविधायां च स्वस्ववेदीयशिक्षाप्रातिशाख्यग्रन्थानां नियमानुसरणमावश्यकम् । एवं च तत्र—

**एकमात्रो भवेद् ह्रस्वो द्विमात्रो दीर्घ उच्यते ।**
**त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्धमात्रिकम् ॥** ( या० शि० ) ।

'**एकमात्रो ह्रस्वः, द्विस्तावान्**[2] **दीर्घः**' इति द्विमात्रोच्चारणे दीर्घशब्दः । ततश्च सामान्यतया अन्यवेदोच्चारणपरम्परायां यावान् मात्राकालस्तस्य माध्यन्दिनीये मन्त्रपाठे द्वैगुण्यं विधाय सर्वत्रोच्चारणविधिरिति दीर्घपाठशब्दलेखनस्य भावः । अत एव माध्यन्दिनीयवेदस्यान्यवेदापेक्षया विलम्बितवृत्तिमत्त्वमिति वेदश्रवणानुभाविनां स्पष्टमेव ।

अन्यच्च दीर्घशब्दो माध्यन्दिनीयवैदिकवाङ्मये यथावसरं यथावचनं च पारिभाषिकमर्थं दधाति । यथा प्रतिज्ञापरिशिष्टे अनुस्वारप्रकरणे—'**तस्य त्रैविध्यमाख्यातं ह्रस्व-दीर्घ-गुरुभेदैः । दीर्घात्परो ह्रस्वः, ह्रस्वात्परो दीर्घः, गुरौ परे गुरुः** ( प्र० व० ३।२ ) इति ।

अत्र वैयाकरणैरर्धमात्रिककालिकत्वेन निर्विवादं निर्णीतस्य आश्रयस्थानभागिनः अयोगवाहस्यानुस्वारस्य स्वराणामिव ह्रस्व-दीर्घ-गुरुत्वव्यवस्थापनं को नाम वैयाकरणोऽनुमन्येत । तदेतद्वेदस्यालौकिकविलसितमेव । ततश्च संहिताविशेषणत्वेन वेदविशेषणत्वेन वा दृश्यमानो दीर्घशब्दो ह्रस्वपाठं लघुपाठमन्यद्वा कल्पयेदिति सर्वथा निरस्तं भवति ।

अपरं चेदमप्यवधातव्यं यत् पाणिनीयशब्दानुशासने दीर्घस्यैव "**संयोगे गुरुः दीर्घं च**" (पा० १।४।११-१२) इति गुरुसंज्ञाकृता । अत्र तु दीर्घाद् भिन्ना उच्चारणविध्यन्तर्गता काचन गुरुसंज्ञाप्यस्तीति उक्तसूत्रपर्यालोचनया स्पष्टं ज्ञायत एव । अतोऽपि च दीर्घशब्दस्य काचन पारिभाषिक एवार्थो यथावचनं भवतीति सिद्ध्यति । स चार्थ उक्त एव ।

**दीर्घशब्दस्यापरा व्याख्या:**

( १ ) माध्यन्दिनीयो हि वेदोऽन्यशाखापेक्षयाऽधिके भूभागे भारतीयैः स्वशाखात्वेन निश्चीयते । ततश्चाधिकभूक्षेत्रसम्बन्धात् 'दीर्घपाठे' इत्यस्य विस्तृत-भूभागसमादृतपाठे

---

१. ऋ० प्रा०-१३।४८ । २. शु० प्रा० ।

इत्यप्यर्थो गौणो लभ्यते। एवमपि चैतद्वेदविशेषणं भवति, न संहिताविशेषणम्। वेदशब्दश्चाध्याहार्य एव स्यात्।

विस्तृतभूभागे ह्रस्वनिरपेक्षे दीर्घशब्दः 'दीर्घचतुस्रादौ' प्रसिद्ध एव।

( २ ) तथा भारते चातुर्वर्ण्यव्यवस्थायां त्रैवर्णिकानां साक्षाद् वेदाध्ययनाधिकारेऽपि तुरीयवर्णस्य सर्वस्य 'शूद्रा वाजसनेयिनः' इति सर्वेषां वाजसनेयितया माध्यन्दिनीयवेदानुसारिकर्मकाण्डप्रयोगेऽधिकारव्यवस्थापनाद् बहुजनपठनीयत्वेनापि दीर्घशब्द उपपद्यते। यथा बहुजनोपवेशनाय लम्बतरगवाक्षादिषु ( गैलरी ) दीर्घाशब्द उपयुज्यते। एवमत्र बहुजनसमादृतस्य वेदस्य दीर्घपाठरूपेण निर्देश इत्यपि भवितुमर्हति।

( ३ ) एवं वेदा हि **'महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः'** इत्यादौ वेदस्य निःश्वासरूपत्वेन प्रतिपादनाद् निःश्वासस्य च कदाचिद् दीर्घरूपताया अपि दृष्टत्वात्। माध्यन्दिनीयोऽयं वेदो दीर्घनिःश्वासरूपोऽभवदिति धिया दीर्घपाठशब्दस्तत्रोपयुज्यते। अत्र च दीर्घशब्दो वर्णानां तत्तत्स्थानप्रयत्नकरणेषु दीर्घकालिकसम्बन्धद्योतकः, पाठशब्दश्च निःश्वासबोधकः। महतोभूतस्य निःश्वासस्य वेदपाठरूपत्वादित्यपरो दीर्घपाठार्थः।

इदं त्ववधेयं–यदयं पाठो न शोकप्रकाशकतया दीर्घनिश्वासभूतः, अपि तु कर्मकाण्डे माहात्म्यख्यापनाय दीर्घो निःश्वासः। यथा हि स्वप्राणवायुवशित्वसामर्थ्यख्यापनाय जापकाः कुम्भकान्ते दीर्घकालं निःश्वसन्ति, तथैव कर्ममाहात्म्यख्यापनारूपोऽयं वेदो दीर्घनिःश्वासभूतः।

( ४ ) तथा च माध्यन्दिनीये वेदे पदपाठादौ गलत्पदानि गलदृचश्च नाधीयन्ते। तत्र कश्चनास्ति पार्षदोक्तो नियमः ( शु० प्रा० ४।१६६-१८० ) सङ्क्रमशब्देन। अन्येषु वेदेषु अयं विशेषः पदपाठे न दृश्यते। सोऽयं विशेषो मध्ये खातरूपसादृश्याद् वाणीसमानार्थक 'दीर्घिका'-शब्द( अ० को० ५२३ पं० )-दृष्टान्तात् पदपाठादिषु गलतां पदानामृचां च परित्यागवचनात्, संहितायां च प्रतीकोक्त **'मन्त्राणां'**[1] **खातरूपतायाः सादृश्याद्युक्तं नाम तत्र सावहितत्वापादनाय पुष्पिकासु दीर्घपाठशब्दः प्रयुक्तः**, इत्यपि वक्तुं शक्यते।

**उपसंहार**

एवं चैष माध्यन्दिनीयवेदे दीर्घपाठशब्दः—

१. वर्णानां दीर्घकालिकतत्तत्स्थानप्रयत्नकरणसम्बन्धात्।

२. उच्चारणविधेरन्यवेदापेक्षया विलम्बितवृत्तिकत्वाद्।

३. भारतीयबहुजनसमादृतत्वेन विस्तृतक्षेत्रशालित्वात्।

४. दीर्घनिश्वासरूपत्वात्।

५. दीर्घिकावत्सावहितावतरणरूपपठनीयत्वाच्च।

युक्तरूप एवोपपद्यत इति किमप्रामाणिकया मानान्तरविरुद्धया भारतीयश्रद्धास्पदशब्दराशौ वेदे संशयोद्विग्न्या पाठद्वयकल्पनयेति शिवम्।

---

१. गलत्पदानां गलदृचां प्रतीकोक्तमन्त्राणां च विषये बहुवक्तव्यमन्यत्रान्यदा वक्ष्यामः। सामान्यतस्तु मया सम्प्रदायप्रबोधिनीशिक्षायामुक्तमेवेति तत्र द्रष्टव्यम्।



# शक्तिमीमांसा

श्रीवायुनन्दनपाण्डेयः,
व्या० सा० आचार्यः, प्राध्यापकः, साहित्यविभागे,
सं० सं० वि० वि०, वाराणसी ।

नत्वा साम्बसदाशिवं गणपतिं सिद्धयादिभिर्भावितं
दिव्यालोकविधायिनीमनुपमां वाग्देवतां सद्गुरून् ।
भव्ये काव्यभवोद्भवे सुकविभिः सानन्दमाराधितां
वृत्तिं विज्ञजनेहितां बहुविधां तां वर्णये तत्त्वतः ॥

लोकशास्त्रविलक्षणशब्दार्थमयस्य काव्यस्य शरीरीभूतयोः शब्दार्थयोर्विभागं निरूपयन् मम्मटाचार्यः प्राह—'**स्याद् वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा**'[1] इति ।

तत्र त्रिधापदघटकीभूतधाप्रत्ययार्थजिज्ञासायां विद्वांसो वर्णयन्ति—'**स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथो विरुद्धयावद्धर्मप्रकारकबोधानुकूलोव्यापारः**' इति । स च शब्दस्त्रिधेत्यत्र न समन्वेति । यतो हि स्वं त्रिधापदार्थः, तत्समभिव्याहृतपदार्थः शब्दपदार्थः, पदार्थतावच्छेदकं शब्दत्वं तद्व्याप्यो वाचको लक्षको व्यञ्जकश्च, ते न मिथो विरुद्धाः, प्रत्युत य एव गङ्गाशब्दः प्रवाहरूपस्यार्थस्य वाचकः, स एव तटरूपस्यार्थस्य लक्षकः, शैत्यपावनत्वाद्यतिशयरूपार्थस्य व्यञ्जकोऽपीति ( वाचकलक्षकान्यतर एव शब्दो व्यञ्जको भवति ) साङ्कर्याद् भेदाभावात् शब्दे कथं त्रिविधत्वम् इति न शङ्क्यम्, वाचकत्वाद्युपाधिष्वेव त्रिविधत्वस्य स्वीकारात्, उपाधीनामसाङ्कर्यात् । न तूपाधेयेष्विति निर्णयात् । तत्रोपाधयः—

( १ ) अभिधा
( २ ) लक्षणा
( ३ ) व्यञ्जनेति त्रिविधा ।

**मीमांसाविषु** गौणीत्याख्योपाध्युपहितगौणशब्दस्य सत्त्वाद् व्यञ्जकस्य चाभावात् न्यायनये च गौण्या लक्षणायामन्तर्भावाद् द्विविधस्यैव शब्दस्योपलब्धेः कथं त्रिविधः शब्द इति शङ्कानिराकृतये अत्रेति पदमुपात्तम्, अर्थात् काव्ये एवंविधस्त्रिधाशब्दः, नान्यत्रेति ।

काव्ये केचन एव शब्दा प्रयोक्तव्याः । ये न रूक्षाः, नारुन्तुदाः, न वोद्देश्यप्रतीतिप्रतिबन्धकाः, न वा पर्युषिताः, घण्टानिनादानुरणनवन्नवनवार्थनिःस्यन्दिनो मधुरा अलौकिकचमत्कारकारिणो वा समुचिता गुणालङ्कारादिवैशिष्ट्याल्लोकविलक्षणा एव शब्दा प्रयोगार्हा भवन्ति । तथा चोक्तमानन्दवर्धनेन—

१. का० प्र० द्वि० उ० सू० ५ ।

**सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन ।**
**यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः**[1] ॥ इति ।

कुन्तकोऽप्याह—

**शब्दो विवक्षितैकार्थवाचकोऽन्येषु सत्स्वपि ।**
**अर्थः सहृदयाह्लादकारि स्वस्पन्दसुन्दरः**[2] ॥ इति ।

अत एवाभ्यासशालिभिर्विद्या तु लभ्यते, परं कवित्वं प्रतिभानाभावे नितरां दुर्लभम् । तदुक्तम्—**'काव्यं तु जातु जायेत कस्यचित् प्रतिभावतः**[3]**'** इति ।

एवं व्यञ्जकशब्दस्यैव काव्ये प्राधान्याद् व्यञ्जनोपाधिविशिष्टस्यैव व्यञ्जकत्वाद् व्यञ्जनायाश्चाभिधा-लक्षणामूलकत्वाद् लक्षणाव्यञ्जनयोरन्यत्रोपपादितत्वात् परिशेषाद् व्यापारप्राधान्यवादिष्वाचार्येषु कुन्तकादिभिर्विचित्राभिधाया एव प्राधान्यनिरूपणाच्च निर्विवादतया सर्वैर्दार्शनिकैरङ्गीकृतत्वाच्चाभिधावृत्तिरत्र मीमांसा-न्याय-व्याकरण-आलङ्कारिकप्रभृतिसम्भवरीत्या विमृश्यते । सा च—**'अर्थबोधजनकताऽवच्छेदकधर्मरूपा शब्दशक्तिरभिधा'** इति ।

तत्र तावद् मीमांसकैः शक्तिः पदार्थान्तरमिति स्वीक्रियते । तेषामयमभिप्रायो यत् कारणेषु कार्यानुकूलाशक्तिः कारणात् पृथग् वर्तते। एवं हि दृश्यते लोके यद् वह्निना दाहो जन्यते, परं मणिमन्त्रौषधिसमवहितेन वह्निना दाहो न जायते, पुनरुत्तेजकसमवहितेन मण्याद्यपसारणेन च जन्यते, अतो निश्चीयते यद् मणिमन्त्रादिभिर्वह्निवृत्तिर्दाहानुकूला शक्तिर्नाश्यते । अत्र दाहं प्रति मण्याद्यभावविशिष्टो वह्निः कारणमिति, कार्यकारणभावस्वीकारे मण्यादिसमवधाने 'दाहो' न जन्यत इति न शङ्क्यम्, मण्यभावत्वेन स्वतन्त्रहेतुताकल्पने गौरवात् । अतः कार्यमात्रं प्रति तत्तत्कारणेषु तत्तत्कार्यानुकूला शक्तिः कल्प्यते ।

सा च पदार्थान्तरम्, द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायाभावादिसप्तपदार्थेष्वनन्तभूतत्वात् । तथा हि—शक्तिः स्पर्शरहिता, अतः स्पर्शविशिष्टेषु पृथिव्यप्तेजोवायुषु नान्तर्भूता । उत्पादविनाशशालित्वेन चाकाशादिपञ्चनित्यद्रव्येषु तस्या नान्तर्भावः । कपालादिरूपादिषु घटरूपाद्युत्पादकशक्तिसत्त्वान्न गुणकर्मणोरन्तर्भावः । सामान्यादिषूत्पादविनाशशालित्वादेव नान्तर्भावः । नित्यात्यन्तान्योन्याभावयोरनित्यत्वाद् विनाशित्वेन ध्वंसे प्रागभावे चोत्पत्तिमत्त्वेन नान्तर्भावः । अतः शक्तिरतिरिक्तपदार्थ इति ।

वेदान्तिनोऽप्यत्रानुकूला यत्पठन्ति—

**शक्तिः शक्तात् पृथङ्नास्ति तद्वद्दृष्टेर्न चाभिधा ।**
**प्रतिबन्धस्य दृष्टत्वात् शक्त्यभावे तु कस्य सः**[4] ॥ इति ।

अर्थात् शक्तिः शक्तिमतः पृथङ्नास्ति, शक्तिविशिष्टस्यैव शक्तिमत उपलब्धेः, शक्तिमतः पृथक्शक्तेरनुपलब्धेश्च । न च पृथगनुपलब्धेरिति हेतोः शक्तिः शक्तिमत्स्वरूपमेवेति वाच्यम्,

१. ध्व० लो० प्र० उ० का० ८ ।
२. व० जी० प्र० उ० का० ९ ।
३. लोचने ( ध्व० लो० प्र० उ० )
४. पञ्चदश्यां ब्रह्मानन्दे, अद्वैतानन्दप्रकरणे ११ तमः श्लोकः ।

अभेदाभावात्। भेदे हेतुमाह—प्रतिबन्धस्य दृष्टत्वादिति । अग्निना दाहो जन्यते, मणिमन्त्रादिभिः सा प्रतिबध्यते, तत्र अग्निस्त्वस्त्येव, प्रतिबन्धः कस्य ? अतः शक्तिकार्यं दाहः । शक्तेः प्रतिबन्धो मण्यादिभिः क्रियते । अतः स्वरूपातिरिक्ता शक्तिरस्तीति ।

अपि च यथा जीवः शरीरे एवोपलभ्यते, शरीरात् पृथङ्नोपलभ्यते, तथापि शरीराद् भिन्नः । अग्निश्च दाह्यपदार्थात् पृथङ्नोपलभ्यते, तथापि न तद्रूपस्तद्वच्छक्तिः शक्तिमतः पृथङ् न लभ्यते, तथापि तदतिरिक्तेति ।

अत एव **प्राभाकरा** निगदन्ति[1]—शक्तिर्यद्यपि न प्रत्यक्षगोचरीभूता, तथाऽपि कार्येणानुमीयते । यद्रूपादग्नेर्दाहो जायते, तद्रूपादेव मणिमन्त्रादिसमवधाने सति दाहो न जायते । मन्त्राद्यभावोऽपि दाहरूपकार्योत्पत्तौ निमित्तमिति न शङ्क्यम् । भावकार्यं प्रति भावकारणस्यैव नियतत्वात् । अभावस्य क्वचिदपि कार्ये जनकतानुपपत्तेः । अतोऽग्नेः स्वरूपद्वयम्, प्रत्यक्षमतीन्द्रियं च । यच्चातीन्द्रियमग्नेः स्वरूपं तदेव शक्तिसामर्थ्यादिशब्दवाच्यं लोके प्रतीयते । शक्तेः कदाचिदभिभवः, कदाचिद् विनाशो भवति । यत्र कदापि कार्यं नोत्पद्यते, तत्र विनाशः । यत्र प्रतीकारवशेन कार्योदयस्तत्राभिभव इति ।

सा चेयं शक्तिस्त्रिधा-सहजा, आधेयजा, शब्दनिष्ठा च । अग्न्यादौ दाहिकाशक्तिः सहजा । मन्त्रादिना मूर्तौ देवत्वादिसम्पादिका शक्तिराधेयजा । अर्थबोधजनकताऽवच्छेदकधर्मरूपा शक्तिः शब्दनिष्ठा । सहजा शक्तिरज्ञाता सत्युपयुज्यते । शब्दनिष्ठाज्ञाता सत्युपयुज्यते । ऋते व्यञ्जनाशक्तेः ।

अत्र शब्दशक्तेर्मीमांसा प्रस्तुता । तत्र भाट्टमीमांसकमते **'शब्दनिष्ठो बोध्यबोधकतारूपोऽभिधेयाऽभिधायकत्वरूपो वा सम्बन्धः शक्तिः'** इति । **प्राभाकरमते**ऽपि शब्दस्यार्थेन सहापौरुषेयः प्रत्याय्यप्रत्यायकभावरूपः[2] सम्बन्धः शक्तिः । सा च पदार्थान्तरम् । अत्र शक्तिरभिधेत्यनर्थान्तरम् ।

**नैयायिकाश्च**[3]—प्रतिबन्धकाभावस्य सामान्यकारणत्वं स्वीकृत्य कारणेष्वतिरिक्तां कार्यानुकूलां शक्तिं नाङ्गीकुर्वन्ति । त एवं निगदन्ति, यद् दाहं प्रति न केवलोऽग्निः कारणम्, अपि तु प्रतिबन्धकाभावविशिष्टोऽग्निः कारणम् । अग्नेर्दाहं प्रति मण्यादयः प्रतिबन्धकाः सन्ति, अतस्तेषामभाव आवश्यकः । एवं मण्याद्यभावविशिष्टो वह्निर्दाहं जनयति ।

अत्र प्रतिबन्धकमण्यादिसमवधानेऽप्युत्तेजके सति वह्नेर्दाहरूपकार्योत्पत्तिदर्शनाद् दाहं प्रति मण्याद्यभावविशिष्टो वह्निः कारणमिति कार्यकारणभावोऽनुपपन्न इति न शङ्क्यम्, उत्तेजकाभावविशिष्टमण्याद्यभावविशिष्टस्य वह्नेः कारणतास्वीकृतेः । अनन्तशक्तीनां तत्प्रागभावध्वंसानां कल्पनाऽपेक्षया प्रतिबन्धकाभावविशिष्टस्यैव कारणताऽभ्युपगमे लाघवात् ।

---

१. प्रकरणपञ्चिकायाम् अनु० परि० शक्तिनि० ।

२. प्र० प० शा० प० ।

३. न्या० सि० मु० प्रत्य० खण्डः ।

अत्राभावो न कारणमिति न शङ्कयम्, यतो हि यथा भावपदार्थादभाव उत्पद्यते, तथैवाऽभावपदार्थाद् भावोऽप्युत्पद्यते। तथा हि—यथा दण्डघटसंयोगाद् ध्वंसरूपकार्यं भवति, तथैवाभावपदार्थाद् भावरूपकार्यं जायते। तदुक्तम्—**'भावो यथा तथाऽभावः कारणं कार्यवद् मतम्'**[1] इति।

इत्थं **नैयायिक**मते शक्तिरतिरिक्तपदार्थो नास्ति। एवं शब्दशक्तिव्यतिरिक्तपदार्थो न, प्रत्युत ईश्वरेच्छारूपा शक्तिः। इच्छा च गुणरूपेति। सा च **"अस्मात् पदादयमर्थो बोद्धव्यः'** इति पदप्रकारिकाऽर्थविशेष्यिका। अथवा विनिगमनाभावाद् **'इदं पदममुमर्थं बोधयतु'** इत्यर्थ-प्रकारिका पदविशेष्यिका वा ईश्वरेच्छा शक्तिः।

ईश्वरेच्छा एका नित्या च वर्तते। तस्या विषयो यथा घटस्तथा पटादिकं सर्वं वस्तुजातम्, अतो घटपदाभिधेयः पटादिरपि स्यादिति शङ्कानिरासाय, व्यक्तिविशेषमुपाधिकृत्य, घटादिपदाभिधात्वं स्वीकर्तव्यम्। अर्थात् **'घटपदाद् बोधव्यो घटः'** इत्यादिरीत्या घटादिरूप-व्यक्तिविशेषोपाधानेनेश्वरेच्छायास्तत्पदाभिधात्वस्वीकारे एका नित्याऽपीश्वरेच्छोपाधिभेदेन भिन्ना सती घटोपहिता घटमात्र एव विषयतया तिष्ठन्ती पटादिकं न विषयीकरोति।

अथ बोधो विचार्यते—**'घटपदाद् बोद्धव्यो घटः'** ( अत्र पञ्चम्यर्थो जन्यता बुधधात्वर्थो बोधः, तव्यप्रत्यार्थो विषयता ) घटपदार्थस्य स्वनिष्ठजनकतानिरूपितत्वसम्बन्धेन पञ्चम्यर्थ-जन्यतायामन्वयः। जन्यतायाश्च स्वरूपसम्बन्धेन बुधधात्वर्थे बोधेऽन्वयः। बोधस्य निरूपितत्व-सम्बन्धेन तव्यप्रत्ययार्थविषयतायामन्वयः। विषयताया आश्रयतासम्बन्धेन घटेऽन्वयः, अवच्छेदकतासम्बन्धेन घटत्वे, अवच्छेदकताऽवच्छेदकत्वसम्बन्धेन समवायेऽन्वयः। ( तस्माद् इच्छारूपा शक्तिर्विषयतासम्बन्धेन घटे, विषयताऽवच्छेदकत्वसम्बन्धेन घटत्वे, विषयताऽ-वच्छेदकताऽवच्छेदकत्वसम्बन्धेन समवाये चेति त्रयोऽपि शक्तिर्भास्या इति घटे, घटत्वे समवाये च घटपदशक्तिः।

एवं घटनिष्ठजनकतानिरूपितजन्यत्वविशिष्टबोधनिरूपितविषयताश्रयो घट इति बोधः।

**'घटं बोधयतु घटपदम्'** इत्यत्र घटपदार्थस्य निष्ठत्वसम्बन्धेन 'अम्'पदार्थविषयताया-मन्वयः। विषयताया आश्रयनिरूपकत्वसम्बन्धेन बोधेऽन्वयः, बोधस्य निरूपितत्वसम्बन्धेन णिजर्थजनकतायामन्वयः, जनकताया निरूपितत्वसम्बन्धेन तिवर्थ आश्रयतायामन्वयः, आश्र-यतायाश्च स्वरूपसम्बन्धेन पदेऽन्वयः। एवञ्च **'घटनिष्ठविषयतानिरूपकबोधनिरूपितजनकता-निरूपिताश्रयतावद् घटपदम्'** इति बोधः।

शक्तिर्विषयतासम्बन्धेन पदे, अर्थे, ज्ञाने च वर्तते, तथाऽपि बोधनिष्ठजन्यतानिरूपित-जनकतावत् सम्बन्धेन शक्तिविषयो वाचकः। पदजन्यबोधविषयत्वसम्बन्धेन शक्तिविषयो वाच्य इति नातिप्रसक्तीति नागेशः[2]। प्रथमं शक्तिग्रहो वाक्याज्जायते, पुनरावापोद्वापाभ्यां तत्त-त्पदस्य शक्तिग्रह इति। घटपदजन्यबोधविषयत्वप्रकारकघटविशेष्यकेच्छेति शक्तेः स्वरूपम्। घटपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतावान् घट इत्याकारकः शक्ति-ग्रह इति।

---

१. न्यायकुसुमाञ्जली १० का०।　　२. ल० म० श० नि०।

शक्तिः सङ्केतोऽभिधेत्यनर्थान्तरम् । सङ्केतो लक्षणा चार्थे पदवृत्तिरित्युक्तः[1] । इयं शक्तिराधुनिके देवदत्तयज्ञदत्तादिनाम्न्यपि वर्तते । **'एकादशेऽह्नि पिताजातस्य पुत्रस्य नाम विदध्यात्'** इति श्रुतिरूपाया ईश्वरेच्छायास्तत्राऽपि सत्त्वात् । आधुनिकमात्रसङ्केतिते 'डित्थ-'डवित्थादौ', 'नदी-वृद्धयादौ तु नास्ति शक्तिः' किन्तु परिभाषाशब्दा इमे इति **साम्प्रदायिका** वदन्ति ।

**नव्यास्तु**—ईश्वरेच्छारूपशक्तिस्वीकारे ईश्वरानङ्गीकुर्वता शक्तिबोधो न स्यात्, अत इच्छामात्र शक्तिः, अत आधुनिकसङ्केतिते नदीवृद्धयादिपदेऽपि शक्तिरस्त्येव । अत एव **'सङ्केतो लक्षणा चार्थे पदवृत्तिः'** इत्याहुर्गदाधरभट्टाचार्या[2] न तु शक्तिर्लक्षणेति ।

**नैयायिका** अपभ्रंशेषु शक्तिं नाङ्गीकुर्वन्ति, अपि तु तेषु शक्तिभ्रमाद् बोध इति वदन्ति ।

परं यथेश्वरेच्छा नित्या, एका च, तथैवेश्वरज्ञानमपि नित्यमेकं च । क्रमश्च वर्तते—जानाति, इच्छति, ततो यतत इति । एवमीश्वरज्ञानमेव कुतो न शक्तिरिति विनिगमना-विरहादीश्वरज्ञानस्यापि शक्तित्वस्वीकारे गौरवमिति तन्मतं न सम्यक्, अपि चेश्वरस्य विभुत्वात् तस्येच्छाया विषयः सर्वम्, अतो लाक्षणिकेऽपि शब्दे तस्याः सत्त्वात् लक्षणोच्छेदापत्तिः स्यादिति ।

दीधितिकारोऽप्याह—**'शब्दाश्रयीभूतस्याकाशस्येश्वरानतिरिक्तत्वेन तदिच्छाशब्दयोः सामानाधिकरण्यात् कार्यमात्रं प्रतीश्वरेच्छायाः साधारणकारणत्वाच्च लक्षणोच्छेदप्रसङ्गः'** इति ।

**वैयाकरणानां मतम्—**

वैयाकरणेषु प्राचीना भट्टोजिदीक्षित-कौण्डभट्ट-प्रभृतयो योग्यतारूपां शक्तिं स्वीकुर्वन्ति । तथा हि—चक्षुरादिज्ञानेन्द्रियाणां यथा स्वस्वविषयेषु रूप-रस-गन्ध-स्पर्श-शब्देषु पुरुषप्रयत्ननिरपेक्षाऽनादिर्योग्यता ( रूपादिविषयकप्रत्यक्षकारणताऽवच्छेदकधर्मवत्ता ) अस्ति, तथैव गवादिशब्दानां गवादिभिरर्थैः सहानादिर्योग्यता ( तत्तदर्थविषयकबोधजनकतारूपा ) अस्ति । एवं तद्बोधकारणता एव योग्यता, सैव शक्तिरिति । तदुक्तम्—

**इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।**
**अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा**[3] ॥ इति ।

**नव्याश्च नागेशभट्टाः**[4]—शक्तेरपि कार्यजनकत्वे सम्बन्ध एव नियामकदीपनिष्ठप्रकाश-कत्वशक्तेरालोकविषयसम्बन्धे सत्येव वस्तुप्रकाशकत्वं दृष्टं नान्यथा, अतः शब्देऽर्थविषयकबोध-जनकतासिद्धये पदपदार्थयोः सम्बन्धो निश्चेयः । स च सम्बन्धो वाच्यवाचकभावाऽपरपर्यायः, स एव शक्तिः । तद् ग्राहकं चेतरेतराध्यासमूलकं तादात्म्यम् । शब्दार्थयोस्तादात्म्यं च गौरिति शब्दः, गौरित्यर्थः, गौरिति ज्ञानम् इत्यनुभवात् सिद्धम् । तच्च सङ्केतः । सङ्केतश्च स्मृत्या-त्मकः, योऽयं शब्दः, सोऽर्थः, योऽर्थः, स शब्द इति महाभाष्योक्तेरित्याहुः ।

तादात्म्यञ्च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्, भिन्नयोरभेदप्रतीतिरध्यासाद् भवति । यत्र भेद उद्भूतस्तत्र **'मम कर्णौ बधिरः'** इतिवदस्य शब्दस्यायमर्थ इति षष्ठी भवति ।

---

१. शक्तिवादे । २. शक्तिवादे ।
३. वै० भू० सा० शक्तिनि० ३६ तमा का० । ४. परमलघुमञ्जूषायां शक्तिनि० ।

यत्र भेदस्तिरोहितस्तत्राहम् 'बधिरः' इतिवद् गौरिति शब्दो गौरित्यर्थ इति व्यवहारः। तादात्म्यस्य भेदाभेदघटितत्वेन 'अग्निशब्दो'च्चारणेन न मुखदाहापत्तिः। वस्तुतो बौद्धः शब्दोऽर्थश्च। तयोरभेदः। बौद्धपदार्थाच्च न दाहापत्तिः। शब्दार्थयोस्तादात्म्यादेवार्थभेदात् शब्दभेद इति न्यायः सङ्गच्छत इति।

मतेऽस्मिन् सङ्केत एव न शक्तिः, अपि तु शक्तिग्राहकः सङ्केत इति। शक्तिश्च वाच्यवाचकभावरूपोऽखण्डेऽतिरिक्तपदार्थः। तथा हि—वाच्यत्वमर्थे, वाचकत्वं शब्दे, वाच्यवाचकत्वं न केवलेऽर्थे शब्दे वा, अपि तूभयोरखण्ड इति।

अत्र सम्बन्धविषयकाभियुक्तव्यवहारोऽपि सङ्गच्छते। तथा हि—सम्बन्धो हि सम्बन्धिद्वयाऽभिन्नत्वे सति, द्विष्ठत्वे च सति, आश्रयतया विशिष्टबुद्धिनियामक इति वृद्धव्यवहारः। वाच्यवाचकभावसम्बन्धः सम्बन्धिभ्यां शब्दार्थाभ्यां भिन्नः, शब्दार्थयोरुभयोर्विद्यमानत्वाद् द्विष्ठः, शब्दार्थौ वाच्यवाचकभाववन्ताविति विशिष्टबुद्धेर्नियामक इति सत्सङ्गतिः।

( इच्छा तु न विशिष्टबुद्धिनियामिका। इच्छावान् शब्दः, इच्छावानर्थ इति व्यवहारादर्शनात्। अतो न सम्बन्ध इति। )

स च सम्बन्धः पदे वाक्ये च। तदुक्तं न्यायभाष्यकारैः—**'समयज्ञानार्थं चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणमर्थलक्षणाया वाचोऽर्थलक्षणम्'** इति ( अर्थलक्षणाया वाचः= अर्थो लक्ष्यते ज्ञायतेऽनया, तस्या वाचः=वाक्यरूपस्यान्वाख्यानम् अर्थो। लक्ष्यते ज्ञायतेऽनेनेति अर्थलक्षणं न्यायशास्त्रं मीमांसाशास्त्रं चेति)। अनेन पदेष्विव वाक्येष्वपि सङ्केत इति सुस्पष्टम्।

**आलङ्कारिकमतम्**—आलङ्कारिका अपि मीमांसक-वैयाकरणवदभिधामतिरिक्तपदार्थं मन्वते, न तु सङ्केतरूपाम्, प्रत्युताभिधयाऽर्थबोधने सङ्केतः सहकारीति वदन्ति। सङ्केतग्रहसहायेनार्थबोधिका शक्तिरभिधेति **'समयाऽपेक्षयाऽर्थावगमनशक्तिर्ह्यभिधा'** इति लोचनोक्तेः[1]। **'साक्षात् सङ्केतितं योऽर्थमभिधत्ते'**[2] इत्याद्युक्तेर्मम्मटोऽप्यनुकूलः।

**पण्डितराजोऽपि**[3]—'शक्त्याख्योऽर्थस्य शब्दगतः, शब्दस्यार्थगतो वा सम्बन्धविशेषोऽभिधेति निरूपयन्नाह—सा च पदार्थान्तरमिति केचित्। अत्र केचिदित्युक्त्याऽरुचिर्न शङ्कनीया अनुपदमेव, **'अतः प्रथममतमेव ज्यायः'**[4] इत्युक्तेः।

**अच्युतरायस्तु 'मीमांसकमतम्'**[5] इति स्फुटं निगदति।

**शक्त्याश्रयविवेकः**—

**नैयायिकाः** शक्तेराश्रयं संस्कृतशब्दमेव स्वीकुर्वन्ति, नापभ्रंशान्। अपभ्रंशेषु शक्तिस्वीकारे गौरवापत्तिः स्यात्। एकस्यैव शब्दस्य बहूनामपभ्रंशानां सत्त्वात्। **'तद्यथैकस्यैव गोशब्दस्य 'गावी', 'गोणी', 'गोता', गोपोतलिकेत्येवमादयो बहवोऽपभ्रंशाः'**[6] इत्याह भगवान् महाभाष्य-

---

१. ५६ तमपृष्ठे।
२. का० पु० द्वि० उ०।
३. रसगङ्गाधरे द्वि० आ० अभिधानिरू०।
४. तत्रैव।
५. साहित्यसारे, ऐरावतरत्ने–५।
६. महाभाष्ये पस्पशाह्निके।

कारोऽपि । सर्वत्र शक्तिकल्पनायां गौरवात् । अपभ्रंशेभ्योऽर्थप्रतीतिर्व्युत्पन्नानां साधुशब्द-स्मरणादव्युत्पन्नानां पामराणां शक्तिभ्रमाद् बोध इति निगदन्ति । तदुक्तं हरिणा तन्मतं पुरस्कुर्वता—

ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः ।
तादात्म्यमुपगम्यैव शब्दार्थस्य प्रकाशकाः ॥
एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते ।
तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते ॥
अव्यक्ते तद्विदां तत्र व्यक्ते भवति निर्णयः ॥ इति च ।

**वैयाकरणानां मतम्—**

**शाब्दिकास्तु**—साधुशब्देष्विवापभ्रंशेष्वपि शक्तिं स्वीकुर्वन्ति । त एवं निगदन्ति यद् यद्यपभ्रंशेषु शक्तिर्न स्यात्, तदा तेभ्य बोध एव न स्यात् । न चापशब्देभ्यः साधुशब्दस्मृति-स्ततो बोध इति वाच्यम्, साधुशब्दमजानतां पामराणां बोधाभावप्रसङ्गात् । शक्तिभ्रमाद् बोध इत्यपि न शङ्क्यम्—अबाधप्रतीतेः, भ्रमत्वायोगात् । भाषाशब्देष्वपि शक्तिरस्त्येव । अत एव महाभाष्येऽभिहितम्—'**समानायामर्थावगतौ शब्देन चापशब्देन च शास्त्रेण धर्मनियमः क्रियते, शब्देनैवार्थोऽभिधेयो नापशब्देन**[२]' इति । हरिणाऽप्युक्तम्—'**वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः**[३]' इति ।

**साहित्यिकानां मतम्—**

साहित्यिकास्तु व्याकरणस्मृतिमनुसरन्तोऽपभ्रंशेष्वपि शक्तिमनुमन्यन्ते । अत एव मम्मटो वाच्यस्यार्थस्य व्यञ्जकत्वे भाषापद्यमुदाजहार । तद्यथा—

**माए घरोवअरणं अज्जहुणत्थित्ति साहिअं तुमए ।**
**ता भण किंकरणिज्जं एमेअण वासरो थाई**[४] ॥ इति ।

अत्र प्रकृतिः संस्कृतं तस्माद् जातं प्राकृतम् ( अपभ्रंशः ) इति । यदि भाषाशब्देषु शक्तिर्न स्यात्, तदा तेषां वाच्यार्थाभावाद् वाच्यार्थस्य व्यञ्जकत्व उदाहरणदानमसङ्गतं स्यात् । '**न म्लेच्छितवै नापभाषितवै**' इत्यादिनिषेधस्तु याज्ञे कर्मण्येव । '**म्लेच्छो ह वा एष यदपशब्दः**[५]' इति दर्शनात् । लोकव्यवहारस्तु भाषाशब्दैरेव प्रवर्तते ।

न चैवं '**दीनं त्वामनुनाथते स्तनयुगम्**' इत्यादीनां च्युतसंस्कृतित्वादिदोषदुष्टानामदोष-त्वापत्तिः । याज्ञे कर्मण्येवासाधुशब्दानां दुष्टत्वाऽभिधानादत्र च तदभावादिति वाच्यम्, तत्र साधुपदसमुदायेऽसाधुदर्शनस्य विप्रसभायां चाण्डालदर्शनवत् सहृदयोद्वेजकत्वमेव दूषकताबीजम् ।

अत्र साधुत्वञ्च—'**व्याकरणव्यङ्ग्योऽर्थविशिष्टशब्दनिष्ठः पुण्यजनकताऽवच्छेदको जाति-विशेष**[६]' इति । न तु नैयायिकाभिमतं '**शक्तत्वं साधुत्वम्**' इति ।

---

१. वा० पा० १।१५० ।　　२. महाभाष्ये पस्पशा० ।
३. वा० प० ( ल० म० भूषणसारेऽपि ३७ तमा का० ) ।
४. का० प्र० द्वि० उ० ।　　५. म० भा० पस्पशा० ।
६. ल० म० साधुशक्तत्वविचारे ।

**अभिधाभेदः—**

तत्र **नैयायिकाः** शक्तं पदं चतुर्विधं वदन्ति[1]। यौगिकं रूढं योगरूढं यौगिकरूढमिति भेदात्। यत्राऽवयवार्थप्रतिभासस्तत्र यौगिकम्। यथा—पाचकपाठकादिपदम्। अत्र पच्धातोः पाकोऽर्थः ण्वुल्प्रत्ययस्य कर्ताऽर्थः। एवं पाककर्त्तेत्यर्थो योगशक्त्या प्रतीयते। यत्रावयवार्थ-निरपेक्षसमुदायशक्तिमात्रेणार्थबोधः, तत्र रूढम्। यथा—गोमण्डलादिपदम्। यत्राऽवयवशक्ति-विषये समुदायशक्तिरपि भासते, तत्र योगरूढम्। यथा—पङ्कजादिपदम्। अत्र योगशक्त्या पङ्कजनिकर्तृत्वेन पद्मकुमुदादीनां बोधे प्रसक्ते रूढिशक्त्या पद्मस्यैव बोधः। पङ्कजपदाद् योग-शक्त्या कुमुदादेर्बोधो न शङ्क्यः, रूढिज्ञानस्य केवलयौगिकार्थज्ञाने प्रतिबन्धकत्वात्। केचन[2] समुदायशक्त्योपस्थिते पद्मेऽवयवार्थस्य पङ्कजनिकर्तुरन्वयो लक्षणया भवतीति वदन्ति।

यत्रावयवार्थसमुदायार्थयोः स्वातन्त्र्येण बोधः, तद् यौगिकरूढम्। यथा—उद्भिदादि-पदम्। अत्रोद्भेदनकर्ता तरुगुल्मादिरर्थः प्रतीयते 'उद्भिदा यजेत' इत्यादौ यागादिरपि प्रतीयते इति।

**जगदीशतर्कालङ्कारश्च**[3] शब्दस्य नवभेदानन्यथा निरूपयाञ्चक्रे। तथा हि—रूढिस्त्रिविधा-

(१) नैमित्तिकी।

(२) पारिभाषिकी।

(३) औपाधिकी च।

तत्र जात्यवच्छिन्नशक्तिमती नैमित्तिकी। आधुनिकसङ्केतशालिनी पारिभाषिकी। उपाध्यवच्छिन्नशक्तिमती औपाधिकीति।

आद्याया उदाहरणम्—गोचैत्रादि, द्वितीयाया आकाशडित्थादि, तृतीयाया भूतदूतादि। मतान्तरे ( वैयाकरणरीत्या ) गोगवयादि, चैत्रादि, आकाशपश्वादिश्च क्रमश उदाहरणानि।

यौगिकशब्दोऽपि त्रिविधः—

(१) सामासिकः।

(२) तद्धितान्तः।

(३) कृदन्तश्च।

पुरुषसिंहादि पाराशर्यादि-पाचकादोनि यथाक्रममुदाहरणानि। कृदन्तस्य योगरूढस्य सामासिकेऽन्तर्भावाद् योगरूढशब्दो द्विविध एव।

एवं योगरूढस्यापि कृष्णसर्पादि-वासुदेवादि-पङ्कजादीन्युदाहरणानि सन्ति। कृदन्तस्य पङ्कजशब्दस्य सामासिकेऽन्तर्भावः। मतान्तरे सामासिकस्य लोहितशल्यादीनि, तद्धितान्तस्य गार्ग्यकाश्यपादीन्युदाहरणानि सन्ति।

---

१. न्या० सि० मु० श० ख०।

२. मणिकारादयः।

३. शब्दशक्तिप्रकाशिकायाम्, नामप्रकरणे—२३, २८-२९ का०

**वैयाकरणा** अपि पूर्वोक्तान् भेदान् स्वीकुर्वन्ति । यथाह नागेशः[1]—शक्तिस्त्रिधा—

(१) रूढिः ।
(२) योगः ।
(३) योगरूढिश्चेति ।

अश्वगन्धापदमोषधिविशेषे रूढम् । अश्वसम्बन्धवत्तया वाजिशालाबोधे यौगिकम् । इदं यौगिकरूढम् । अत्र रूढिर्योगापहारिणी'ति नियमाद् यौगिकार्थबोधापहारस्तु न शङ्क्यः, प्रकरणाद्यभावे सत्येव तस्य नियमस्य प्रवृत्तेरिति च ।

**आलङ्कारिका** अपि प्राय इमान् भेदान् निरूपयन्ति । तेषु जयदेवः[2] किञ्चिद् विशिनष्टि । स प्रथमं रूढि-यौगिक-योगरूढेति भेदत्रयमुपपाद्य पुनः प्रत्येकं त्रिविधमाह । अव्यक्तयोग-निर्योग-योगाभासभेदाद् रूढिशब्दस्त्रिविधः । यत्राऽवयवार्थो विद्यमानोऽप्यस्फुटत्वाद् न प्रतीयते समुदायशक्त्यैवार्थबोधः, तत्राऽव्यक्तयोगः, यथा—वृक्षशब्दः । अत्र वृश्चत्यातपमिति योगार्थोऽस्फुटः । समुदायशक्त्यैव वृक्षत्वजातिः प्रतीयते ।

यत्रावयवार्थस्याभावः स निर्योगः । यथा—भूवादिशब्दाः । अत्र भू धातुः सत्तार्थकः, वा धातुश्च गतिगन्धनयोराम्नातः, तथापि व्युत्पत्तिलभ्यस्यार्थस्यात्राप्रतीतिः । वासदृशानां भूप्रभृतीनां वाचकतासत्त्वात् । यत्र तात्पर्यविषयीभूतेऽर्थे योगार्थस्यान्वययोग्यता नास्ति, तत्र योगाभासः, यथा—मण्डपादिशब्देषु । मण्डपशब्दस्य तात्पर्यविषयीभूते गृहरूपेऽर्थे मण्डं पिबतीति व्युत्पत्तिलभ्योऽर्थो नान्वेति ।

यौगिकशब्दा अपि त्रिधा—

(१) शुद्धयौगिकः ।
(२) यौगिकमूलयौगिकः ।
(३) सम्भिन्नयौगिकश्चेति ।

यत्र प्रकृतिप्रत्यययोगेनार्थप्रतीतिस्तत्र शुद्धयौगिकत्वम्, यथा—भ्रान्तिशब्दः । चलनार्थकानवस्थानार्थकोऽपि भ्रमधातुः प्रत्ययं विनाऽनवस्थारूपमर्थं न प्रत्याययति । **"स्त्रियां क्तिन्"** इत्यनेन क्तिनि कृते सत्येव प्रत्याययति । **'न केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्ययः'** इति प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमाच्च । प्रकृतिप्रत्यययोर्योगेनार्थप्रत्यायकत्वादस्य शुद्धयौगिकत्वम् । शुद्धयौगिकयोः समासेनार्थप्रत्यायकत्वं यौगिकमूलयौगिकत्वम् । यथा स्फुरत्कान्तिपदम् । अत्र शतृप्रत्ययान्तः 'स्फुरत्' शब्दः, क्तिन्नन्तः कान्तिशब्दश्च शुद्धयौगिकौ । तयोः समासेन स्फुरत्कान्तिसम्बन्धिनोऽर्थस्य प्रतीतिरिति स्फुरत्कान्तिपदं यौगिकमूलयौगिकम् ।

यौगिकायौगिकयोः सम्बन्धेनार्थबोधकत्वं सम्भिन्नयौगिकत्वम्, यथा—कौन्तेयशब्दः । अत्र राजवाचककुन्तिशब्दात् कुन्तेरपत्यं स्त्रीति विग्रहे **"वृद्धेत्कोशलाजादाञ् ञ्यङ्"** इति ञ्यङि

---

१. ल० म० श० भे० नि० ।
२. चन्द्रालोके-प्र० म० ९–११ ।

कृते **"स्त्रियामवन्तिकुन्तिकुरुभ्यश्च"** इति लुकि ङीपि कृते कुन्तीशब्दो यौगिकः। कुन्तिराज-पुत्रीत्यर्थस्य प्रकृतिप्रत्यययोगेन प्रत्यायकत्वात्। पुनः कुन्त्या अपत्यं पुमानिति विग्रहे **"स्त्रीभ्यो ढक्"** इति ढकि कृते, एयादेशे, टिलोपे, आदिवृद्धौ कौन्तेयशब्दोऽर्जुनवाचकोऽयौगिकः संवृत्तः। कुन्त्या अपत्यान्तरस्यापि सत्त्वात्। एवं यौगिकायौगिकयोः सम्बन्धात् कौन्तेयशब्दो सम्भिन्न-(सम्मिश्र)यौगिकः।

एवं योगरूढोऽपि त्रिविधः—

(१) सामान्यार्थस्थाने विशेषार्थबोधकत्वम्।

(२) विशेषार्थस्थाने सामान्यार्थबोधकत्वम्।

(३) सामान्यविशेषोभयार्थबोधकत्वं चेति।

तत्राद्यस्योदाहरणं नीरधिपदम्। इदं नीराणि दधातीति सरःकूपादिरूपं सामान्यार्थं विहाय समुद्ररूपं विशेषार्थं बोधयति।

द्वितीयस्य **'नीरधिः कूपः'** इत्युदाहरणम्। अत्र नीरधिशब्दः समुद्ररूपं विशेषार्थं विहाय सामान्यं नीरधारणकर्तृतया कूपरूपमर्थं बोधयति (आकाशपङ्कजपदं तु वस्तुतो लाक्षणिकमतो नोदाहर्तव्यम्)।

तृतीयस्योदाहरणम्—**'नीरधितया कूपः समुद्र इव राजते'** इति। अत्र नीरधिपदं सामान्यार्थमाश्रित्य कूपम्, विशेषार्थमाश्रित्य समुद्रं च बोधयतीति।

वस्तुतः सर्वे शब्दा रूढा एवेति, सर्वत्ररूढशक्तिरस्ति। समासेषु पदानां कृत्तद्धिततिङन्तेषु च प्रकृतिप्रत्ययानां विभागः काल्पनिक एवेति नास्ति योगशक्तिरित्यखण्डपदवाक्यस्फोट-वादिनाम् (वैयाकरणानाम्) मतम्। अत एव [1]पण्डितराजः—**'विशिष्टस्य विशिष्टार्थे रूढेरेवाभ्युप-गमम्'** इत्यवोचत्।

निरुक्तकार-शाकटायनयोर्मते सर्वे शब्दा यौगिका एव—**'सर्वं नाम धातुजमाह'** इति यास्कोक्तेः। अपि च—

**नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्।**
**यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम्॥** इति।

**शक्तिग्राहकाः—**

शक्तिग्रहश्च व्याकरणादितो भवति। [2]तदुक्तम्—

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।**
**वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥** इति।

धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद् भवति। गोसदृशो गवय इति श्रुत्वाऽ-रण्यं गतो गवयमवलोक्य गोसदृशो गवयपदवाच्य इति स्मरति, ततो गवयो गवयपदवाच्य इति बोध उपमित्या जायते। एवं कोशाद् यथा—**'स्वर्गनाकत्रिदिवस्त्रिदशालयाः'** इति। अत्र सर्वे

१. र० ग० द्वि० आ० अभिधानि०।
२. न्या० सि० मु० खं० उद्धृतम्।

शब्दा समानार्थाः, ततः स्वर्गार्था इति बोधः। आप्तवाक्याद् यथा—सास्नादिमद्व्यक्तिरियं गोपदवाच्या। व्यवहाराद् यथा—उत्तमवृद्धेन गामानयेत्युक्तम्, तदाकर्ण्य प्रयोज्यवृद्धेनानीतां गामवलोक्य बालोऽस्य वाक्यस्य गवानयनरूपमर्थमवधारयति। पश्चादावापोद्वापाभ्यां तत्तत्पदस्य तं तमर्थमवधारयति। व्यवहार एव शक्तिग्राहकेषु शिरोमणिः। वाक्यशेषाद् यथा—यवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घशूके प्रयोगमार्याः कुर्वन्ति, म्लेक्षास्तु कङ्गौ प्रयुज्यते, अतः शक्तिनिर्णयाय—

**वसन्ते सर्वशस्यानां जायते पत्रशातनम्।**
**मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः॥** इति।

अत्र वाक्यशेषाद् दीर्घशूके शक्तिर्निर्णीयते। विवरणाद् यथा—घटोऽस्तीत्यस्य कलशोऽस्तीति विवरणाद् घटपदस्य कलशे शक्तिग्रहः। **'तत् समानार्थकप दान्तरेण तदर्थकथनं विवरणम्'** इति। प्रसिद्धपदसन्निधानाद् यथा—**'इह सहकारतरौ मधुर पिको रौति'** इति श्रुत्वा सहकारतरौ कूजन्तं कोकिलं दृष्ट्वा पिकशब्दवाच्योऽयमिति शक्तिग्रहो जायते।

**सङ्केतितार्थ( अभिधेय )निरूपणम्—**

**मीमांसकेषु भट्टाः**—व्यक्तौ शक्तिस्वीकारे व्यक्तीनामानन्त्यात् शक्यताऽवच्छेदकानन्त्यमित्यानन्त्यदोषः। सर्वासां व्यक्तीनामेकत्राऽनुपलम्भात् काशिस्थायां गोव्यक्तौ सङ्केतग्रहे देशान्तरस्थाया गोव्यक्तेर्बोधाभावप्रसक्तेः। शक्तिग्रहं विनाऽपि बोधे गोशब्दाद् घटप्रतीत्यापत्तेश्चेति व्यभिचारः, अतो जातावेव शक्तिः सर्वेषां शब्दानामित्याहुः।

न च सामान्यलक्षणप्रत्यासत्त्या कस्याञ्चिद् व्यक्तौ शक्तिग्रहे जाते सकलव्यक्तिष्वभिधायाः कल्पनान्नास्ति व्यभिचार इति शङ्क्यम्, सामान्यलक्षणप्रत्यासत्तेर्निराकरणात्, आनन्त्यदोषस्य च दुरुद्धरत्वात्।

व्यक्तिप्रतीतिश्चाक्षेपाद् भवति। आक्षेपश्चार्थापत्तिः। गोत्वं हि स्वाश्रयं विनाऽनुपपन्नम्, तदाक्षिपतीति। **'येन विना यदनुपपन्नं तत्तेनाक्षिप्यते'** इति न्यायात्।

अविनाभावलभ्यस्यार्थस्य शाब्देऽन्वये कथं प्रवेशः **'शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यते'** इति न्यायादिति न शङ्क्यम्, श्रुतार्थापत्तिलभ्यस्य शाब्दे प्रवेशात्। श्रुतः शब्दोऽनुपपन्नः शब्दान्तरमाक्षिपतीति भाट्टसिद्धान्तात्।

**मण्डनमिश्रस्तु** व्यक्तिबोधं लक्षणया मेने। तदुक्तम्—

**जातेरस्तित्वनास्तित्वे न हि कश्चिद् विवक्षति।**
**नित्यत्वाल्लक्षणीयाया व्यक्तेस्ते हि विशेषणे॥** इति।

अत्र लक्षणीयाया व्यक्तेरित्युक्त्या व्यक्तिबोधं लक्षणयाऽयं स्वीकरोतीति। उक्तं च [1]भट्टपादैः—

---

१. आकृतिवादसन्दर्भे।

आनन्त्यव्यभिचाराभ्यां शक्त्यनेकत्वदोषतः ।
सन्देहाच्चरमज्ञानाच्चित्रबुद्धेरभावतः ॥
अन्वयव्यतिरेकाभ्यामेकरूपप्रतोतितः ।
आकृतेः प्रथमज्ञानात् तस्या एवाभिधेयता ॥
व्यक्त्याकृत्योरभेदाच्च व्यवहारोपयोगिता ।
लिङ्गसङ्ख्यादिसम्बन्धाः सामानाधिकरण्यधीः ॥
सर्वं समञ्जसं ह्येतद् वस्त्वनेकान्तवादिनः ।
लक्षणा वाऽभ्युपेतव्या जातेस्तेनाऽभिधेयता ॥

[1]**पार्थसारथिमिश्रश्च** व्याचख्यौ न ह्यनन्तासु व्यक्तिषु संज्ञित्वं शक्यतेऽवगन्तुम् । व्यभिचाराच्च व्यक्तीनामशब्दार्थत्वमित्यादि । ततश्च विशिष्टाभिधानमेव वाचो युक्त्यन्तरेणापन्नं न शुद्धाभिधानम् । विशिष्टाभिधाने च पूर्वतरं विशेषणमभिधातव्यम् । तदभिधाने च तत एवात्यन्ताविनाभूतव्यक्तिप्रतिपत्तिसिद्धे न तत्राभिधानशक्तिकल्पनाऽवसर इत्यादिः ।

अग्रे चाधिकरणसम्प्रदानादिरूपत्वममूर्तत्वाज्जातेरसम्भवमित्याशङ्कायां समादधे यद् जातिव्यक्त्योरविनाभावादाक्षेपादभेदाद्वा लक्षणया वा व्यक्तिप्रतीतिः । तथा हि—

तेन तल्लक्षितव्यक्तेः क्रियासम्बन्धचोदना ।
जातिव्यक्त्योरभेदो वा वाक्यार्थेषु व्यवस्थितः ॥ इति ।

एवं भाट्टा जातावेव शक्तिं स्वीकुर्वन्ति, व्यक्तिबोधस्त्वविनाभावादाक्षेपाद् जातिव्यक्त्योरभेदाद् लक्षणया वा वाञ्छन्ति ।

[2]**मम्मटभट्टश्च** रूढिप्रयोजनयोरभावाद् व्यक्तौ लक्षणां निरास्थत । न्यरूपयच्चाक्षेपाद् व्यक्तिबोधम्—**'जात्या व्यक्तिराक्षिप्यते[3]'** इत्युक्तेः ।

गुण-क्रिया-यदृच्छाशब्दानामपि जातावेव शक्तिः, तेषामभिप्रायो यद् हिम-पयः-शङ्खादिषु शुक्ल-शुक्लतर-शुक्लतम इति प्रतीत्या वस्तुतः श्वैत्यं भिन्नम्, तथाऽपि यत् सर्वत्र शुक्लः शुक्ल इत्येकशब्दप्रयोगः, एकार्थप्रतीतिश्च ( अनुगताकारप्रतीतिः ) जायते तत्र हेतुः सर्वत्र शुक्लत्वजातिरेव । न चैकवस्तुवृत्तेः कथं जातित्वम् ? शुक्लादिगुणानामनेकत्वम् । न च गुण एको नित्यश्चेति शङ्क्यम्, पाकाच्छुक्लं रूपं नष्टं श्याममुत्पन्नमिति प्रतीतेः । नित्यस्योत्पादविनाशाऽसम्भवात् । न चेयं भ्रान्तिः, अबाधप्रतीतेः ।

एवं गुडतण्डुलादिनिष्ठपाकक्रियादिषु प्रत्यक्षभेदसिद्धावपि 'पाकः' पाक इत्येकाभिधानप्रत्ययोत्पत्तेस्तत्र पाकत्वादिजातौ सङ्केतः ।

यदृच्छाशब्दविषये द्वयी गतिः । केषाञ्चिन्मते यदृच्छाशब्दानां शब्द एवार्थः । अपरेषां मते डित्थादिरूपयदृच्छाशब्दानामभिधेया सा व्यक्तिः । तत्राद्यमते बालवृद्धशुकाद्युदीरितेषु तारत्वमन्दत्वादिविरुद्धधर्माध्यासाच्च विभिन्नेषु डित्थादिशब्देषु डित्थत्वादिकं जातिरस्ति । अन्त्य-

१. शास्त्रदीपिकायामाकृत्यधिकरणे ।
२. का० प्र० द्वि० उ० उपादानलक्षणानिरूपणे । ३. तत्रैव ।

मतेऽपि बाल-कौमार-पौगण्ड-यौवन-प्रौढ-वृद्धत्वाद्यवस्थाभेदात् प्रतिक्षणं भिद्यमानेषु व्यक्तिरूपार्थेषु डित्थत्वादिकं जातिरस्ति।

इत्थं सर्वेषां शब्दानां जातावेव शक्तिग्रह इति।

मीमांसकानां मते शक्तिर्द्विधा—आनुभाविकी, स्मारिका च। तत्रानुभाविकी शक्तिः (वाक्ये) वर्तते। स्मारिकाकार्यान्विते शक्तिः पदे वर्तते पदनिष्ठायाः स्मारिकाया एव विषय इयान् विकल्प इति।

**प्राभाकराश्च**—अनुपपत्तिज्ञानाभावेऽपि गौरस्तीत्यादौ व्यक्तिप्रतीतेः समानवित्तिवेद्यत्वमाक्षेप इति निगदन्ति। सर्वा हि जातिबुद्धिर्व्यक्तिं विषयीकरोतीति जातिभासकस्यैव व्यक्तिभासकत्वं सिद्धमिति।

इमे शरवद्दीर्घदीर्घतरमभिधाव्यापारं वाञ्छन्ति। यथा बलवता प्रेरित इषुः शत्रोर्वर्मच्छेदं मर्मच्छेदं प्राणहरणं च विधत्ते, तथैव सुप्रयुक्तः शब्दः जातिं व्यक्तिं कार्यान्वितं चार्थं बोधयतीति। तेषां मते पदार्थानामन्वयेऽपि (वाक्यार्थेऽपि) शक्तिरस्ति। इतरपदार्थान्वितो घटो घटपदाभिधेयः। त एवं निगदन्ति—प्रथमं शक्तिग्रहो व्यवहाराज्जायते, व्यवहारश्च वाक्यादेवेति बालः प्रथमं प्रयोजकवृद्धवाक्यमाकर्ण्य कार्ये प्रवृत्तस्य प्रयोज्यवृद्धस्य चेष्टयाऽयमस्य वाक्यस्यार्थज्ञ इत्यनुमित्या निश्चिनोति। पश्चात् प्रयोज्यवृद्धकृतं कार्यं दृष्ट्वाऽस्य वाक्यस्यायमर्थ इत्यवधारयतीति प्रथममन्वितस्यैव बोधात् तत्र शक्तिं गृह्णाति। पश्चादावापोद्वापाभ्यां पदार्थमवगच्छतीति वाक्यार्थोऽपि वाच्यः। (मतमिदमन्यैराचार्यैर्बहुधा निराकृतं तन्मया **'तात्पर्यवृत्तिविमर्शे'**[1] **'कियन्तो वाक्यार्थवादाः'**[2] इत्यादिलेखे निरूपितम्)।

**भाट्टाश्च**—पदार्थमात्रे शक्तिं स्वीकुर्वन्ति, पदार्थानामन्वयबोधे कियन्तो लक्षणया केचनाकाङ्क्षायोग्यतासन्निधिवशाद् वाञ्छन्ति। एवं तार्किका अपि।

**नैयायिकास्तु**—जातिभासकस्य व्यक्तिभासकत्वस्वीकारे गोत्वमस्तीत्यादिवाक्यादपि व्यक्तिबोधापत्तेः। न च गोपदस्य गोत्व इव गोत्वपदस्यापि गोत्वत्वे शक्तिः, अतो गोत्वत्वं गोत्वं च तद्बोधयतीति शङ्क्यम्, गोत्वपदस्य गोत्वे शक्तिस्वीकारे व्यभिचाराभावात्। गोपदस्य व्यक्तौ शक्तिस्वीकारे व्यक्तीनामानन्त्यादानन्त्यव्यभिचारदोषौ प्रसक्तौ। गोत्वपदस्य गोत्वे शक्तिस्वीकारे गोत्वस्यैक्यात् तयोर्दोषयोः प्रशक्त्यभावात्।

अतो केवलायां जातौ शक्तिस्वीकारे व्यक्तेर्बोधानापत्तेः, जातिविशिष्टायां व्यक्तौ शक्तिरस्ति। अत एव गौतमः—**'जात्याकृतिव्यक्तयः पदार्थः'**[3] इति सूत्रयाञ्चक्रे।

केचन व्यक्तिशक्तिवादिनः[4] सन्ति तेषामयमभिप्रायो यद् व्यक्तावेव शक्तिः, जातेस्तु शक्यताऽवच्छेदकतया (उपलक्षणतया) भानं भवति, यथा लक्ष्येऽर्थे एव लक्षणा, न लक्ष्यताऽवच्छेदके परं लक्ष्यतावच्छेदकस्यापि प्रतीतिर्भवत्येवेति तद्वत्।

१. द्रष्टव्यम्—सारस्वती सुषमा—२९ व० २ अ०।
२. द्रष्टव्यम्—सारस्वती सुषमा—२९ व० ४ अ०।
३. द्वि० अ० द्वि० आ० ६८ तमं गौतमसूत्रम्।
४. म० भा० प्रदीपे (पस्पशा० किं पुनराकृतिः पदार्थ आहोस्विद् द्रव्यमित्येकः) व्यक्तिशक्तिवादी व्याडिराचार्यः 'द्रव्याभिधानं व्याडिः' इति वार्तिकात् (म० भा० १ अ०, २ पा० ३ आ० सरूपसूत्रभाष्ये)।

**बौद्धाश्च**—जातिं न स्वीकुर्वन्ति पदार्थमात्रं क्षणिकं वदन्ति। अतो यस्यां व्यक्तौ सङ्केतग्रहो जातः, सा व्यक्तिस्तु व्यवहारकाले नास्तीति व्यक्तावपि न सङ्केतग्रहः, अतो भेदेऽतद्व्यावृत्तौ सङ्केतः। गोशब्दो गवेतरानश्वादीन् व्यावृत्त्य गां बोधयतीति अतद्व्यावृत्तिरूपोऽपोह एवानुगतरूपेण वाच्य इति वदन्ति। परमनुभवविरुद्धत्वान्मतमिदमयुक्तम्। समानाकारासु सर्वासु गोव्यक्तिषु **'इयं गौः'** इत्येवानुभवः सर्वेषाम्, न त्वगोभिन्नो गोभिन्नभिन्न इति वा। अपि च यथैकस्या गोव्यक्तेरपरागोव्यक्तिर्भिन्ना तथैवाश्वादयोऽपि भिन्नाः। अस्यां स्थितौ यथैकस्या गोव्यक्तेर्भिन्नाऽपरा गोव्यक्तिर्गौरेव, तथैवाश्वादयोऽपि गोव्यक्तेर्भिन्नाः कथं न गावः ? इत्याशङ्कायामकामेनापि त्वया समानाकृतिमात्रेण गम्याया गोत्वजातेरेवान्यस्यां गोव्यक्तौ गोव्यवहारस्य निर्वाहकत्वं स्वीकरणीयं स्याद्। अतो जातिरेव पदार्थो नातद्व्यावृत्तिरिति दिक्।

**शाब्दिकमतम्**—

शाब्दिका व्यक्तेरुपाधिषु जाति-गुण-क्रिया-यदृच्छादिषु सङ्केतग्रहं वाञ्छन्ति। यदुक्तं महाभाष्ये[1] **'चतुष्टयी शब्दानां प्रवृत्तिः—जातिशब्दाः, गुणशब्दाः, क्रियाशब्दाः, यदृच्छाशब्दाश्च'** इति। जातिव्यक्तिपदार्थनिर्णयाधिकरणे[2] च आकृतिः पदार्थं उत द्रव्यमिति विचिकित्सायामुभयमिति समादधे।

अयं भावः—व्यक्तिः पदार्थ इति स्वीकारे व्रीहीनां बहुत्वादेव सम्पन्ना व्रीहय इत्यादौ बहुवचनोपपत्तौ तदर्थम् **"जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्"**[3] इति सूत्रप्रणयनं व्यर्थं स्यात्। यदि जातिरेव पदार्थः स्यात्, तदा जातेरेकत्वादेवैकशब्दप्रयोगोपपत्तावनेकशब्दस्यैकशेषार्थं कृतं **"सरूपाणामेकशेष एकविभक्तौ"**[4] इति सूत्रं व्यर्थं स्यात्, अतो लक्ष्यानुसारात् क्वचिज्जातिः पदार्थः, क्वचिच्च व्यक्तिरिति।

जात्याख्यायामिति सूत्रे महाभाष्ये **'जातिशब्देन हि द्रव्याभिधानम्'** इति वार्तिकेन जातिशब्दा द्रव्यमप्यभिदधतीत्युपपादितम्। परं निष्कृष्टजात्यभिधायकगोत्वादिशब्दे नायं विधिरित्युद्द्योतेन गोत्वादिशब्देन व्यक्तेरभिधानं न जायते, गवादिशब्देन तु जायत इत्यवसीयते।

सरूपसूत्रे भाष्ये च—**'न ह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः, द्रव्यपदार्थकस्य वा आकृतिर्न पदार्थः। उभयोरुभयं पदार्थः। कस्यचित् किञ्चित् प्रधानभूतं किञ्चिद् गुणभूतम्। आकृतिपदार्थकस्य आकृतिः प्रधानभूता द्रव्यं गुणभूतम्। द्रव्यपदार्थकस्य द्रव्यं प्रधानभूतमाकृतिर्गुणभूता'** इत्युपपादनाज्जातिवाचकशब्दानामुभयं पदार्थ इति गम्यते। तथापि जातिवाचकशब्दानां जातिरेव प्रवृत्तिनिमित्तमिति। उक्तं च भर्तृहरिणा[5]—**'न हि गौः स्वरूपेण गौर्नाप्यगौः गोत्वाभिसम्बन्धात्तु गौः'** इति।

---

१. ऋलृकसूत्रे पतञ्जलिः। २. पस्पशाह्निके महाभाष्ये।
३. पा० सू० १-२-५८। ४. पा० सू० १-२-६४।
५. वाक्यपदीयम्………।

अपि च व्यक्तौ सङ्केतस्वीकारे यथा पर्यायवाचिनोर्घटकलशयोः 'घटः कलशः' इत्येवं सहप्रयोगो न भवति, तथैवार्थभेदाभावाद् **'गौः शुक्लश्चलोडित्थः'** इति सहप्रयोगो न स्यात्। उपाधिषु जाति-गुण-क्रिया-यदृच्छारूपेषु सङ्केतस्वीकारे गोत्वरूपजातिमान्, शुक्लरूपगुणवान्, चलनरूपक्रियावान् डित्थनामाऽयमिति प्रवृत्तिनिमित्तभेदाद् भवति सहप्रयोग इति।

तत्र गुणक्रियायदृच्छानामानन्त्यात् तत्र शक्तिस्वीकारे व्यक्तिशक्तिपक्ष इवात्रानन्त्य-व्यभिचारदोषौ न शङ्कनीयौ, तेषां मते गुण-क्रिया-यदृच्छानामैक्यात्। भेदस्त्वाश्रयभेदाल्लक्ष्यते। यथैकमेव मुखं खड्गे दीर्घम्, तैले वर्तुलं लघु, मुकुटे स्फुटं इति भिन्नं प्रतीयत इति।

**आलङ्कारिका** अपि **वैयाकरणानुयायिनस्तेऽपि** निगदन्ति यत् **'गामानय'** इत्युक्तौ व्यक्तेरेवानयनं सम्भवति। अतो व्यवहारनिर्वाहिका व्यक्तिरेवेति तत्रैव सङ्केतग्रहो युक्तः, तथापि व्यक्तीनामानन्त्याद् व्यभिचाराच्च न तत्र सङ्केतः। तथा हि—सर्वस्यां व्यक्तौ सङ्केतः, उत यस्यां कस्याञ्चिद्? तत्र नाद्यः, सर्वासु व्यक्तिषु सङ्केतग्रहस्यासम्भवात्। नान्त्यः, यत्र न सङ्केतग्रहस्तस्याम् अपि बोधप्रसक्तेर्व्यभिचारात्, अतो जातौ गुणे क्रियायां संज्ञायां च सङ्केतग्रहो युज्यत इति। तदुक्तं मम्मटेन[1]—**'तदुपाधावेव सङ्केतः'** इति।

**महिमभट्टश्च**[2]—केषाञ्चिन्मतमुपपादयन्नाह यत्—**'सर्वेषां शब्दानां क्रियैव प्रवृत्ति-निमित्तम्'** इति। **'सर्वं नाम धातुजम्'** इति निरुक्तसिद्धान्तात् सर्वाणि नामपदानि क्रियामेव प्रवृत्तिनिमित्तत्वेनाश्रयन्ति। घटादिशब्दा **'घटते इति घटः'** इति व्युत्पत्तिलभ्यघटनादि-क्रियामपेक्ष्यैव स्वार्थं प्रतिपादयन्ति। यद्यपि घटनक्रिया घटत्वजातियुक्ताऽप्यस्ति, तथापि घटनं विना घटव्यपदेशाभावात् क्रियैव प्रवृत्तिनिमित्तम्।

महाभाष्यकारोऽपि[3] **'न सन्ति यदृच्छा शब्दाः'** इत्याह। नागेशश्च[4] नन्वेवं यदृच्छा शब्दानां क्वान्तर्भाव इत्याशङ्क्य समादधे। एवं सर्वेऽपि व्युत्पन्नाः क्रियादिशब्दा एवेति। यद्यपि **'आदिपदेन गुणशब्दा अपि त इति वक्तुं शक्यते, तथाऽपि धातुजन्यत्वात् क्रियाशब्दा एव'** इति।

**अभिधेव शब्दवृत्तिः—**

महिमा केवलामभिधामेव शब्दशक्तिं मनुते। तद्यथा—**शब्दस्यैकाभिधाशक्तिरर्थस्यैकैव लिङ्गता[5]** इति। **कुन्तकोऽपि** अभिधामेव सहृदयहृदयानुरञ्जकविविधवैचित्र्यचारुव्यङ्ग्यार्थ-प्रत्यायनक्षमां विदग्धजनमनोलक्षितलक्ष्यार्थावगमनसमर्थां मनुते, परं तस्याऽभिधा विचित्रा वर्तते। यदुक्तं तेनैव—**'वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते'** इति कारिकावृत्तौ **'वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा'** इति।

[7]**मुकुलभट्टोऽप्यभिधामेव** निरन्तरार्थनिष्ठसान्तरार्थनिष्ठतया द्विविधां मनुते। कियन्तो मीमांसानुयायिनो भट्टलोल्लटप्रभृतयः **'यत्परः शब्दः स शब्दार्थः'** इति न्यायं पुरस्कुर्वन्तो प्रतीतिमात्रेऽभिधां मन्वते। दशरूपककारस्यापि मतेऽभिधा रसप्रतीतिपर्यन्तं तात्पर्येणाकृष्यते।

---

१. का० प्र० द्वि० उ० १० म० सूत्रे।
२. व्यक्तिविवेके प्र०।
३. ऋलृक्सूत्रे महाभाष्ये।
४. तत्रैवोद्योते।
५. व्य० वि०।
६. वक्रोक्तिजीविते १० का० वृ०।
७. अभि० वृ० मा०।

**प्राचीनवैयाकरणा** अपि शब्दस्यैकामेव वृत्तिमभिधामभिदधति । सा प्रसिद्धा, अप्रसिद्धा चेति । प्रसिद्धाऽभिधेयार्थाभिधानसमर्था, अप्रसिद्धा चान्यैर्लक्ष्यतया व्यवहृतस्यार्थस्य बोधनक्षमेति ।

वस्तुतः शब्दस्य साक्षाद् वृत्तिरेकैवाभिधेति निश्चितम् । लक्षणा तु मुख्यार्थसम्बन्धेनार्थं बोधयन्ती साक्षादर्थस्यैव व्यापारः, परम्परया शब्दव्यापारः । यद्यपि प्रयुक्ताल्लक्षकशब्दादेव लक्ष्यार्थप्रतीतिः, तथापि मुख्यार्थबाधे सति मुख्यार्थसम्बन्धेन लक्ष्यार्थस्य प्रतीतिर्जायते। अतोऽर्थस्यैव व्यापारः, शब्दस्य त्वारोपितव्यापारः । अत एव मम्मटप्रभृतय आलङ्कारिकाः **'लक्षणारोपिता क्रिया'**[1] इति अभिधापुच्छभूतेति[2] **'लक्षणाशक्तिरर्पिता**[3]**'** इति च निगदन्ति ।

एवं व्यञ्जनाया अर्थवृत्तित्वे न कस्यचिद् विमतिः । मीमांसका निगदन्त्येव—

**स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः ।**

**यथा दीपोऽन्यथाभावे का विशेषोऽस्य कारकात् ॥** इति ।

**नैयायिका** अपि हरीतकीभक्षणं जलगतमाधुर्यस्य व्यञ्जकं स्वीकुर्वन्त्येव ।

**आलङ्कारिका** अपि अर्थसामर्थ्याक्षिप्तत्वं[4] रसादीनां निरूपयन्त्येव । अभिनवगुप्तश्चार्थसामर्थ्याक्षिप्तत्वमिति'[5] वस्त्वलङ्काररसादिरूपव्यङ्ग्यत्रयव्यापकं लक्षणमित्यादि स्वीकुर्वन्नत्रानुकूल एव । अत एव व्यञ्जना सामान्यतया द्विविधा—

( १ ) अभिधामूला,

( २ ) लक्षणामूला चेति ।

शाब्द्यां व्यञ्जनायामपि यद्यप्रस्तुताऽर्थेऽभिधा न ज्ञाता स्यात्, ज्ञाता वा विस्मृता स्यात्, तदाऽप्रस्तुतार्थस्य व्यङ्ग्यस्य प्रतीतिरेव न जायत इति सिद्धमर्थवृत्तित्वं व्यञ्जनायाः, तथाऽपि तत्तद्व्यङ्ग्यार्थबोधे शब्दोऽपि निमित्तमिति कृत्वाऽन्वयव्यतिरेकाभ्यां च शब्दवृत्तिरप्याचार्यैरभिधीयते । एकस्मिन् शब्दे एकैव शक्तिर्नाना वा ? सा चैकस्मिन् शब्दे एकैव । यत्रैकस्मात् शब्दान्नानार्थप्रतीतिस्तत्र वस्तुतो जतुकाष्ठन्यायेन संश्लिष्टा नान्यशब्दाः सन्ति । एकप्रयत्नोच्चार्यत्वात् समानाकारत्वमात्रेणैकः शब्दो नानार्थ इति व्यवहारः । अतस्तेषु तत्तदर्थनिरूपिता नानाशक्तिरस्ति । एतन्मूलकमेवार्थभेदाच्छब्दभेद इत्यादयो न्यायाः सङ्गच्छन्ते । महाभाष्यकारोऽपि **'सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति'** इति निर्वक्ति ।

**केचनाचार्या** अर्थभेदेऽपि शब्दभेदं न वाञ्छन्ति । त एवं निगदन्ति—यथैकस्मिन्नाम्रफले रूपरसगन्धादीनां भिन्नानां समवायः, तथैवैकस्मिन् शब्दे नानार्थनिरूपिता नानाशक्तयः समवेताः सन्ति । एकवृन्तगतफलद्वयन्यायेनैक एव शब्दोऽनेकमर्थमभिधत्ते ।

---

१. का० प्र० द्वि० उ० ।　　२. का० प्र० ५ उ० ।

३. सा० द० द्वि० प० ।　　४. आनन्दवर्धनः—ध्व० लो० प्र० उ ।

५. तत्रैव लोचने ।

**अपरे** निरूपकभेदेऽपि शक्तिभेदं न वाञ्छन्ति । तेषां मते शब्देऽनेकस्याप्यर्थस्य बोधिकैकैव शक्तिरिति त्रिविधं दर्शनम्[१] । एतन्मूलकमेव शक्यैक्ये शक्तिरेका, शक्यताऽवच्छेदकैक्ये शक्तिरेका, शक्यताऽवच्छेदकाऽवच्छेदकैक्ये शक्तिरेकेति प्रवादाः प्रचलन्ति ।

अत एव **'घटोऽस्ति'** तमानय इत्यत्र तच्छब्दस्य घटबोधकत्वात्, **'पटोऽस्ति** तं पश्य' इत्यत्र तच्छब्दस्य पटबोधकत्वात्, बालो गच्छति तमाकारयेत्यत्र बालस्य बोधकत्वात् तच्छब्दाद् नानार्थकतापत्तिमाशङ्क्य तद्वारणाय **'बुद्धिविषयत्वोपलक्षिततत्तद्धर्माऽवच्छिन्ने तत्पदशक्ति'** वाञ्छन्ति । तस्य शक्या घटपटादयस्तु भिन्नाः, शक्यताऽवच्छेदका घटत्वपटत्वादयोऽपि भिन्नाः, परं शक्यताऽवच्छेदिकाऽवच्छेदिकाया बुद्धेरैक्यात् ते तच्छब्दे एकां शक्तिं वाञ्छन्ति । अपरे बुद्धिस्थस्तत्पदशक्य इति कृत्वा बुद्धिविषयः शक्यः शक्यताऽवच्छेदिका बुद्धिः, सा चैकेति तदादिशब्दे एकां शक्तिं वाञ्छन्ति । अतो न तदिदमदःप्रभृतयः शब्दा नानार्था इति ।

**नानार्थस्थलीयविचारः—**

नानार्थस्य शब्दस्य सर्वेष्वर्थेषु सङ्केतग्रहस्य तुल्यत्वात् श्रुतमात्रादेव नानार्थशब्दात् सर्वेषामर्थानामुपस्थितौ वक्तुः कस्मिन्नर्थे तात्पर्यमिति सन्दिहानः श्रोता तात्पर्यनिर्णायकं प्रकरणादिकं पर्यालोचयति । एवं जाते तात्पर्यनिर्णये संयोगादिभिस्तत्रैवाभिधाया नियन्त्रणात् तात्पर्यविषयीभूतमर्थमभिधा बोधयति । पश्चात् चमत्कारिणोऽप्रस्तुतार्थस्य बोधो यदि सहृदयानुभवसाक्षिको जायते, तदाऽभिधाया नियन्त्रणात् तदर्थबोधिका काचनान्या वृत्तिरुपास्यैव । सा च व्यञ्जनेति **मम्मटादीनां** मतम् ।

तथा चोक्तम्—

**अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।**
**संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम्**[२] ।। इति ।

**अप्पयदीक्षितप्रभृतयश्च** द्वयोः प्रस्तुताप्रस्तुतार्थयोरभिधयैव बोधं प्रतिपादयन्ति । द्वयोरर्थयोः शक्तिग्रहस्य तुल्यत्वादभिधयैवोपस्थितेः । संयोगादयश्च तात्पर्यनिर्णायकाः सन्ति । नाभिधाया नियन्त्रका[३] इति ।

**नैयायिका** अपि संयोगादयो लिङ्गविधया तात्पर्यग्राहकाः सन्तीति निगदन्ति । श्लेषस्थले तु द्वयोरर्थयोः प्राकरणिकत्वादभिधयैव बोध इति सर्वसम्मतम् ।

**शक्तेर्नित्यत्वानित्यत्वविचारः—**

**मीमांसकास्तु** शब्दार्थसम्बन्धरूपां शक्तिं नित्यां मन्यन्ते । तथाह—भगवान् जैमिनिः **'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः**[४]**'** इति । शबरस्वामी च **'औत्पत्तिक इति नित्यं ब्रूमः । उत्पत्तिर्हि भाव उच्यते लक्षणया । अवियुक्तः शब्दार्थयोर्भावः'**[५] इति व्याचख्यौ । प्राचीननैयायिकाश्चेश्वरेच्छां रूपां शक्तिं स्वीकुर्वन्ति । ईश्वरेच्छा एका, नित्या चेति ।

---

१. ल० मञ्जूषादौ स्पष्टम् ।　　२. का० प्र० द्वि० उ० ।
३. वृत्तिवार्त्तिके, कुवलयानन्दे च श्लेषाऽलङ्कारे ।
४. मी० सू० १-१-५ ।　　५. तत्रैव शा० भा० ।

**वैयाकरणाश्च** शब्दार्थसम्बन्धं नित्यमङ्गीकुर्वन्ति। तथा हि महाभाष्यम्[1]—'**सिद्धे शब्दार्थसम्बन्धे**' इति। अत्र नित्यपर्यायवचनः सिद्धशब्दः। शब्दो नित्यः, अर्थो नित्यः, तयोः सम्बन्धश्च नित्य इति। प्राचीनवैयाकरणा अपि '**अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा**' इत्यादिना शब्दानामर्थैः सहानादिः सम्बन्ध इति निगदन्तोऽत्रानुकूलाः सन्ति।

**जैनाश्च** शब्दार्थसम्बन्धमनित्यं वदन्ति। त एवं कथयन्ति यत् शब्दार्थसम्बन्धः स्वरूपतो नित्यः, सम्बन्धिनोर्नित्यत्वाद् वा। तत्र न प्रथमः, सर्वान् प्रत्यर्थप्रत्यायकत्वाभावात्। अर्थाद् यथा दीपः स्वरूपतः प्रकाशकः, सर्वान् प्रतिपदार्थान् प्रकाशयति, तथा श्रुतः शब्दः सर्वान् प्रत्यर्थान् न बोधयति। बहुषु श्रोतृषु केचनार्थमवगच्छन्त्यपरे न।

यदि सम्बन्धिनोः शब्दार्थयोर्नित्यत्वात् सम्बन्धो नित्यश्चेत्, सम्बन्धिनौ शब्दार्थौ न नित्यौ (जैनास्तार्किकाश्च शब्दमनित्यं प्रतिपादयन्ति जातिशक्तिवादिनां मतेऽर्थो नित्योऽप्यन्येषां मतेऽनित्यः), अतो न स्वरूपतः, न वा सम्बन्धिनित्यत्वात् सम्बन्धो नित्यः। (नित्यत्ववादिनः समादधति यत् सम्बन्धः स्वरूपतो नित्यः, तथाऽपि ज्ञातः सन्नुपयुज्यते, ज्ञातश्च सङ्केतेन भवति। अतो येन पुंसा सम्बन्धो ज्ञातस्तेनैवार्थोऽवगम्यते, नाज्ञातेनेति, अतो न दीपवत् सर्वान् प्रत्यर्थप्रकाशकताशब्दस्येति।)

**शक्त्याश्रयस्य नित्यानित्यत्वविचारः**

**नैयायिकानां** मते शक्तेराश्रयः शब्द एव। स चानित्यः। उत्पन्नः को विनष्टः क[2] इत्यनुभवात्। न च सोऽयं क इति प्रत्यभिज्ञावशाच्छब्दो नित्य इति वाच्यम्, सजातीयेऽपि सोऽयमिति व्यवहारात्। '**तदेवेदं भवतः कार्षापणं यन्मथुरायां गृहीतम्**' इत्यस्मिन्नपि सोऽयमिति व्यवहारदर्शनात्। स च गुण आकाशस्य नित्यविभुगुणानां त्रिक्षणावस्थायित्वनियमादनित्यः।

**मीमांसकास्तु** सोऽयं क इति प्रत्यभिज्ञाबलाद् वर्णा नित्या इति निगदन्ति। उत्पन्नः कः, विनष्टः क इति बुद्धिस्तु व्यञ्जककण्ठताल्वाद्यभिघातरूपव्यापारस्योत्पादविनाशाभ्यां वर्णे उपचरिता। वर्णानित्यत्वस्वीकारेऽनन्तवर्णकल्पनायां गौरवात्। सोऽयं वर्णात्मकः शब्दो नित्यः, विभुः, द्रव्यं च। व्यापकत्वेन सर्वमूर्तद्रव्यसंयोगाश्रयत्वात् संयोगस्य च गुणत्वात्। गुणाश्रयत्वं द्रव्यत्वमिति द्रव्यम्। अपि च तारत्वमन्दत्वादीनां गुणानामाश्रयत्वात् शब्दो द्रव्यम्, न गुणः; गुणे गुणानङ्गीकारात्।

**वैयाकरणाश्च** शब्दब्रह्मवादिनो व्यापकं नित्यं स्फोटरूपं शब्दब्रह्म निरूपयन्ति। तदुक्तं व्याकरणस्यानुषङ्गिकप्रयोजनावसरे महाभाष्ये—

**चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।**
**गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति**[3]॥ इति।

---

१. पस्पशाह्निके प्रथमवार्त्तिकम्।
२. उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता।
सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते॥ इति। (न्या० सि० मु० १६७ का०)
३. पस्पशाह्निके महाभाष्ये।

**नागेशश्च** तत्रैवोद्द्योते पदजातानीति प्रतीकमुपादाय व्याख्यत्—**'परापश्यन्तीमध्यमा-वैखर्यः, नामादीनि च'** इति ।

अयं भावः—परावाङ् मूलाधारे तिष्ठति । इयं ब्रह्मरूपैव । स्पन्दशून्या बिन्दुरूपा । आत्मा बुद्धयाऽर्थान् समेत्य विवक्षया मनः प्रेरयति । मनः कायाग्निमाहन्ति । कायाग्निश्च वायुं प्रेरयति । तदा प्राणाग्नितत्त्वयोः संयोगेन संस्कृता भूत्वा परावाक् नादं प्रकाशयति । नादोऽयं व्यापके स्फोटरूपे शब्दे प्रतिबिम्बते । प्रतिबिम्बोऽयमतीव सूक्ष्मः । योगिभिरपि सविकल्पकतयाऽज्ञेयः । ततो नाभिदेशमागच्छता वायुनाऽभिव्यक्ता मनोगोचरीभूता पश्यन्ती-वागुच्यते । इमां योगिनः सविकल्पकतया जानन्ति । ततो हृद्देशमागच्छता तेन वायुनाऽभि-व्यक्ता तत्तदर्थवाचकशब्दस्फोटरूपा सूक्ष्मतमा श्रोत्रग्रहणाऽयोग्या जपादौ बुद्धिनिर्ग्राह्या मध्यमावागुच्यते । तत आस्यपर्यन्तमागच्छता तेन वायुनोर्ध्वमाक्रमता च मूर्धानमाहत्य परावृत्त्य च कण्ठताल्वादिपञ्चषास्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या वैखरीवागुच्यते । तदाह हरिः —

**परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता ।**
**हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा**[१] **॥**
**वैखर्या हि कृतो नादः परश्रवणगोचरः ।**
**मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते ॥** इति ।

तादृशमध्यमानादव्यङ्ग्यः शब्दस्फोटात्मको ब्रह्मरूपो नित्यश्च । स च यद्यप्येकोऽ-खण्डश्च, तथापि जपाकुसुमलौहित्यपीतत्वादिव्यञ्जकोपरागवशात् लोहितः स्फटिकः पीतः स्फटिक इति भानवद् वर्णादिभिर्व्यङ्ग्यो वर्णरूपः पदरूपो वाक्यरूपश्च । किं च व्यञ्जकध्वनि-गतं कत्वगत्वादिकं स्फोटे भासते । बिम्बगतधर्मवैशिष्ट्येनैव प्रतिबिम्बस्य लोकेऽवधारणात् । व्यञ्जकरूषितस्यैव स्फटिकादेर्भानाच्च ।

यथैकस्यैव चेतनस्यौपाधिको जीवेश्वरभेदो जीवानां च परस्परं भेदः, एवं स्फोटे व्यञ्जकध्वनिगतकत्वादिभानात् ककारो बुद्ध इत्यौपाधिको भेदः । व्यवहारदशायां पदवाक्ययोः सखण्डत्वपक्षे त्वन्तिमवर्णव्यङ्ग्यः स्फोट एक एव । पूर्वपूर्ववर्णस्तु तात्पर्यग्राहक इति ।

**आलङ्कारिकमतम्**

अलङ्कारशास्त्रस्य व्याकरणपरिशिष्टत्वाद् वैयाकरणानां मतमेवालङ्कारिकमतम् । ( कश्चनाधुनिको मीमांसाशास्त्रपरिशिष्टत्वमुपपादयंश्चिन्त्य एव । मीमांसकानामभूमिं रसं व्यञ्जनां चोपपादयत् साहित्यशास्त्रं किं मीमांसापरिशिष्टम् ? न केनापि विदग्धेन वक्तुं शक्यत इति अग्रिमलेखे व्यक्तमुपपादयिष्यामः ) ।

परं यथा व्याकरणशास्त्रं सर्ववेद-( विद्या ) पारिषदम्, तथैव साहित्यमपि । तथा हि महाभाष्यम्—**'सर्ववेदपारिषदं हीदं शास्त्रम्'** इति । तथैव राजशेखरश्च—**'सा हि चतसृणां विद्यानां निष्यन्द'**[२] इति निरूपयति ।

---

१. वाक्यपदीयम् । २. का० मी० ।

**निष्कर्ष :**

तत्र विद्वद्भिर्मीमांसकवैयाकरणमतमेव समीचीनमित्यङ्गीक्रियते। युक्तं चैतद्, यतो हि—अर्थबोधानुकूला शब्दनिष्ठा काचन शक्तिरभिधात्वेन विवक्षिता। आत्मनो गुणरूपाया इच्छाया आत्मनिष्ठत्वेन शब्दनिष्ठत्वाभावात् शब्दशक्तित्वानभ्युपगमात्। यद्यपि विषयतासम्बन्धेनेच्छा शब्देऽपि वर्तते, तथापि विषयतासम्बन्धो न वृत्तितानियामकः, इच्छावान् शब्द इच्छावानर्थ इति व्यवहाराभावात्।

अपि च शक्तिःशक्तात् पृथङ्नोपलभ्यत इति सर्वसम्मतसिद्धान्तः। एतन्मूलकमेव पठ्यते **'शक्तिशक्तिमतोरभेदः'** इति। शक्तं पदमित्युच्यते, शक्तेश्च पदात् पृथगात्मनि समवायेनोपलब्धेर्नेच्छा शब्दशक्तिः। शक्तिः समवायेनैव शक्ते उपलभ्यते।

अपि च शब्दादर्थः प्रतीयते अतोऽर्थेन सह शब्दस्य कश्चन सम्बन्धोऽवश्यमभ्युपेयः। स च सम्बन्धो वाच्यवाचकभावः, प्रत्याय्यप्रत्यायकभावो वा। स एवाभिधाशक्तिर्वा। तस्याः ज्ञानं सङ्केतेन भवति। सङ्केतज्ञानं च लोकाद् व्याकरणादिना चेति न सङ्केत एवाभिधेति।

यद्यपि नैयायिकमनीषिणः स्वमतं सकलसंशयनिरासपूर्वकं प्रौढ्या उपपादयन्ति, प्रतिभाप्रतिभासितान्तःकरणानां किं दुर्वचम्, तथापि ऋजुरयं मार्ग इति कृत्वा विद्वद्भिर्मीमांसकादिमते पक्षपातो विहितः, तथैव जातिविशिष्टव्यक्तौ शक्तिग्रहम् इति नैयायिकमतमेव ज्यायः। मीमांसकमतस्वीकारे व्यक्तिबोधो लक्षणया, आक्षेपादभेदाद् वेति गौरवम्। अर्थक्रियाकारिता तु व्यक्तावेवेति व्यक्तिबोध आवश्यकः। अत एव शाब्दिका जातिः पदार्थः, व्यक्तिः पदार्थ इत्युभयं स्वीकुर्वन्तीति तन्मतनिरूपणावसरे द्रष्टव्यम्। अत एव गौतमः—'जात्याकृतिव्यक्तयः पदार्थः' इति सूत्रयाञ्चक्रे।

सम्बन्धेनैव शब्दोऽर्थे प्रवर्तत इति वृत्तिपदेनाप्यभिधादीनां व्यवहारः। अभिधैवान्यासु वृत्तिषु मुखमिव प्रधानत्वाद् मुख्यावृत्तिः, तया बोध्योऽर्थो मुख्यः, वाच्योऽभिधेयो वा, तया बोधकः शब्दश्च मुख्यो वाचकोऽभिधेय इति वोच्यते। सर्वेषु प्रमाणेषु यथा प्रत्यक्षस्य प्राबल्यम्, तथैव सर्वासु वृत्तिष्वभिधाया इति नाविदितचरं विपश्चिताम्।

इयं शब्दशक्तिर्यदा सङ्केतग्रहसहकारेण मुख्यमर्थं प्रतिपादयति, तदाऽभिधेत्युच्यते। यदा मुख्यार्थबाधे सति रूढिवशात् प्रयोजनं वाऽभिसन्धाय मुख्यार्थसम्बन्धेनान्यमर्थं प्रतिपादयति, तदा लक्षणेति व्यवह्रियते। यदा वक्तृबोधव्यादिवैशिष्ट्यात् प्रतिभाशालिनां वाच्यार्थातिरिक्तं चमत्कारिणमर्थं प्रत्याययति, तदा व्यञ्जनेति व्यवह्रियते। इत्थं सहकारिविषयस्वरूपादीनां भेदात् शक्तिभेदः।

**इति शम्।**

● ● ●

# काव्यप्रकाशकृतामेकस्या उक्तेर्निकषनिकर्षणम्

श्रीशशिधरशर्मा, वाचस्पतिः,

प्राध्यापकः, पञ्चापविश्वविद्यालये, चण्डीगढ़

काव्यप्रकाशः खल्वाकरग्रन्थो भरतागमस्य । यत्र हि न केवलं काव्यतत्त्वस्य, न्याय-व्याकृतिपूर्वोत्तरमीमांसानामपि तत्त्वं प्रसङ्गतः सम्पिण्ड्येव सन्निबद्धम् । अत एव प्रदीपकारः श्रीमान् गोविन्दो यदा काश्मीरेश्वरसभां प्रविष्टः—**'किं श्रीमताऽधीतम्'** इति पृष्टे **'काव्यप्रकाशो मयाऽधीतः'** इत्यूचिवान् **'किं केवलं काव्यप्रकाशः'** इति पुनः पृष्टे, **'तदङ्गतया च सर्वाण्यपि शास्त्राणि'** इत्युत्तरयन् प्रसिद्धः किलैतिह्यविदां गोष्ठीषु । अत एव च यथा हरिरिति पुरुषोत्तम एव महेश्वर इति हर एव, शतक्रतुरिति चेन्द्र एव प्रसिद्धः—

**हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यम्बक एव नापरः ।**

**तथा विदुर्मां मुनयः शतक्रतुं द्वितीयगामी न हि शब्द एष नः[1] ॥**

इति स्वयं देवेन्द्रस्य भणितिः, तथैव "वाग्देवतावतारः" इत्यादरभरनिर्भरं मम्मटभट्टस्यैव काव्यप्रकाशप्रणेतुर्धन्यमभिधानश्चक्रुः पूर्वे, नापरस्य गुण्याः कस्यापि । मम्मटभट्टेन पूर्वे परे चाप्यालङ्कारिकास्तथाऽतिशयिताः, यथा कविकुलगुरोः—**'पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः[2]'** इति ।

**मुक्ताशतातिमूल्या सूक्तिः पुर इव परिस्फुरति ।** अथापि ब्रह्मणः परं को वा प्राश्नः । **'सो अङ्गवेद यदि वा न वेद'[3]** इति च वेदभगवत एव भाषितम् । एवमेव शब्दब्रह्मविषयेऽपि । सर्वथाऽनवद्यतेति च विश्वसीमाऽतिपातः ।

एवञ्च **'काव्यप्रकाशेऽपि** तत्रभवता मम्मटभट्टेनार्थशक्त्युद्भवस्य व्यञ्जकत्वं निदिदर्शयिषुणा स्वतःसम्भविनाऽलङ्काररूपेणार्थेनालङ्काररूपस्यार्थस्य व्यञ्जकत्वे उदाहृतम्—

**गाढकान्तदशनक्षतव्यथा सङ्कटादरिवधू जनस्य यः ।**

**ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम्[4] ॥** इति ।

**व्याख्यातञ्च—'अत्र विरोधालङ्कारेणाधरनिर्दशनसमकालमेव शत्रवो व्यापादिता इति तुल्ययोगिता । मम क्षत्याप्यन्यस्य क्षतिर्निवर्ततामिति तद्बुद्धिरुत्प्रेक्ष्यत इत्युत्प्रेक्षा[5] च' इति । अत्रेदं चिन्त्यम्—**

---

१. रघुवंशम् ३।४९ ।

२. कुमारसंभवम् १।१ ।

३. ऋग्वेदः— १०,१२९,७ ।

४. काव्यप्रकाशः—४ । आनन्दाश्रमीये प्रदोपोद्द्योतयुते, पृष्ठाङ्कः १४२ ।

५. तत्रैव ।

वाच्येन वस्तुनाऽलङ्कारेण वा वस्तुनोऽलङ्कारस्य वा स्वतःसम्भविना, कविप्रौढोक्तिसिद्धिना तन्निबद्धप्रौढोक्तिसिद्धेन वार्थेनाभिव्यञ्जनम्—

**अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः सम्भवी स्वतः ।**
**प्रौढोक्तिमात्रात्सिद्धो वा कवेस्तेनोम्भितस्य वा ॥**
**वस्तु वाऽलङ्कृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत् ।**
**वस्त्वलङ्कारमथवा तेनाऽयं द्वादशात्मकः[1] ॥** इति ।

अनया कारिकयोपक्षिप्तं तत्प्रसङ्गेनोल्लिखितेपूदाहरणेपु तुरीयं प्रकृतमुदाहरणम् ।

**अयमत्र प्रकाशकृतामभिप्रायः—**

निजमप्यधरं दशन् रिपूणां वधूसम्बन्धिनोऽधरान् मोचयति । तद्विघातेनेति विरोधः । निजाधरदशनशत्रुनिहननयोः समानकालिकत्वाच्च तुल्ययोगितेति । तथा च पूर्वेण परस्या व्यक्तिः स्वतोऽपि सम्भाव्यमानेनेति । यथा वामनाचार्यझल्कीकरा व्याचख्युः—'**विरोधालङ्कारेणेति । विरोधाभासालङ्कारेणेत्यर्थः ।** ओष्ठविषयकयोर्दशनमोचनयोर्विरोधः ( यो हि निजमप्यधरं दशति स कथं परेषामधरान्मोचयतीति विरोधः)। ओष्ठत्वेन सामानाधिकरण्यस्य विवक्षितत्वात् । प्रतियोगिभेदेनाभास इति बोद्धव्यम् । तुल्ययोगितेति । वीरानुभावत्वेन प्रकृतयोः स्वाधरदशनशत्रुव्यापादनयोरेककालरूपैकधर्मसम्बन्धेन तुल्ययोगितालङ्कार इत्यर्थः । व्यज्यते इति शेष इत्युद्द्योतसुधासागरयोः स्पष्टम् । उक्तं च विवरणे । ओष्ठदशनेन ओष्ठदशनव्यथामोचनं विरुद्धम् । विरुद्धं च ओष्ठदशनव्यथामोचनक्रिययोः कार्यकारणयोरपि समकालिकत्वमिति । तेन च स्वाधरदशनशत्रुव्यापादनयोरेककालिकत्वरूपैकधर्मसम्बन्धात् तुल्ययोगितेति । व्यङ्ग्यान्तरमपि दर्शयति मम क्षत्यापतेति । मम नृपस्य । अन्यस्य वैरिवधूजनस्य । तद्बुद्धिः = नृपबुद्धिः । उत्प्रेक्ष्यते इतीति उत्प्रेक्षणादित्यर्थः । उत्प्रेक्षा चेति व्यज्यते इति शेषः । चकारेण समुच्चयार्थकेन तुल्ययोगितोत्प्रेक्षयेः संसृष्टिः सूच्यते इति ।[2]

परन्तु वाच्येन वस्तुनाऽलङ्कारेण वा वस्तुनोऽलङ्कारस्य वा व्यज्यमानतां निदर्शयन्ति सर्वाण्यपीमानि निदर्शनानि । न त्वत्र विरोधो वाच्यः, वाचकस्याऽप्यादेरभावात् । तथाहि—

**तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो मधुरलीलः ।**
**मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥** इति ।

अत्रैकैकस्य पदस्य द्विपदत्वे विरोधाभासो व्यङ्ग्य इति स तत्रभवान् स्वयमुदाजहार[3]—

**अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो ।**
**अहितः सहितः साधुयशोभिरसतामसि ॥**

---

१. काव्यप्रकाशः ४।३९-४१

२. काव्यप्रकाशः—झलकीकरटीकासंस्कृते पृ० १३९ ।

३. काव्यप्रकाशस्य ४।३८ व्याख्यायां द्वितीयमुदाहरणम् ।

"अत्रापि विरोधाभासः[1]" इति च ।

अत्र भिन्नपदत्वेऽपि अप्रकृतत्वेनेति शेषः । विरोधाभास इत्यस्य च प्राधान्येन व्यङ्ग्य इति शेषः । 'अप्यादिर्विरोधस्य वाचकः । यद्यपि निपातानां द्योतकत्वं सिद्धान्ते, तथापि तत्सत्त्वे विरोधो वाच्यवत् स्फुटं प्रतीयत इति विरोधो वाच्यत्वेन व्यपदिश्यते, तदसत्त्वे तु व्यङ्ग्यतयेति । इदञ्च प्रदीपकृतो वैशद्येन प्रादीपयन् । तद्यथा---'**ननु विरोधस्य किं सर्वत्र व्यङ्ग्यत्वमेव, नेत्युच्यते । तत कियती सीमा । अपि शब्दादेर्विरोधव्यञ्जकस्य भावे वाच्यत्वं तदभावे व्यङ्ग्यत्वम्**'[2] । इति ।

अत्र च महावैयाकरणो नागेशः—

'विरोधव्यञ्जकस्येति । एतेन निपातानां द्योतकत्वं ध्वनयति । भावे वाच्यत्वमिति । स्फुटद्योतितस्य विरोधस्य तदाक्षिप्तद्वितीयार्थस्य च वाच्यकल्पत्वादिति भावः । व्यङ्ग्यत्वमिति । द्वयमपि सामानाधिकरण्यसत्त्वमेवेत्यपि बोध्यम् । शनिरशनिश्चेत्यत्रत्यप्रदीपस्वरसात् । अन्ये तु सामानाधिकरण्यमपि वाच्यत्वमेव नियामकमित्याहुरिति[3]' ।

एवञ्च प्रकृतपद्ये विरोधव्यञ्जकस्य निपातस्याभावाद् विरोधालङ्कारेण तुल्ययोगिताया उत्प्रेक्षाया वा व्यङ्ग्यत्वोक्तिः । ननु च भोः ! मास्तु प्रकृते विरोधालङ्कारस्य वाच्यत्वम्, व्यङ्ग्यत्वमेवास्तु । तादृशेनैव तेन तुल्ययोगिताया उत्प्रेक्षाया वा व्यङ्ग्यत्वमुपपद्यताम् ?

**उन्नणिच्चलणिप्पन्दाभिसिणीपत्तम्भि रेहइ बलाआ ।**
**णिम्मल मरगअभाअण परिट्ठिआ संखसुत्ति[4] ॥**

यथात्र निष्पन्दत्वेनाश्वस्तत्वम् । तेन च जनरहित्वम् । अतः सङ्केतस्थानमेतदिति कयाचित्कामुकया कामुकं कश्चित् प्रत्युच्यते । अथवा मिथ्या वदसि न त्वमत्रागतोऽभूरिति व्यज्यते । तथा च माम्मटं सूत्रम्—**सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते**[5] । इति ।

सर्वेषां वाच्यलक्ष्यव्यङ्ग्यानाम् । अर्थानामपि व्यञ्जकत्वमिष्यत इत्यर्थः । वक्त्रादि-वैशिष्ट्यानवतारेऽर्थान्तरव्यञ्जना न सम्भवतीति प्रायश इत्युक्तम् । अर्थानामपीत्यपिशब्देन शब्दानां समुच्चय इति प्रदीपाभिप्रायः ।

उद्द्योतकारास्तु व्यञ्जकत्वमपीत्यपिशब्देन व्यञ्जकतादशायामपि वाचकत्वाद्यप्रच्यवः सूचित इत्याहुः ।[6] **'अर्थाः प्रोक्ताः पुरा तेषाम्'** इति । **अर्था वाच्यलक्ष्यव्यङ्ग्याः । तेषां वाचक-लाक्षणिकव्यञ्जकानाम् । 'अर्थव्यञ्जकतोच्यते[7]'** इति च तृतीयोल्लासस्यारम्भः । इति सत्यम् ।

---

१. तत्रैव तृतीयमुदाहरणम् । २. सप्रदीपोद्द्योते—पृ० १३७ ।
३. तत्रैव संस्करणे । ४. झल्कीकरसंस्करणे—पृ० ३० ।
पश्य निश्चलनिष्पन्दा विसिनीपत्रे राजते बलाका ।
निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥ इति ।
५. काव्यप्रकाशः ४।८ सूत्रम् ।
६. बालबोधिन्याः पृ० २८ । ७. काव्यप्रकाशे सू—३५–६६

न खलु व्यङ्ग्यस्यार्थस्य व्यञ्जकत्वं निषेधाय। परन्तु, अर्थशक्त्युद्भवस्यार्थस्य स्वतः सम्भविनो वस्त्वलङ्कारान्यतरव्यञ्जकत्वं प्रकृत्य, वाच्यस्य वस्तुरूपस्यालङ्कारात्मनो वार्थस्य व्यञ्जकत्वोदाहरणानि मम्मटः प्रक्रान्तवान्। तस्मात् प्रकृते व्यङ्ग्येनालङ्कारार्थेनालङ्कारस्य व्यङ्ग्यत्वोक्तौ प्रक्रमभङ्गदोषश्लेषापत्तिः। अव्यवहितपूर्वोदाहरणे—

**दर्पान्धगन्धगजकुम्भकपाटकूट**
**संक्रान्तिनिघ्नघनशोणितशोणशोचिः।**
**वीरैर्व्यलोकि युधि कोपकषायकान्तिः**
**कालीकटाक्ष इव यस्य करे कृपाणः॥** इति।

अत्र प्रस्फुटेनोपमाऽलङ्कारेण वस्तुनो व्यङ्ग्यत्वमुदाहृत्य प्रकृते तादृशेनैवालङ्कार-व्यञ्जनोदाहृतिरुपपद्यते। न तु विरोधस्य वाच्यत्वमिति[1]। विरोधश्च तत्रैव स्फुटं प्रतीयते यत्र विरोधसूचकोऽपि शब्द इत्यन्यात्रापि वामनाचार्यः[2]।

इदमपि च निमीलितनयनं विभावितव्यं भावितप्रज्ञैर्यत्सामानाधिकरण्यमपि विरोधस्य कुक्षिगतम्। अत एवोक्तम्—

**अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्राऽवभासते।**
**प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा[3]॥** इति।

अन्यच्च—

**शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम्।**
**यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च॥** इति।

अत्र "विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति ध्वन्यते" इति। शब्दशक्तिमूलकस्य वस्तुनो ध्वनिरुक्तः। अत्र पूर्वार्धे उक्तस्य वस्तुनः, परार्धे च विरोधालङ्कारस्यैव ध्वनिं साम्प्रदायिकाः समामनन्ति। तत्र पूर्वत्र सामानाधिकरण्यस्याऽभावः, परत्र च तद्भाव एव परं नियामकः। यथोक्तम्—'**अत्र पूर्वार्धे नञो विरोध्यर्थकत्वे नाशनिपदात् शनिविरोधिरूपार्थस्या-वगतौ विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुतः**' इति वस्तु ध्वन्यत इति वस्तुध्वनिः।

न तूत्तरार्धेऽपि तत्रैककार्यकरणाप्रतीतेः किन्तूत्तरार्धे विरोधालङ्कारध्वनिरेवेति बोध्यम्। तदेवाह—अत्र विरुद्धावपीत्यादि कुरुत इतीति। वस्त्विति शेषः। उक्तं च प्रदीपे—**अत्र प्रथमार्धे शनिरशनिश्चेत्यनेन विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुतः**' इति वस्तुः ध्वन्यते। न तु विरोधालङ्कारः शनिरशनिरित्यनयोः सामानाधिकरण्याभावात्। विरोधस्य च तत्रैव विश्रान्तेः।

---

१. आनन्दाश्रमीये पृ० १४२–४३
२. विरोधालङ्कारव्याख्यायां बालबोधिन्याम्—पृ० ६६४
३. काव्यप्रकाशः ४।३८
४. आनन्दाश्रमीये सप्रदीपोद्द्योते काव्यप्रकाशे—पृ० १३९।

द्वितीयार्धं तु नोदाहरणम्। तत्र चशब्दस्य ( चकारस्य ) अप्यर्थत्वे विरोधस्य वाच्यत्वात्। समुच्चयमात्रार्थत्वे तु विरोधस्यैव व्यङ्ग्यत्वादिति। अत्रोद्द्योतः सामानाधिकरण्याभावादिति एकधर्मिगतत्वेन शनित्वतद्भिन्नत्वयोरप्रतिपादनादिति भावः। नञो भिन्नार्थकत्व एव विरोध इत्यपि बोद्धव्यम्[1] इति।

अत्र सामानाधिकरण्याभावेन चस्य समुच्चयार्थत्वादप्यर्थाभावेन च विरोधस्यावाच्यत्वेऽपि व्यङ्ग्यत्वमस्त्येव, परन्तु वस्तुन एव राजोत्कर्षकतया प्राधान्याद् वस्तुध्वनित्वेन व्यवहार इत्याहुरित्यप्युद्द्योतकृतः[2]। भवतु—

अत्र विरोधतुल्ययोगितयोरप्रसरमालक्ष्यैव काव्यप्रकाशव्याख्यातॄणां मौलिकमणयो गोविन्दभट्टपादा अन्यथैव ग्रन्थमिमं योजयामासुः। उक्तं च अत्र निजाधरदशनवैरिवधूजनोष्ठदशनव्यथामोचनयोः कार्यकारणयोः पौर्वापर्याभावलक्षणयाऽतिशयोक्त्यालङ्कारेण दशनसमकालमेव शत्रवो व्यापादिता इति **'समुच्चयोऽसौ स त्वन्यो युगपद्या गुणक्रिया'** इत्युक्तलक्षणसमुच्चयालङ्कारो द्योत्यते। एष एव च तुल्यकालं योगितेति व्युत्पत्त्या तुल्ययोगितेति कैश्चिदुच्यते।[3] इति।

**अत्रोद्द्योतः**

'अतिशयोक्त्येति। एषैव प्रकाशे विरोधपदेनोच्यते। एष एवेति। प्रकृतानामप्रकृतानां वा एकधर्मसम्बन्धरूपतुल्ययोगितायाः प्रकृतेऽसम्भव इति भावः। योगितायोग[4] इति।

अयं भावः—विरोधालङ्कारेणेत्यस्य विरोधाभासालङ्कारेणेत्यर्थस्तु न, विरोधस्यासम्भवात्। किन्तु विरोधगर्भितोऽलङ्कारस्तेनेत्यर्थः। कार्यकारणयोः पौर्वापर्यविपर्ययरूपातिशयोक्त्यलङ्कारेणेति यावत्। स्वाधरदशनस्य कारणस्य वैरिवधूजनोष्ठदशनव्यथामोचनस्य च कार्यस्य समकालतया निर्दिष्टत्वात्। तुल्ययोगितेति पदस्यापि तुल्ययोगितालङ्कार इत्यर्थस्तु न। 'नियतानां सकृद्धर्मः, सा पुनस्तुल्ययोगिता इति' १५८ सूत्रेण लक्षितायाः प्रकृतानामप्रकृतानां वा एकधर्मसम्बन्धरूपतुल्ययोगितायाः प्रकृतेऽसम्भवात्। किन्तु, तुल्ययोगिपदस्य अधरो निर्दष्टश्च शत्रवो व्यापादिताश्चेति व्युत्पत्त्या समुच्चयालङ्कार इत्यर्थः। अधरनिर्दंशनवैरिव्यापादनक्रिययोर्युगपद्यप्रतीतेरिति'[5]।

अत्र विरोधालङ्कारेण··· ···तुल्ययोगिता–उत्प्रेक्षा च ( द्योत्यते ) इति काव्यप्रकाशः सर्वथैव निकषा सह इति सुप्रकाशम्।

**वामनाचार्यमतसमीक्षणम्**

दुस्तरकाव्यप्रकाशटीकापारावारपारङ्गमा वामनाचार्यास्तु प्रदीपकृतो यदाहुः—'यद्वा अन्ये तु विरोधालङ्कारेणेत्यस्य वास्तवविरोधमूलासङ्गत्यलङ्कारेणेत्यर्थः। स्वाधरनिर्दंशन-

---

१. झल्कीकरव्याख्याने—पृ० १३४।

२. आनन्दाश्रमीये—पृ० १४०।

३. तत्रैव—पृ० १४३।

४. तत्रैव :

५. बालबोधिन्याम्—पृ० १३९।

वैरिवधूजनोष्ठव्यथामोचनयोः कारणकार्ययोः वैयधिकरण्येन निर्देशाद्विरोधस्य स्फुटत्वादिति वदन्ति ।[1] तत्सर्वं क्षिपन्तः प्राहुः—

तत्सर्वं चिन्त्यमेव मुख्ययोर्विरोधाभासतुल्ययोगितयोर्निर्बाधत्वस्य [2]प्राक् प्रतिपादितत्वादिति । प्राक् च—

ओष्ठविषयकयोर्दशनमोचनयोर्विरोधः । यो हि निजमप्यधरं दशति स कथं परेषामधरान्मोचयतीति विरोधः । ओष्ठत्वेन सामानाधिकरण्यस्य विवक्षितत्वात् । प्रतियोगिभेदेनाभास इति बोद्ध्यम् । तुल्ययोगितेति । वीरानुभावत्वेन प्रकृतयोः स्वाधरदशनशत्रुव्यापादनयोरेककालरूपैकधर्मसम्बन्धेन तुल्ययोगितालङ्कार इत्यर्थ[3] इत्येव व्याचख्युः ।

एतच्च कुशकाशावलम्बनप्रायम् । विरोधस्य वाचकाभावेन वाच्यालङ्कारेणालङ्कारस्य व्यङ्ग्यतोदाहरणत्वासम्भवात् । सामानाधिकरण्यस्य विरोधजीवातोरभावेन विरोधालङ्कारस्यैवासम्भवाच्च । वामनाचार्याणां रीत्या च **'शनिरशनिश्च तमुच्चैः'** इत्यादावपि विरोधालङ्कारस्य व्यङ्ग्यत्वोपपत्तौ तत्र **'अत्र विरुद्धावपि'** त्वदनुवर्तनार्थमेकं कार्यं कुरुतः इति वस्तु व्यज्यते इति सकलालङ्कारिकगोष्ठीसिद्धस्य सिद्धान्तस्यैव विलयापत्तेः । ओष्ठत्वेन सामानाधिकरण्यस्य विवक्षितत्वादित्यप्यपेतसारमेव । तत्राऽपि निहननकर्मत्वेन सामानाधिकरण्यस्य विवक्षितत्वादित्यादि सुशकमेव वक्तुम् ।

कः खलु स्वैरतायां नियामकः ? अन्यः पन्थाऽऽलङ्कारिकाणाम् । स्वच्छन्दश्च स्वच्छन्दानाम् । दूरे तयोः समन्वयः ।

**अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम् ।**
**सामानाधिकरण्यं हि तेजस्तिमिरयोः [4]कुतः ॥** इति ।

'शनिरशनिश्चेत्यत्र वस्तुमात्रं व्यञ्जनाऽऽश्वति, न च नामापि तत्र नाम विरोधालङ्कारस्य । न च विना वाचकं विरोधालङ्कारस्य प्ररोह इति च वामनाचार्या एव च न्यरूरुपन्निति निवेदितमिदमधस्तात् । तस्मात् प्रकृते पद्ये विरोधालङ्कारस्य व्यञ्जकात्मना तेषां समर्थनमसमर्थमेव सुतराम् । दूरे पुनः प्रदीपकृदादेः पराकरणम् ।

अथ साम्प्रतिकीनां शोधशैल्या विलिखितानां व्याख्यानां कियती वा तत्त्वनिर्धारण उपकारिता—इति दिदृक्षया **डा० सत्यव्रतसिंह**लिखिता **'शशिकला'** समाख्या व्याख्याऽस्माभिर्दृष्टा, न सा मार्मिकार्थविचारमाचरति । मूलार्थस्याप्यनर्थमिवाचरति । तद्यथा "अत्र विरोधालङ्कारेण'—इत्यादेः प्रकाशस्य व्याख्यायामसौ लिखति 'यहाँ व्यञ्जक अर्थ तो है अलङ्काररूप—वस्तुतः विरोधालङ्काररूप अर्थ ( क्योंकि जहाँ एक ओर एक समय राजा के द्वारा अपने ओठों के काटने का वर्णन है वहाँ दूसरी ओर उसी समय दूसरों के ओठों के काटे जाने से बचाने का भी वर्णन है । ) जो कि एक स्वतःसंभवी अलङ्कार रूप अर्थ है ( क्योंकि क्रोध में ओठ चबाने आदि की बात तो लोक-प्रत्यक्ष बात है ) और दूसरो अभिव्यंग्य जो अर्थ है

१. बालबोधिनी पृ० १३९ ।  २. उक्तमेव ।  ३. तदेव ।
४. शिशुपालवधम्—२ ।
५. चौखम्भाविद्याभवन, वाराणसीप्रकाशन—१९६५ ।

वह भी एक अलङ्कार रूप ही अर्थ है, क्योंकि या तो यहाँ यह अर्थ ध्वनित होता है कि 'राजा ने जभी अपने ओठ चबाए तभी शत्रुओं का सर्वनाश कर डाला' ( जिसे तुल्ययोगिता अलङ्काररूप अर्थ कह सकते हैं ), या यह अर्थ कि 'राजा ने यह सोचा कि उसे अपने ओठ काटने में कष्ट भले हीं हो, किन्तु शत्रु-विलासिनियों के ओठों को कभी काटे जाने का डर न रह जाय' जो कि उत्प्रेक्षा [1]अलंकाररूप अर्थ है।

अत्र कोष्ठाङ्कितोऽर्थो वामनाचार्यवर्यादिव्याख्यायाः समुपात्त इति स्फुटीभवत्यापाततोऽपि सूक्ष्मेक्षणानाम्। परं तदीयं गाम्भीर्यं तु जनङ्गमतनयालावण्यमिव दूरत एव पर्यहार्षीच्छशिकलाकारः। तत्परिहारेणापि, तिष्ठतु नाम कथमयम् ओष्ठशब्दस्य हिन्द्यां सुप्रतिष्ठितं रूपं 'हांठ' इति 'ओंठ' इत्येव वा हित्वा 'ओठ' इति व्यवहरति, मूलकृता सन्देहविपर्यासास्पर्शपूर्वकं लिखितं तुल्ययोगितेति ( जिसे तुल्ययोगिता अलङ्काररूप अर्थ कह सकते हैं ) इति सम्भावनात्मनानुवदति इत्यादेः कथा, उपक्रम एव तु 'यहाँ व्यञ्जक अर्थ तो है अलङ्काररूप वस्तुतः विरोधालङ्काररूप अर्थ' इति विलिखन् मूलकारस्याशयं मूलत एवोत्खनन् दृश्यते। मूलकारो हि स्पष्टमुट्टङ्कयति अत्र विरोधालङ्कारेण······तुल्ययोगिता ( व्यज्यत इति शेषः )।

पूर्वं यदुक्तं तत्स्थूलम्। अतः परतो यदुच्यते तत्तु साररूपमिति दर्शयितुं खलु 'वस्तुतः' इति प्रयुञ्जते प्रयोगविदः। एष तु—'यहाँ व्यञ्जक अर्थ तो है अलङ्काररूप–वस्तुतः विरोधालङ्काररूप अर्थ' इति वदन्, "मूलकृता विरोधालङ्कारेणेत्यतः पूर्वं किमप्यवस्तुरूपमुक्तमिति भ्रममस्थाने एव जनयति। सामान्यात्मना वा मम्मटश्रीचरणैः पूर्वमुक्तमर्थं 'वस्तुतः' इत्युक्त्वा स विशिष्यादित्यपि श्लिष्यते। परन्तु यदा मूलकृता कण्ठरवेणैव विरोधालङ्कारस्यैवात्र तुल्ययोगिताव्यञ्जकत्वमुक्तं तथा 'वस्तुतः' इति स किमिव विशिनष्टि विशेषज्ञ इति स एव वेत्तु।

एवं मूलकृत् तुल्ययोगितोत्प्रेक्षयोर्विरोधालङ्कारेणात्र व्यञ्जनां व्यक्तमञ्चति, तेन च तुल्ययोगितोत्प्रेक्षयोः संसृष्टिसूचनावादिन्यष्टीकाकृतां भणितयोऽपि सङ्गता भवन्ति। परन्तु एष शोधव्याख्याकारोऽत्र विकल्पमेव कल्पयति 'या तो यहाँ यह अर्थ ध्वनित होता है कि······या यह अर्थ कि······' इत्यादिनेति कृतमत्र शतच्छिद्रकन्था विधूननेन।

**प्रदीपकृतां पर्यवेक्षणम्**

काव्यप्रकाशः किल जह्नुजाकलिन्दनन्दिनी कल्पाभिरनल्पाभिर्व्याख्याभी रारराजतेऽनिशं सेव्यमानो वारांनिधिरिव भगवती गीतैव निखिलेलातलगीताऽत्र विषये तस्यैकः [2]प्रतिमल्लः तासु तु व्याख्यासु गोविन्दभट्टकृतः प्रदीप एव प्रदीपायते[3]। प्रदीपाधार एव प्रकाश इत्यनुवर्तते पुरातनानां प्रवादः। तेन च परं पराक्रान्तं मूलाक्षररक्षायाम्। विरोधालङ्कारं

१. काव्यप्रकाशः, डा० सत्यव्रतसिंहकृतशशिकला–पृ० १०७।

२. Except the Bhagvadgita there ishardly any onter work in the classical Sanskrit that has so many commentaries on it. History of Sanskrit Poetics : P V Kaney, pp. 263.

३. इममद्भुतं प्रदीपं प्रकाशमपि यः प्रकाशयति।

सोऽक्रमातिशयोक्तिम्, तुल्ययोगिताञ्च समुच्चयमलङ्कारमवगमयन्नभिप्रैति। विलक्षणा तस्य वैचक्षणी। तत्त्वावधारणे पुनः प्रौढिवाद एव तेन सुप्रौढमादृतः। को हि नाम सचेता विरोधालङ्कारेणेत्यस्यातिशयोक्तिरिति, तुल्ययोगितेत्यस्य च समुच्चयमर्थमनुजानीयात्। न च विरोधगर्भतयाऽतिशयोक्तेर्विरोधालङ्कारत्वम्, विरोधगर्भाणां सर्वेषामेवालङ्काराणां भिन्नव्यपदेशव्यवहारादेर्दत्तजलाञ्जलित्वप्रसङ्गात्। तस्य च प्रकाशकृत् प्रवरो मार्गदर्शकानाम्। अन्या हि विरोधता। अन्या च विरोधगर्भता।

एवं तुल्यं योगितेति तुल्ययोगितापदेन समुच्चयस्य व्यपदेशे उपमानोपमेययोस्तुल्यं प्रवृत्त्या प्रायेण सर्वेषामेवालङ्काराणां तत्त्वापत्तिः। अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तम्, अन्यच्च प्रवृत्तिनिमित्तमित्यस्ति सर्वतन्त्रः सिद्धान्तः।

किञ्च, तथा प्रौढिवादाश्रयणेन सर्वशक्तिग्राहकोपमर्देनान्तरकल्पनेऽपि **'भक्षितेऽपि लशुने न शान्तो व्याधिः'** इत्यस्य न्यायस्य दुर्वारोऽत्र प्रसरः। इयमतिशयोक्तिर्हि कविप्रौढोक्तिसिद्धैव सम्भवति। तथा च स्वतःसम्भविनालङ्कारेणाऽलङ्कारस्य व्यञ्जकतायामुदाहरणदानासाङ्गत्यापातात्। अन्यत्स्वाभाविकमन्यच्च कृत्रिमम्। सत्यं खलु भगवानेव। तमनादृत्य वैदुष्यप्रौढिसमाश्रयणेन चैकमर्थं सङ्गृह्णतोऽपरं च्यवते वत। तस्मादत्र प्रकाशप्रदीपौ द्वावप्यहृदयङ्गमावेव। अत्रत्यतुल्ययोगितातत्त्वविषये च पृथगेव गवेषितमिति प्रस्तुते तद्विस्तरादपरम्यते।

न चैतेन प्रकाशकृतः (प्रदीपकृतो वापि) महिमनि लेशोऽपि कश्चनापचयस्य। समे गच्छन्तोऽपि सम एव प्रायेण स्खलन्ति, किं पुनर्विषमे जटिलजटिले ध्वनिगुणदोषालङ्कारकान्तारद्वारे विचारतुहिनगिरिशिखरे। तत्र हि सञ्चरणस्य सङ्कल्पोऽपि महते फलाय, किं पुनरारोहणं किंतराञ्च तत्र स्वैरं सञ्चरणम्। गरिष्ठमावरिष्ठशिखरमारुरुत्सन्तो न जाने कियन्तो व्याहता आहताः प्रमीताश्च। ये तु स्खलन्तोऽपि कथङ्कथमपि तदारूढा जगज्जयिनामिव तेषां यशः पुनातीव जगत्त्रयम्। न च पौरुषेये वाक्येऽत्यन्तमवद्यविरहः। तत एव मीमांसाया मांसलः प्रयासः श्रुतेरपौरुषेयत्वसाधनाय—**'यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता'** इति।

न च सत्यनिगूहनेऽवतिष्ठते सत्या समालोचनेति च कविकुलगुरोर्गिरां गुणापगुणौ समं समालोचनयद्भिर्मम्मटभट्टश्रीचरणैरेव दर्शितः पन्थाः। स एवाऽत्र कथङ्कथमपि सप्रश्रयमनुगम्यत इत्यनाविलमखिलं हृदयज्ञेषु। सत्यं यत्—

**तं पूर्वाचार्यसूर्योक्तिज्योतिःस्तोमोद्गमं स्तुमः।**
**यमाश्रित्य प्रकाशन्ते मद्गुणास्त्रसरेणवः**[1] ॥ इति।

---

१. जयदेवकृतस्य चन्द्रालोकस्योपोद्घातात्।

●८●

# ऋक्षस्य विस्मृतार्थेषु वानरः

श्री—अनन्तशर्मा
प्रतापगढ़, चित्तौड़ ( राज० )

सर्वमहति प्रत्नतमे च संस्कृतवाङ्मये कालक्रमेण चिराद् विस्मृतिगर्तनिगीर्णार्थानां शब्दानामस्त्यन्यतमो रामकथायां जाम्ववदादिभ्य आदिकवेः प्राचेतसादृक्षाद् भगवन्तं व्यासं यावदनेकशः प्रयुक्तो नाम 'ऋक्ष' इति शब्दः।

अद्यत्वे शब्दोऽयं भल्लूकार्थे निर्मथितवाङ्मयार्णवनिर्गलितज्ञानामृतसुहितेभ्य आविबुधेभ्यः शिलोञ्छवृत्तिमतः पृथग्जनानभिव्याप्यैतावत् प्रथितो यथानेकप्रबलतमयुक्तिसन्दोहघटितमहाप्रयासेन वास्तविकमर्थं स्मारितो विपश्चिन्निवहोऽपि सद्यस्तद्दूरीकरणे दरमपि विहितादरो भवेदिति दुर्वह इवाभाति सहसा। अकृतधियां प्राकृतजनानां तु कथैव का ?

विश्रुतयौगिकार्थप्राधान्ये श्रुतिवाङ्मये ऋक्षस्य नक्षत्र–तारक–सप्तर्षि–तारकपुञ्ज–अग्नि-रक्षो-विघातक-इन्द्रियादयोऽनेकेऽर्था वर्तन्ते तदनुशीलनवर्त्मनि वर्तमानानां विज्ञसत्तमानां प्रसिद्धौ। अन्यत्र विचारणीयास्त इतीह न प्रतायते निबन्धकलेवरः।

लोकभाषायामपि नक्षत्र-राशि-तारक-भल्लूक-स्योनाक-कृतवेधन-राज-पर्वत-मुनि-कुण्ठ-विशेषादयोऽर्था विभिन्नेषु ग्रन्थेषु दृश्यन्ते कोशेषु निर्दिश्यन्ते च। परन्तु ऋष्य-वानरादयोऽर्था न कुत्रचिदपि कोषादिषु समाम्नाता लोकप्रसिद्धितस्सर्वथैव विलुप्ता इति तदर्थान्वेषणप्रयासपरायां निबन्धमालायां वानरार्थाभिधायि प्रथममिदं लेखसुमनस्सुमनसां सेवायां ससभाजनं प्रस्तूयते।

आर्षकृतिषु रामायण-महाभारत-पुराणोपपुराणेषु रघुवंशादिप्राचीनकाव्येषु च यावान् प्रचुरः प्रयोग ऋक्षस्य वानरार्थे न तच्छतांशमपि भल्लूकार्थे, तथापि महदिदमाश्चर्यं यद् रामायणस्य टीकाकारैः, विभिन्नभाषानुवादकैः, कोषकारैः, आलोचकैः, शोधकर्तृभिः, भाषान्तरेषु रामायणरूपान्तरकारकविभी रामकथाकारैश्च यादृशं विषममौदासीन्यमवालम्ब्यतैतस्मिन् विषये, तस्य परिणामोऽयमद्य जाम्ववदादयः सर्वत्र भल्लूकत्वेनैव प्रसिद्धिमागताः।

त्रेतायुगादपभ्रंशभाषाप्रवृत्तिरिति भारतीया आर्षभाषाविज्ञानचणाः[1]। अमरकोषरचनाकालस्तु प्रायो वैक्रमीयप्रथमचतुर्थशतकमध्ये कदाचिदित्यैतिह्यविदः। एवं सारल्ये-

---

१. श्रीरामादिभिस्सह संस्कृते वार्तालापं कर्तुं समर्था वानराः परस्परं स्ववानरीभाषयामालपन्ति। तथा हि भगवान् वाल्मीकिः—

एवं विज्ञाप्यमानं तु सुग्रीवं वानरर्षभम्।
अपृच्छत्तं महाप्राज्ञो लक्ष्मणः परवीरहा॥ सुन्दरकाण्डे ६३।१२
किमयं वानरो राजन् वनपः प्रत्युपवस्थितः।
कं चार्थमभिनिर्दिश्य दुःखितो वाक्यमब्रवीत्॥ १३.

स्पष्टमेवात्र यद् दधिमुखभाषितं लक्ष्मणो बोद्धुमक्षमः।
भगवता वाल्मीकिना प्राकृतभाषा व्याकरणमरचीति सम्प्रदायविदश्च।

नानुमातुं शक्यते यदृक्षपदस्य तदपभ्रंशद्वारेण भल्लूकरूपोऽर्थस्त्रेतायुगादेव निरूढि भाजनं बभूव, वानररूपश्चार्थः शनैः शनैरप्रसिद्धिं गच्छन्नुपद्विसहस्रवर्षपूर्वं सर्वथैव विस्मृतिगर्तनिमग्नः। अत एवामरसिंहस्य नामलिङ्गानुशासने न वानराभिधानेषु ऋक्षपदं पठितम्, न वा ऋक्षस्य वानररूपोऽर्थो नानार्थवर्गेऽभिहितः।

राघवपाण्डवीयादिसंस्कृतकाव्येषु रामचरितमानसादिलोकभाषाकाव्येषु जाम्बवत्कृते भल्लूकादिपदप्रयोगः कविभिर्विहितः। खिष्टद्वादशशताब्दीनिर्मिते राघवपाण्डवीये द्वयाश्रयकाव्ये—

बलोद्धता नीलगजाभिरामा
तीव्राच्छभल्ला शरभालभीमा।
महोदयारम्भपरागभीर-
तारप्रणादां कुमुदानुबद्धा॥ ८।१२

ऋक्षकृतेऽच्छभल्लप्रयोगः। तीक्ष्णा चरणा अच्छभल्ला जाम्बवदादयो भल्लूका यस्यां सेति तट्टीकाकृतः श्रीदामोदरझासाहित्याचार्याः।

विक्रमविंशतिशताब्द्यां प्रणीते 'रामचरिताब्धिरत्ना'भिधे काव्ये—

भल्लूकासितमिघमन्तरशुभत्सत्रिसुग्रीववक्र-
रम्योद्यद्गुरुसुक्रमायुधतडिन्निसंख्यकोशोडुकम्॥
द्वास्थाष्टांगदजाम्बवत्प्रभृतिसत्सर्षवियुक्तध्रुवम्।
जाग्रद्रामविधुव्यराजतचमूप्रावृट्प्रदोषाम्बरम्॥ १३।१

भल्लूकपदप्रयोगः। भल्लूका ऋक्षा एव श्यामा मेघा इति टीकायां कवेरग्रजाः श्रीभगवतीलालशर्माणः।

रामचरितमानसे गोस्वामिश्रीतुलसीदासैरपि सर्वत्र ऋक्षकृते रीछ-भालू-प्रभृतीनि पदानि प्रयुज्यन्ते, यथा—

(क) कहहि रीछपति सुनु हनुमाना (कि० का० २९।२)
(ख) नाना बरन अतुल बल बानर भालु बरूथ (सु० का० ३४)
(ग) गर्जइ बानर भालु अपारा (३४।४)
(घ) गर्जइ भालु महाबल कीसा (३४।१)

श्रीमल्लिनाथसदृशैष्टीकाकृद्भिश्च रामकथासम्बद्धर्क्षस्य भल्लूक एवार्थोऽनुशासितः। तथा हि—

अथ लक्ष्मणानुगतकान्तवपु-
र्जलधिं विलङ्घ्य शशिदाशरथिः।
परिवारितः परित ऋक्षगणै-
स्तिमिरौघराक्षसकुलं बिभिदे॥ (शिशुपालवधम् ९।३१)

इति माघपद्ये ऋक्षगणैर्नक्षत्रवृन्दैर्जाम्ववदादिभल्लूकसमूहैश्चेत्यर्थश्लेष इति सर्वङ्कषायां मल्लिनाथाः। ऋष्य इति पाठं मत्वा ऋष्यगणैर्नक्षत्रवृन्दैः, ऋष्यगणैर्भल्लूकसमूहैः सुग्रीवादिभिर्वानरैरिति सन्देहविषौषध्यां श्रीवल्लभदेवाः। अत्र वहु विचारणीयं सदपि न मनागपि विचारितं माघोपरि शोधप्रवन्धलेखकैः श्रीमनमोहनशर्मभिः। रघुवंशीयस्य—

**'दुर्जातबन्धुरयमृक्षहरीश्वरो मे'** ( १३।७२ )

इति पद्यांशस्य व्याकरणसाहित्याचार्यैः साहित्यरत्नरिसर्चस्कॉलर-मिश्रहरगोविन्दशास्त्रिभिः कृतः—

"ये मेरे दुःख के वन्धु तथा भालुओं और वानरों के राजा सुग्रीव हैं"

इत्यर्थोऽप्येतस्यामेव श्रेण्याम्। कालिदासग्रन्थावलिसम्पादकानां श्रीसीतारामचतुर्वेदिनां स्थूला दृष्टिरपि—

'भरत से सुग्रीव का परिचय देते हुए राम ने कहा—ये वानरों और भालुओं के **सेनापति हैं'**।

इत्यर्थे द्रष्टव्या।

अभिषेकनाटकीये—

"दाराभिमर्षणनिर्विषयीकृतस्य सर्वहर्यृक्षराजस्य सुग्रीवस्य"

इति गद्यभागे आचार्यश्रीरामचन्द्रमिश्राणाम् "सर्वेषां हरीणां वानराणाम् ऋक्षाणां भल्लूकानां च स्वामिनः"

इति टीकापि भल्लूकार्थपरैव।

निर्विशेषं प्रयुक्तस्य 'जाम्ववत्' पदस्यार्थे विशेषाभिधित्सया 'भल्लूकराजे'त्यर्थमुपदिशन्ति टीकाकृतः कोषकाराश्च। तथाहि—

**व्यर्थं यत्र कपीन्द्रसख्यमपि मे वीर्यं हरीणां वृथा।**
**प्रज्ञा जाम्बवतो न यत्र न गतिः पुत्रस्य वायोरपि॥**
**मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः।**
**सौमित्रेरपि पत्रिणामविषये तत्र प्रिये क्वासि मे॥**

इत्युत्तररामचरितस्य (३।४५) पद्ये 'जाम्ववत एतन्नामकभल्लूकपतेः' इति श्रीतारिणीशझामहोदयाट्टीकायाम्। 'संक्षिप्त शब्द सागर' नामके कोषे जाम्ववत्पदार्थ एवम्—

"जाम्ववान्—सुग्रीव का मन्त्री एक भालू, जो राम की सेना में लड़ा था"।

एवमेव 'संस्कृतशब्दार्थकौस्तुभे' श्रीद्वारकाप्रसादचतुर्वेदमहोदयाः—

'जाम्ववान्—रीछों के राजा जिन्होंने लङ्का पर आक्रमण करने में श्रीराम की सहायता की थी' इति। इदमत्रावधेयं यच्छ्रीचतुर्वेदमहोदयैः समस्तस्य वाल्मीकिरामायणस्य हिन्दीभाषायामनुवादो विहितस्समूलस्सम्पादितश्च।

न केवलमेतावदेव, तत्संस्कारवशैः कैश्चिद् वानरपदं तत्पर्यायवाचिपदान्तरमपि भल्लूकार्थ एवान्वयोजि—

**कस्तु जाम्बवतीं भार्यां वानरीं माधवं विना।**
**कुरुते रुक्मिणीं प्राप्य गुणज्ञः खलु केशवः॥** ३।८

इति जैमिनीयाश्वमेधपर्वपद्यस्यानुवादो गीताप्रेसगोरक्षपुरीयैः पण्डितैरित्थं कृतः—

"भला श्रीकृष्ण के अतिरिक्त कौन ऐसा पुरुष होगा जो रुक्मिणी सी स्त्री को पाकर रीछ या वानर जाति की कन्या जाम्बवती को अपनी भार्या बनावेगा"।

अत्रानुवादकमते प्राधान्येन सम्मतोऽर्थो रीछ-(भल्लूक)रूप एव, परं वानरीपदापलापाशक्यतया वा मुखेन तदर्थो गौणत्वेन गृहीत इति स्पष्टमेव। सन्ति रामायणेऽपि सुबहून्येतादृशानि स्थलानि।

**यद्यपि प्राचीनवाङ्मये भल्लूककृत ऋक्षप्रयोगोऽभीक्ष्णशो विहितः, तथापि जाम्बवदादिकृते तु वानरार्थाभिधायक एवासाविति सप्रमाणमत्र विविच्यते।**

रामसैनिकर्क्षेषु जाम्बवान् प्रमुखपात्रत्वेन मन्यते प्रायः सर्वैरिति तदाधारेणैवास्य वानरार्थानुसन्धानं समीचीनतरं स्यादिति तत्केन्द्रबिन्दुकतया तथ्यसङ्ग्रहः।

१—वाल्मीकिरामायणे बालकाण्डे भगवान् ब्रह्मा भगवद्विष्णोरादेशेन देवान् शास्ति रामकार्यार्थं वानररूपेण भूमिमवतर्तुं सूचयति च पूर्वमेवाहं जाम्बवद्रूपेण कृतावतार इति। तथाहि—

**(क) उवाच देवताः सर्वाः स्वयम्भूर्भगवानिदम्। (१७।१)**
**अप्सरस्सु च मुख्यासु गन्धर्वीणां तनूषु च।**
**यक्षपन्नगकन्यासु ऋक्षिविद्याधरासु च॥ (५)**
**सृजध्वं हरिरूपेण पुत्रांस्तुल्यपराक्रमान्॥ (६)**
**पूर्वमेव मया सृष्टो जाम्बवानृक्षपुङ्गवः॥ (७)**
**ते तथोक्ता भगवता तत्प्रतिश्रुत्य शासनम्।**
**जनयामासुरेवं ते पुत्रान् वानररूपिणः॥ (८)**

एवं रामकार्यार्थं हरिरूपेण पुत्रानुत्पादयितुं समादिष्टेषु सुरेषु तथैव गृहीतजन्मसु सर्वेषु वानरेषु लोकपितामहब्रह्मणा देवकार्ये प्रष्ठीभूतेन स्वांशतया कृतावतारस्यात एवादर्शभूतस्य जाम्बवतो वानरत्वमेव। पद्मपुराणेऽपि—

**(ख) इत्युक्ता देवताः सर्वा देवदेवेन विष्णुना।**
**वानरत्वमुपागम्य जज्ञिरे पृथिवीतले॥ (पाता० खं० २४२।३२)**

इति स्पष्टमेव रामसाहाय्यकारिणां वानरत्वमेवोक्तम्।

२—रावणवधे वानरा एव रामसाहाय्यकारिण इति त्रित-नन्दीश्वर-पर्वतनारदादिशापैरवश्यम्भावित्वेन निर्धारितचरमासीदित्यनुपदमेवोद्धरिष्यमाणैरुद्धरणैर्ज्ञायते। यथा—

**(क) त्रितोपघाताद् वैरूप्यमेकतोऽथ द्वितस्तथा।**
**प्राप्स्येते वानरत्वं हि प्रजापतिसुतावृषी॥ (शान्तिपर्व ३३९)**
**तयोर्ये त्वनये जाता भविष्यन्ति वनौकसः।**
**महाबला महावीर्याः शक्रतुल्यपराक्रमाः॥**
**ते सहाया भविष्यन्ति सुरकार्ये मम द्विज।**

९

इत्येकतद्वितयोर्वानरत्वं तदन्वयजानां सुरकार्यसहायकत्वञ्चानेन प्रसङ्गेन स्पष्टम् ।

(ख) तस्मान्मद्रूपसम्पन्ना मद्वीर्यसमतेजसः ।
उत्पत्स्यन्ति वधार्थं हि कुलस्य तव वानराः ॥ ( उत्तरकाण्डे १६–१८ )

इति रावणाय नन्दीश्वरशापः ।

(ग) मानवं वपुरास्थाय हन्मि दैवतकण्टकम् ।
नन्दिशापाद् भवन्तोऽपि वानरत्वं ह्युपागताः ॥
कुरुध्वं मम साहाय्यं गन्धर्वाप्सरसोत्तमाः ॥

इति पद्मपुराणम् २४०।४० ।

(घ) शाखामृगाननं दृष्ट्वा नारदं पर्वतं तथा :
गोलांङ्गूलमुखं कन्या किञ्चित् त्राससमन्विता ॥

इति लिङ्गपुराणम्, उत्तर० ५।९ ।

इदं सर्वं प्रमाणजातं वानरसाहाय्यविषये । अतोऽधिकस्याधिकं फलमिति भल्लूक-साहचर्ययोगकल्पनं निराधारमेव त्रितादिशापस्य तन्मूलभगवदादेशस्य चाकारणमेवान्यथा-भावापत्तेः ।

६—शब्दार्थक्षेत्रे शापादिकानुवर्तनमकिञ्चित्करमिवेति ऋक्षस्य भल्लूक एवार्थ इति निर्बन्धोऽप्यसाम्प्रतमिह । रामायणेऽन्यत्रापि चर्क्षपदस्य प्रायशो गोपुच्छगोलाङ्गूलहरि-वानरप्रभृतिपदेषु केनाप्येकेन द्वाभ्यां वा सार्धं द्वयोर्मध्ये वा प्रयोगोऽभिव्यनक्ति साजात्यं हर्यृक्षाणां विशेषतो वानरवाचकपदयोर्मध्यवर्त्यृक्षपदम् । यथा रामायणे—

(अ) (क) ऋक्षवानरगोपुच्छाः क्षिप्रमेवाभिजज्ञिरे । ( १।१७।९ )
(ख) ( बाली ) जुगोप भुजवीर्येण ऋक्षगोपुच्छवानरान् ॥ ( १।१७।३६ )
(ग) एते वानरमुख्याश्च शतशः शत्रुसूदन ।
ऋक्षाश्चावहिताः शूरा गोलाङ्गूलाश्च राघव ॥ ( ३।३६।२७ )

एतादृशाः शतशः प्रयोगा युद्धकाण्डे च ।

(आ) महाभारते—

(क) गतेषु वानरेन्द्रेषु गोपुच्छर्क्षेषु तेषु च । ( वनपर्व० २८९।५६ )
(ख) ·········गोलांगूलर्क्षवानरैः ।
गुप्ताः क्षत्रियाणां कुलोद्वहाः ॥ ( शान्तिपर्व० ५०।३ )
(ग) गोलांगूलर्क्षसंघैश्च द्रवद्भिरनुनादितम् । ( गदापर्व० ४६।८६ )
(घ) प्रसवश्चैव युवयोर्गोलाङ्गूलर्क्षवानराः ॥ ( गदापर्व० ३९।०१ )

पद्येऽस्मिन् 'युवयोः' पदेनैकतद्वितयोर्ग्रहणं प्रक्रान्तत्वात् । तौ प्रति त्रितस्य शाप-वाक्यम् । एकतद्वितयोर्वानरत्वं "प्राप्स्येते वानरत्वं हि प्रजापतिसुता वृषी" इति ( २ क ) उद्धरणपद्येन स्पष्टम् । वानरयोरनयोः सन्ततिः 'गोलाङ्गूलर्क्षवानराः' इति स्पष्टमेव ऋक्षस्य वानरार्थत्वम् ।

न केवलमेतावदेव, अपितु रामायणे जाम्ववत्कृते वानरार्थकपदानां पौनःपुनिकः प्रयोगोऽप्यृक्षस्य वानरार्थत्वं साधयति । यथा :—

(क) कुमुदस्य सुषेणस्य तारजाम्बवतोस्तथा ।
दधिवक्त्रस्य नीलस्य सुपाटलसुनेत्रयोः ॥ ( किष्कि० ३३·११ )
एतेषां कपिमुख्यानां राजमार्गे महात्मनाम् ।
ददर्श गृहमुख्यानि महासाराणि लक्ष्मणः ॥ ( १२ )

अत्र कुमुदादीनि कानिचिन्नामानि गणितानि । ततश्च निर्देशकसर्वनाम्नैतत्पदेन निर्देश-पुरस्सरमेतेषां कपिमुख्यत्वमुक्तम् । एषु कपिमुख्येषु जाम्बवानप्येको निर्विशेषं गणित इति द्रष्टव्यं तस्य वानरत्वम् ।

(ख) विकत्थते क्रोधान्धो रावणः —

रामवृक्षं रणे हन्मि सीतापुष्पफलप्रदम् ।
प्रशाखा यस्य सुग्रीवो जाम्बवान् कुमुदो नलः ॥ ( युद्धका० १००·४ )
मैन्दश्च द्विविदश्चैव ह्यङ्गदो गन्धमादनः ।
हनूमांश्च सुषेणश्च सर्वे च हरियूथपाः ॥ ( ५ )

अत्र जाम्बवान् हरियूथपत्वेन सुग्रीवादिभिस्सह समानभावेन रामवृक्षप्रशाखा ख्यापितः ।

शरबन्धबद्धौ राघवौ प्रदर्श्य सीताया मनोबलं भङ्क्तुं रावणस्तां समरभूम्यामुप-स्थापयति । तत्रासौ विलोकते—

राघवं परिवार्यांता ररक्षुर्वानरर्षभाः । ( युद्धका० ४७·१ )
हनूमानङ्गदो नीलः सुषेणः कुमुदो नलः ॥
गजो गवाक्षो गवयः शरभो गन्धमादनः । ( २ )
जाम्बवानृषभः स्कन्धो रम्भः शतबलिः पृथुः ॥

सीतया विलोकितानामेकजातीयानां जनानामभिधानानि भगवता ऋक्षेण वाल्मीकिना दत्तानीति तेषु जाम्बवान् वानर एव ।

५—एतादृशः शतशः प्रसंगाः सन्ति यत्र वानरगणनायां निर्विशेषभावेन जाम्बवान् स्मृतः । टीकाकृद्भिरेवंविधेषु स्थलेषु गजनिमीलिका दत्ताहोस्विच्छत्रिन्यायं प्राधान्यव्यपदेश-न्यायं वानुसृत्य समाधानस्य या सरणिश्शरणीकृता न सा साध्वी । सन्त्यनेकान्येतादृशानि स्थलानि यत्र जाम्बवत्प्राधान्येन गणना जाम्बवते कप्यादिपदानां प्रयोगश्च । यथा—

(क) ततः कुमारस्तान् वृद्धान् जाम्बवत्प्रमुखान् कपीन् ।
अनुमान्य ददौ तेषां निसर्गं मधुभक्षणे ॥ (सुन्दरका० ६१।१२)

अत्र 'जाम्बवत्प्रमुखान्' इति बहुव्रीह्यन्तं विशेषणं कपिपदमन्वेति, जाम्बवान् प्रमुखे प्रमुखो वा येषु तान् कपीन् इति शाब्दबोधात् । एवं कपिगणनायाः श्रीगणेश एव जाम्ब-वतो नाम्ना ।

प्रायोपवेशार्थमुद्यतमङ्गदं हनुमानुद्बोधयन् वलिः—

(ख) नित्यमस्थिरचित्ता हि कपयो हरिपुङ्गव ।
नाज्ञाप्यं विषहिष्यन्ति पुत्रदारान् विना त्वया ॥ ( किष्कि० ५४।९ )
त्वां नैते ह्यनुयुञ्जेयुः प्रत्यक्षं प्रवदामि ते ।
यथायं जाम्बवान्नीलः सुहोत्रश्च महाकपिः ॥ ( १० )

अत्र कपीनां चलचित्तत्वमुक्त्वा निदर्शनार्थं गणितेषु प्रथमं जाम्बवानेव ।

(ग, जाम्बवान् वानरश्रेष्ठः सह सर्वैः प्लवङ्गमैः ।
भूतलात् सहसोत्थाय गृध्रराजमथाब्रवीत् ॥ ( कि० का० ४९।२ )

इति सम्पातिदर्शनप्रसङ्गे जाम्बवतो विशेषणं वानरश्रेष्ठः, तस्य सहचारिणश्च सर्वे प्लवङ्गमा एव ।

(घ) ततः प्रतीतं प्लवतां वरिष्ठमेकान्तमाश्रित्य सुखोपविष्टम् ।
सञ्चोदयामास हरिप्रवीरो हरिप्रवीरं हनुमन्तमेव ॥ ( कि० का० ६५।३५ )

हरिप्रवीरो जाम्बवान् हरिप्रवीरं हनुमन्तं सञ्चोदयामास सागरमुत्तर्तुमिति द्वाभ्यां प्रयुज्यमानं समानं विशेषणं साजात्यं स्फुटयतितरां जाम्बवद्धनुमतोः ।

(ङ) ततः कपीनामृषभेण चोदितः प्रतीतवेगः पवनात्मजः कपिः ।
प्रहर्षयंस्तां हरिवीरवाहिनीं चकार रूपं पवनात्मजस्तदा ॥ ( कि० का० ६६।३८ )

कपीनामृषभेण जाम्बवता चोदितः कपिर्हनुमानिति व्यक्तमेवोभयोः कपित्वम् ।

इदमत्रावधेयं यदत्र निर्धारणे षष्ठी । निर्धारणञ्च जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणम् । ऋषभश्च श्रेष्ठार्थवचनः । ततश्चोपलभ्यते निर्विवादं जाम्बवतः कपित्वं तत्र श्रैष्ठ्यञ्च ।

(च) उवाच परिसंहृष्टो जाम्बवान् प्लवगेश्वरः । ( कि० का० ६७।३१ )

अत्र प्लवगानां कपीनामीश्वरो जाम्बवानिति स्फुटमेव ।

६—सम्भृतं रामायणमेतादृशैः प्रयोगजातैः, नैतेषां निर्दिष्टप्रकारादन्यद् व्याख्यान्तरमुपयुक्तम्, तथापि रामसैनिकत्वेन समाना ऋक्षा वानराश्चेति सामयिकं साजात्यमस्त्येवानयोः । जाम्बवाँश्चैषु वृद्धतमो मान्यतमोऽधिकारी च । अतोऽवानरत्वेऽपि तत्कृते कपिश्रेष्ठ-हरिसत्तम-प्लवगेश्वरप्रभृतिपदानां प्रयोगो नानुपपन्न इति सम्भावना नावकाशमाप्नुयात् अतः कानिचिदेतादृशानि स्थलानि प्रस्तूयन्ते यत्र जाम्बवान् वानरादिपदैः सुस्पष्टं वानर उक्तः । तथा हि—

(क) अशोकवनिकाया विध्वंसको रक्षोगणानां संहारकश्चैष नवीनो हरिः सावधानतया निग्राह्यो भवद्भिरिति विरूपाक्षादीन् पञ्चसेनापतींस्तन्निग्रहार्थमाज्ञापयन्ननुशास्ति रावणः—

नावमान्यश्च युष्माभिर्हरिः क्रूरपराक्रमः ।
दृष्टा हि हरयः पूर्वं मया विपुलविक्रमाः ॥ ( सुन्दरका० ४६।९ )

वाली च सहसुग्रीवो जाम्बवांश्च महाबलः । ( ४६।१० )
नीलः सेनापतिश्चैव ये चान्ये द्विविदादयः ॥
नैवैतेषां गतिर्भीमा न तेजो न पराक्रमः । ( ११ )

अत्र प्रत्यक्षीकृतवीर्येषु महाप्रभावेषु सुप्रसिद्धेषु कतिपयवानरेषु रावणो महाबलं जाम्बवन्तं वाल्यादिभिस्सह गणयतीति तस्य वानरत्वं सुव्यक्तम् ।

( ख ) अथोत्तरमुदारार्थमब्रवीदङ्गदस्तथा ।
अनुमान्य तदा प्राज्ञो जाम्बवन्तं महाकपिम् ॥ ( कि० का० ६५।१८ )

अत्र जाम्बवतो विशेषणं महाकपिरिति कपिश्रेष्ठ-कपिसत्तम-कपिवरिष्ठादिपदानीव नेदं पदं यस्यान्यथापि योजना शक्या । यो हि कपिर्भवति महाँश्च स महाकपिः । नास्य कथमप्यर्थान्तरम् ।

( ग ) सौवर्णान् वानरेन्द्राणां चतुर्णां चतुरो घटान् ।
ददौ क्षिप्रं स सुग्रीवः सर्वरत्नविभूषितान् ॥ ( यु० का० १३१।४९ )
यथा प्रत्यूषसमये चतुर्णां सागराम्भसाम् ।
पूर्णघटैः प्रतीक्षध्वं तथा कुरुत वानराः ॥ ( ५० )
एवमुक्ता महात्मानो वानरा वारणोपमाः ।
उत्पेतुर्गगनं शीघ्रं गरुडानिलशीघ्रगाः ॥ ( ५१ )
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ।
ऋषभश्चैव कलशान् जलपूर्णानथानयन् ॥ ( ५२ )

रामराज्याभिषेकाय चतुरर्णवार्ण आनेतुं सुग्रीवो येभ्यश्चतुर्भ्यो वानरेभ्यश्चतुरस्सौवर्णान् कलशानयच्छत् तेष्वेकः प्रथमश्च जाम्बवानिति नात्र किमपि वक्तव्यं शिष्यते ।

७—न केवलं रामायण एव, अपि तु महाभारतादिष्वितरेषु प्राचीनग्रन्थेष्वपि ऋक्षराजो जाम्बवान् वानर एवामन्यत । प्रथमं भारतीयरायोपाख्यानप्रसङ्गादुद्ध्रियते स्वल्पभागः—

( क ) ऋष्यमूकस्य शैलस्य सन्निकर्षे तटाकिनी । ( वनप० २९०।४४ )
वसते तत्र सुग्रीवश्चतुर्भिस्सचिवैः सह ॥ ( ६५ )
तावृष्यमूकमभ्येत्य बहुमूलफलद्रुमम् ।
निर्यग्रे वानरान् पञ्चवीरौ ददृशतुस्तदा ॥ ( २९१।९ )
मैन्दश्च द्विविदश्चापि हनुमांश्चानिलात्मजः ।
जाम्बवानृक्षराजश्च सुग्रीवसचिवाः स्थिता ॥ ( २३ )

रामलक्ष्मणदृष्टेषु सुग्रीवपञ्चमेषु वानरेष्वेतेषु मैन्दादयश्चत्वारो वानराः सुग्रीवसचिवाः, एष्वन्यतम ऋक्षराजो जाम्बवान् ।

( ख ) हनुमज्जाम्बवन्तौ च मूर्च्छाविरहितौ भुवि ।
वानरावूचतुस्तथ्यं मीलयावोऽत्र लोचने ॥ ( ३६।६७ )

एवं ब्रुवाणे वीरे तु प्राप्तो रणगतो लवः ।
जग्राह वानरौ तौ तु मुदा कपटमूच्छितौ ॥ ( ७१ )
सीता पुत्रं परिष्वज्य वचनं चेदमब्रवीत् ।
मानिनौ वानरौ मुञ्च रणमध्ये च पुत्रक ॥ ( ७४ )

इति भगवतो व्यासस्य शिष्येण वेदशाखाप्रवक्त्रा जैमिनिना कृते "जैमिनीयाश्वमेध-पर्वणि" हनुमज्जाम्बवाभ्यामसकृद् वानरपदप्रयोगो जाम्बवस्यर्क्षपतेर्वानरत्वमभिधत्ते ।

( ग ) हनुमान्नलनीलौ च जाम्बवान् पनसस्तथा ।
एतैश्चान्यैश्च बहुभिर्वानरैः सह महाबलैः ॥ ( १८७।४१ )

इति ब्रह्मपुराणे हनुमदादिनामग्रहणपूर्वकं सर्वनामैतत्पदेनैतेषां वानरत्वमुक्तम् । जाम्बवानेष्वेकः ।

( घ ) अथ ते वानरा वीरा नीलाङ्गदनलादयः ।
धूम्रधूम्राक्षवीरेन्द्रा जाम्बवत्प्रमुखास्तथा ॥ (१४३।४३ )

इति गरुडपुराणाचारकाण्डीयेऽस्मिन् पद्ये न केवलं जाम्बवानेव, अपि तु तद्भ्राता[1] धूम्रोऽपि वानरत्वेनापठ्यत ।

( ङ ) सुग्रीवेणानुजेनापि वायुपुत्रेण धीतता । ( सेतुमाहात्म्ये २।२७ )
तथान्यैः कपिभिश्चैव जाम्बवान्नलमुख्यकैः ॥
अन्वीयमानो रामोऽसौ मुहुर्तेऽभिजितिद्विजाः । ( २९ )

इति स्कान्दे पुराणेऽपि कपिषु जाम्बवान् ।

( च ) अथादिशन् महाराजो जाम्बवन्तं कपीश्वरम् ।
रघुनाथस्य सेवायै कपिषूत्तमतेजसम् ॥ ( पातालखं० ११।१५ )

कपिषूत्तमतेजाः कपीश्वरो जाम्बवान् महाराजसुग्रीवेण रघुनाथस्य सेवायै समादिष्ट इति पद्मपुराणम् ।

८—(क) निखिलेऽपि वाङ्मये प्राग्वामनावतारात् कृष्णावतारपर्यन्तं विद्यमानत्वेनोपवर्णितो जाम्बवानेकैव व्यक्तिः । आपाततोऽसङ्गत इव प्रतीयमानेऽस्मिन् प्रसङ्गे समाधिधिया जाम्बवदन्तरस्य कल्पना स्वयमेव महत्यसङ्गतिः ।

अयमेवर्क्षराजो जाम्बवान् श्रीकृष्णेनायुध्यत स्वसुतां तस्मै प्रादाच्च दारत्वेन स्वचापल्यदोषापनुत्यै । स्यमन्तकोपाख्यानस्य प्रसिद्धोऽयं विषयः प्रायशः सर्वेषु पुराणेषूपनिबद्धः

---

१. धूम्रजाम्बवतोर्भ्रातृत्वं युद्धकाण्डे—
ऋक्षवन्तं गिरिश्रेष्ठमध्यास्ते नर्मदां पिबन् ।
सर्वर्क्षाणामधिपतिर्धूम्रो नामैष यूथपः ॥ ( २७।१० )
यवीयानस्य तु भ्राता पश्यैनं पर्वतोपमम् । ( ११ )
स एष जाम्बवान्नाम महायूथपयूथपः ॥ ( १२ )

समानीभूतयेव पदावल्या। अत्र वारं वारमृक्षपदेनर्क्षराजपदेन वा विशेषितस्य जाम्बवतः पुत्रीं भीमो नर्मणि वानरीति वदति, यच्च पूर्वोद्धृतेन—

कस्तु जाम्बवतीं भार्यां वानरीं माधवं विना।
कुरुते रुक्मिणीं प्राप्य गुणज्ञः खलु केशवः॥

इति पद्येन स्पष्टमेव।

(ख) अत्रिसंहितानाम्नि प्राचीने वैखानसागमे जाम्बवद्रूपविधाननिर्देश उपलभ्यते—

सर्वाभरणसंयुक्तं हर्षयुक्तं समाचरेत्।
नीलाभं जाम्बवन्तं च कारयेद् वानराकृतिम्॥ ( ५९।६३ )

(ग) रामायणीयकतिपयस्थलेषु विवशतया टीकाकृद्भिः ऋक्षस्य वानरार्थो ...दिष्टः। यथा—

सा वानराणां ध्वजिनी सुग्रीवेणाभिपालिता।
त्रिधा निविष्टा महती रामस्यार्थपराभवत्॥ ( ६।४।१०७ )

इति पद्यव्याख्याने 'तिलके' श्रीनागेशभट्टः—

"ऋक्षगोलाङ्गूलानामपि वानरावान्तरजातीयत्वात् सर्वेषां वानरत्वेनाप्युक्तिर्नासङ्गतेति"।

इदं प्रायशः श्रीमहेश्वरतीर्थमनुसरति तच्च "ऋक्षगोलाङ्गूलानामपि वानरावान्तरजातीयत्वात् सर्वेषामपि वानरत्वोक्तिः" इति।

(घ) 'ऋषेर्जातौ' इति पाणिन्युणादिसूत्रव्याख्याने भट्टनारायण ऋक्षं वानर इत्यर्थं निरदिशत्।

एवमेभिः प्रत्यक्षनिर्देशैः सिध्यतितरां यदृक्षस्यैकोऽर्थो वानर इत्यपि रामसैनिका ऋक्षाश्च वानराः, न तु भल्लूकाः पशवः।

ऋक्षस्यापभ्रंशा अवेस्तायाम् अरेंशे ग्रीकभाषायाम् आर्क्टोस् ( Arktos )लैटिनभाषायाम् उर्सस( Ursus )महाराष्ट्री-जैनमहाराष्ट्री-शौरसेनी-मागधी-अर्धमागधी-प्रभृतिषु प्राकृतापभ्रंशभाषासु हिन्दी-उर्दू-पञ्जाबी-कुमायूनी-महाराष्ट्री-गुजराती-राजस्थानीत्यादिवर्तमानप्रयोगभाषासु च रुक्ष-रिक्ख-रिच्छ-रीछ-रिञ्छ-रींछसदृशाः शब्दा भल्लूक एवं रूढाः, अत ऋक्षपदस्यार्थस्तु भल्लूकोऽस्त्येव जाम्बवदादिकृते प्रयुक्ता वानरादयः शब्दा अपि भल्लूकाभिधायिन इति विपरीतसम्भावना नात्र घटते। तथाहि—

(क) संस्कृते व्यक्तिवाचिकाभिधानान्यपि पर्यायवाचकपदैरभिव्यज्यन्त इति परम्परा। महाभारते हस्तिनापुरकृते हास्तिनं पुटभेदनम्, गजसाह्वयपुरम्, नागपुरम् इत्यादीनां हस्ति-पुर-पर्यायवाचीपदघटितनाम्नां पुष्कलः प्रयोगः। दिङ्निर्देशमात्रमिदम्। संस्कृते त्वियमतिसामान्या चिरकालिकी च प्रवृत्तिरापामरंप्रसिद्धा। किन्तु न निखिलेऽपि प्राचीनवाङ्मये कुत्रापि ऋक्षं विहाय भल्लूकादीनामेकस्यापि पदस्यैकवारमपि प्रयोगः।

(अ) येन भगवता प्राचेतसेन वाल्मीकिना कपि-हरि-ऋक्ष-गोपुच्छ-गोलांगूल-वनचारि-पिंगाक्ष–प्लवङ्ग–प्लवंगम–प्लवत्–पिंग–वनौकः–वनालय–मृग–तरुमृग–शाखामृग-वलीमुखादयो विंशतिकल्पाः शब्दा वानरार्थे प्रयुक्ताः, ऋक्षपदमसकृत्प्रयुञ्जानेनापि तेन भल्लूकतत्पर्यायवाचकं पदं नैकवारमपि प्रायोजि । इयं प्रवृत्तिरेव प्रदर्शयितुमलं यदत्र ऋक्षपदं भल्लूकार्थे नैव ।

(आ) महाकविकालिदासेन रघुवंशे रामकथाप्रसङ्गे वानरपर्यायवाचिनां हरि-कपि-प्लवङ्ग-पिंगल-ऋक्ष-वानरपदानां प्रयोगः कृतो नैकवारमपि भल्लूकपदस्य च प्रयोगो विहितः ।

(इ) महावीरचरिते उत्तररामचरिते च महाकविभवभूतिना जाम्ववदादिकृते न कुत्रापि भल्लूकपदं प्रयुक्तम् ।

एवं हरि-कपि-वानरादिपदानां व्यापकः प्रयोगो भल्लूकादिपदानां प्रयोगस्य सर्वथा-भाव इति प्रवृत्तिरेवेयं प्रदर्शयितुमलं यदत्र ऋक्षपदं भल्लूकार्थे नैव; प्रत्युत भल्लूकपदस्य वानरार्थे सम्भावना । तथाहि—

(क) डा० रघुवीरेण Comprehensive English Hindi Dictionary नामक-स्वकोषस्य भूमिकायां प्रसंगवशाद् वानरपर्यायवाचिपदानां सुविस्तृता सूची समुपनिबद्धा, यस्यां महाभारतीयेनाधारेण भल्लुक-भल्लूकपदयोरपि सन्निवेशः । सहरिवंशे सम्पूर्णेऽपि महाभारते ( गीताप्रेससंस्करणे ) नैवावाप्तिर्जाता पदयोरनयोः । पद्मपुराणे ब्रह्मवैवर्तपुराणे च भल्लुक-पदमस्मिन् प्रसङ्गे दृश्यते, तथाहि—

(अ) 'वानरराजेन पञ्चाशत्परार्द्धवानर-भल्लूकसेनावता आत्मकार्येण सिध्यते' इति तारोक्ती रामं प्रति पद्मपुराणे ( पातालखण्डे ११६-२५ ) तत्रैव

(आ) 'मम वानरा भल्लूकप्रमुखाः कोटिशः सन्तीति (३३) सुग्रीवो रामायावेदयते ।

ब्रह्मवैवर्तपुराणेऽपि चिरायुषां हरिभक्तानां गणनायां जाम्ववान् भल्लूक उक्तः, तथाहि–

(इ) **हनुमन्तं बलिं व्यासमश्वत्थामानमेव च ।**
**विभीषणं कृपं विप्रं जाम्बवन्तं च भल्लुकम् ।।** ( कृष्णजन्मखण्डे ९६।१६ )

(ई) एतत्पुराणेऽस्मिन्नेव खण्डे—

**रामावतारे त्रेतायां देवांशाश्च ययुर्महीम् ।**
**हिमालयांशो भल्लूको जाम्बवान् रामकिङ्करः ।। ६।१७१**

अत्र पूर्वार्धे देवांशा महीं ययुरित्येवोक्तम्, ततः केवलं जाम्ववत एव जातिः प्रोक्ता उपलक्षणत्वेनेति वानरार्थ एवैतत्पदप्रयोगः । अत्र प्रमाणान्तरं'७ च' क्रमांकीयमुद्धरणं यत्र जाम्बवान् कपिरुक्तः । एवं पद्मपुराणकृतोऽपि भल्लूकस्य वानरार्थकतेष्टातः सम्भाव्यते भल्लूको वानर एव विशेषतो डॉ० रघुवीरप्रयत्नसाक्ष्ये ।

१०—यदि क्षणमभ्युपगम्येत वानरादिपदानां भल्लूकार्थकता, तदापि इदन्तूरीकरणीयं स्यादेव यदेतेषां पदानां भल्लूकार्थो विस्मारितः । यदि विस्मृतिरेवाङ्गीकरणीया, तर्हि तर्क-प्रमाणयुक्तियुक्ताया एव तस्याग्रहणं न्याय्यम् ।

ऋक्षस्य केवलं वानरोऽर्थ एव विस्मारित इति न। लोकवेदप्रथितेष्वर्थेषु [1]ऋष्योऽर्थोऽपि विस्मृतिमापादितो यस्यापभ्रंश ओरिक्ष ( Orix ) इति विद्यते।

यद्यपभ्रंशस्यैव लोकव्याप्तिप्रमाणे बलवत्त्वम्, तर्हि वानरार्थस्य ऋक्षस्यापि विद्यते 'रीसस' ( Rhesus ) इत्यपभ्रंशः। अयमप्यृक्षस्य वानरार्थस्वीकारपक्षे, न तु भल्लूकार्थपक्षे अस्ति ह्यन्यदपि 'हुलूक' ( Hoolook ) इति पदम्। एतदुत्तरभागेऽपि ऋक्षस्यैव सत्तेति व्यक्तीभवति हर्यृक्षपदप्रकाशे। हरीणामृक्षाणां द्वन्द्वे, हरिः स चासौ ऋक्षश्चेति कर्मधारये च हर्यृक्षपदं निष्पन्नं भवति। रामायण-रघुवंशादौ च भूयान् प्रयोगोऽस्य। रीसस-हुलूकौ च भारताभिजनौ कपिरिति जन्तुविज्ञानविदः।

११—वस्तुत एतादृशानां विपरीतसम्भावनानां मूले इयं भ्रान्तिरेव निदानं यदृक्षः केवलं जाम्बवान् एव कतिपयस्वसैनिकत्रातयुत आसीत्। परं नैषा वस्तुस्थितिः उत्तर-रामायणे केचनान्येऽपि सुप्रसिद्धा वानरा ऋक्षत्वेन निर्दिष्टाः। यथा—

(क) गजो गवाक्षो गवयः सुदंष्ट्रो
मैन्दः प्रभो ज्योतिमुखो नलश्च।
एते च ऋक्षा सह वानरेन्द्रैः,
त्वत्कारणाद् राम ! सुरैर्हि सृष्टाः ॥ (गीताप्रेस, तिलकटीका ३६।५०)

अत्र महर्षिरगस्त्यो गजादीन् वानरान् ऋक्षत्वेन निर्दिशति।

(ख) तं विभीषणसुग्रीवौ हनुमाञ्जाम्बवान्नलः।
ऋक्षराजस्तथा नोलो लक्ष्मणश्चान्वयुस्तदा ॥ ( युद्ध० ४१।२७ )

युद्धे रामानुवर्तिनां प्रधानवीराणां गणनेयम्। महासेनापतिर्नीलोऽत्र स्पष्टमेव ऋक्ष-राज इत्युक्तः। गीताप्रेसानुवादकैर्ऋक्षराजपदं जाम्बवद् विशेषणत्वेनोपात्तम्। ऋक्षराजः केवलं जाम्बवानेव भवितुमर्हति, नान्यः कश्चन, न जाम्बवतोऽतिरिक्तः कश्चनान्य ऋक्ष इत्येवं प्रकारा भ्रान्तधारणैव विपरीतान्वये हेतुरिति न तिरोहितं शेमुषीमताम्। यादृच्छिक एतत्पदान्वयश्चेद् यथेदं जाम्बवतो विशेषणं तथैव हनुमतो लक्ष्मणस्य कथं न ? विधेयविशेषण-त्वेन निकामं नलमन्वीयात्तथापि प्रतिपाद्यसाधनताक्षुण्णैव।

(ग) युद्धकाण्डे गोलाङ्गूलो गवाक्ष ऋक्षराजोऽप्युक्त इति समुद्ध्रियमाणपद्यजातेन ११ क—पद्यस्य पुष्टिरपि जायते।[2]

(अ) जाम्बवन्तं त्रिभिर्बाणैराजघान स्तनान्तरे। ( ९९।११ )
ऋक्षराजं गवाक्षं च जघान बहुभिः शरैः।
जाम्बवन्तं गवाक्षं च स दृष्ट्वा शरपीडितौ ॥ ( १२ )

---

१. ऋक्षस्य ऋष्यार्थविषये हिन्दीभाषानिबद्धः 'ऋक्षका एक और अर्थ ऋष्य' इति निबन्धः जनसाहित्ये ( १९७४ अप्रेल )

२. प्रकाशितो द्रष्टव्यस्तत्रैव।

अत्र गवाक्षः ऋक्षराजः ।

(आ) गोलाङ्गूलो महाकायो गवाक्षो भीमदर्शनः । ( ४२।२८ )

अत्र गवाक्षो गोलाङ्गूल उक्तः ।

(इ) अयं गवाक्षो वानरोऽप्युक्तः—

ऋषभः शरभो नीलो गवाक्षो गन्धमादनः ।
पञ्च वानरशार्दूलाः कुम्भकर्णमुपाद्रवन् ॥ ( ६७।२४-२५ )

(घ) रामायणे वेगदर्शी सदैव वानरपदान्वित आयाति—यथा

(i) सुमुखो दुर्मुखश्चापि वेगदर्शी च वानरः ।
मृत्युर्वानररूपेण नूनं सृष्टः स्वयम्भुवा ॥ ( ३०।२३ युद्धकाण्डे )

(ii) रिरक्षिषन्तोऽभ्यपतन्नङ्गदं वानरर्षभाः ।
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ॥ ( यु० का० ७६।६० )

(iii) जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः । ( यु० का० १३१·५२ )

अस्मा एव वेगदर्शिने विशेषान्तरमृक्षपदमपि—

(iv) जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ।
ऋक्षराजो महाबाहुः कुक्षिं रक्षन्तु ते त्रयः ॥ ( यु० ४।२० )

जाम्बवान्, सुषेणः, ऋक्षराजो वेगदर्शीवानरश्चेति त्रयो वीराः सैन्यस्य कुक्षिं रक्षन्तु इति रामस्य शासनं व्यूहे । टीकाकृद्भिरत्रापि ऋक्षराजपदं जाम्बवता योजितम् । श्रीमहेश्वरतीर्थः "जाम्बवानित्यस्य विशेषणम् ऋक्षराजः" इति, महावैय्याकरणो भाष्यप्रदीपव्याख्याता लघुबृहच्छब्देन्दुशेखराद्यनेकग्रन्थप्रणेता श्रीनागेशभट्टो रामायणतिलके "[1]ऋक्षराजो जाम्बवानित्यन्वयः" इति व्याख्याति । सुदूरव्यवायेन कथमनयोरन्विति इति विषमतां विचार्य श्रीगोविन्दराजेन ऋक्षराजपदेन जाम्बवतो भ्राता धूम्रो गृहीतः । "ऋक्षराजो जाम्बवद्भ्राता । कुक्षिं पश्चाद्भागम् । जाम्बवान् सुषेणो वेगदर्शी चेति त्रयो महासत्त्वः ऋक्षराजश्च कुक्षिं रक्षन्त्वित्यन्वयः" इति रामायणभूषणे रत्नकिरीणाख्याने श्रीगोविन्दराजा इत्यपि चिन्त्यमेव । व्यूहरचनार्थं कुक्षिस्थानासनार्थं निर्दिष्टानामेषां त्रयाणामेव कृते रामशासनम्, यत्पद्ये त्रय इति पदेन व्यक्ततरम् । धूम्रे गृहीते ते चत्वारो भवन्ति । एतत्सैन्यानुशासनविरुद्धमकारणं रामाज्ञाभङ्गप्रत्यवायश्च । जाम्बवद् विशेषणत्वेन धूम्रस्य ग्रहणेन वात्र यथाकथञ्चिन्निर्वाह्यते, परमुपरिष्टात् किं भविष्यति यत्रेदमेव पद्यं किञ्चिद् व्यत्ययेन पुनः पठितमस्ति—

---

१. एतद्व्याख्याद्वयमनुसृत्यैव गीताप्रेसानुवादे "महाबाहु ऋक्षराज जाम्बवान्, सुषेण और वानर वेगदर्शी ये तीनों वानर सेना के पृष्ठ भाग की रक्षा करें" इति जाम्बवत एव विशेषणम् ।

**जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ।**
**ऋक्षमुख्या महात्मानः कुक्षिं रक्षन्तु ते त्रयः ।।** (यु० का० २४।१७)

अत्र बहुवचनान्ते ऋक्षमुख्य-महात्म-पदे बहुवचनान्तेन त्रिपदेनान्वितः । त्रिपदेन च जाम्बवदाद्यस्त्रयोऽपि निर्विशेषं गृह्यन्ते । नात्र व्याख्यान्तरं शक्यम् । नात्र धूम्रस्य कथमपि प्राप्तिः, न वा केवलं जाम्बवतो विशेषणम् 'ऋक्षमुख्या' इति पदम् । एवं न केवलं वेगदर्शिन एव, अपि तु सुषेणस्यापि ऋक्षत्वं ज्ञायते । यो हि तारापिता सुग्रीवश्वशुरः प्रसिद्धो वानरः । पूर्वापरप्रसङ्गावधानेन न कदाप्येतादृश्यस्त्रुट्योऽभविष्यन्, न च 'रामायणकोषे' ( डा० रामकुमाररायकृते ) जाम्बवदादीनां भल्लूकत्वं सुग्रीवादीनां तद्भिन्नजातित्वं वा मिथ्याप्राकाश्यमवाप्स्यत् । 'संस्कृतकाव्यों में पशु पक्षी' सदृशेषु शोधप्रबन्धेषु ऋक्षवानरैक्यरूपं तथ्यमुचितं स्थानं नावाप्सवदिति सर्वमनवधानमूलमेव ।

उद्धृतचरे ( युद्धका० ४।२० ) पद्ये पाठान्तरम् 'ऋक्षराजो महासत्त्वः' अपि श्रीगोविन्दराजैः, श्रीसुब्रह्मण्यस्वामिभिश्च सम्मतमस्ति । सम्भवतः कदाचिन्मूलपाठः "ऋक्षराजा महासत्त्वाः" 'ऋक्षराजा महाबाहा' वा भविष्यत् । ऋक्षशब्दस्य वास्तविकार्थस्य बाहशब्दस्य चाकारान्तत्वस्याप्रतीत्या संशोधने एकवचनमागतं स्यात् । एतादृशाः संशोधनाभासा सामान्यतः समस्त एव वाङ्मये अतो रामायणेऽपि दृश्यन्ते भूयांसस्तेनात्र विचारणीयाः ।

(ङ) पद्मपुराणे पातालखण्डे वानरराजः सुग्रीवोऽप्यृक्षराजपदेन विशेषितः, तथाहि—

**अयं वै हनुमान् वीरो यो ददाह दनोः पुरीम् ।**
**अयमप्यृक्षराजो हि सर्ववानरभूमिपः ।।** ( ६४।५६ )

अत्र "सर्ववानरभूमिपः अयम् ऋक्षराजः ( सुग्रीवः )" इति अङ्गुलिनिर्देशेन नामग्राहं विना केवलम् ऋक्षराजपदेन सुग्रीवो निर्दिष्ट इति तत्प्रसङ्गात् स्पष्टम् ।

बालि-सुग्रीवयोः पिता ऋक्षरजा आसीत् । कबन्धो राममभिधत्ते सुग्रीवस्य परिचयं ददत्—

**(क) स ऋक्षरजसः पुत्रः पम्पामटति शङ्कितः ।** ( अरण्यका० ७२।२० )

पूर्वापरप्रकरणमविचार्यात्र श्रीगोविन्दराजेन "ऋक्षरजास्तन्मातेत्याहुः" इति चिन्त्योऽर्थः कृतः । अस्मिन्नेव काण्डे उपरिष्टादुक्तम्—

**(ख) हरेर्ऋक्षरजोनाम्नः पुत्रस्तस्य महात्मनः ।**
**अध्यास्ते तं महावीर्यः सुग्रीव इति विश्रुतः ।।** ( ७६।२६ )

अत्र 'तस्य महात्मन ऋक्षरजोनाम्नः हरेः पुत्रः सुग्रीवः' इति ऋक्षरजसः पुंस्त्वं स्पष्टम् ।

(ग) एवमेव रावणोऽपि सुग्रीवाय दूतमुखेन वक्ति :—

त्वं वै महाराजकुले प्रसूतो महाबलश्चर्क्षरजस्सुतश्च ।
न कश्चिदर्थस्तव नास्त्यनर्थस्तथा हि मे भ्रातृसमो हरीश ॥ (६।२०।१०)

(घ) महाबलः कुम्भकर्णः स्वप्रतिद्वन्द्विनः सुग्रीवस्याह्वानं स्वीकृत्य प्रत्युत्तरे तत्पौरुषं ख्यापयन् कथयति—

प्रजापतेस्तु पौत्रस्त्वं तथैवर्क्षरजस्सुतः ।
धृतिपौरुषसम्पन्नस्तस्माद् गर्जसि वानर ॥ ( ६।६७।५८ )

ऋक्षरजश्शब्दस्यार्थ एव सुग्रीवादीनां स्पष्टयति ऋक्षप्रभवत्वम् । तथा हि—ऋक्षाणां रजो ज्योतिर्यस्मात् सः, ऋक्षरजाः ऋक्षाणां प्रकाशकः ऋक्षेषु ज्योतिर्वा । रजांसि लोकाः, ऋक्षाणां रजांसि लोका यस्मात् स ऋक्षरजाः = ऋक्षप्रजापतिरिति । "रजो रजते ज्योती रज उच्यते । लोका रजांस्युच्यन्ते" इति ( ४।१९।३ ) निरुक्तमत्र प्रमाणम् ।

ब्रह्माण्डपुराणे ऋक्षरजस ऋक्ष इति नामार्धमेव—

(ङ) ऋक्षो नाम महातेजाः सर्ववानरयूथपः ।
हन्ता सदैव शत्रूणां सर्वास्त्रविधिपारगः ॥ (उपोद्घातः ७।२१०)

ऋक्षस्यास्य भगिनी ऋक्षा, तस्याः पुत्रो जाम्बवान्, एवं जाम्बवानयं वालिसुग्रीवयोः पैतृस्वस्रेयो भ्राता, तथाहि—

(च) ऋक्षस्य भगिनी ऋक्षा वानरस्य बलीयसः ।
प्रजापतिसकाशात् सा जज्ञे शूरपरिग्रहम् ॥
ऋक्षराजं महाप्राज्ञं जाम्बवन्तं यशस्विनम् ॥ ( २१०।३०० )

उद्धृतचरे ( ११ क ) पद्ये मैन्दस्य ऋक्षत्वमुक्तम् । मैन्दद्विविदौ सुषेणपुत्रौ युवराजस्याङ्गदस्य मातुलाविति रामायणतो ज्ञायते—

(छ) अङ्गदं परिरक्षन्तौ मैन्दो द्विविद एव च ।
तस्य तस्थतुरभ्याशे परस्परदिदृक्षया ॥ ( यु० का० ७६।१२)
अङ्गदो मातुलौ दृष्ट्वा पतितौ तु महाबलौ ।
अभिदुद्राव वेगेन कुम्भमुद्यतकार्मुकम् ॥ ( ७६।४६ )

अनयोर्मैन्दो ज्येष्ठो द्विविदश्च यवीयानिति रामायणतः स्पष्टम्—

(ज) आजघान महातेजा वक्षसि द्विविदाग्रजम् । ( यु० का० ७६।४४ )

ऋक्षश्रेष्ठा विभावेव रामायणे महाभारतादौ च वानरावप्युक्तौ, महाभारतसभापर्वप्रसङ्गोऽयं दृश्यताम् । सहदेवदक्षिणदिग्विजयप्रसङ्गे भगवान् व्यासः—

(ञ) तं जित्वा स महाबाहुः प्रययौ दक्षिणापथम् ।
गुहामासादयामास किष्किन्धां लोकविश्रुताम् ॥ ( ३१।१७ )
तत्र वानरराजाभ्यां मैन्देन द्विविदेन च ।
युयुधे दिवसान् सप्त न च तौ विकृतिं गतौ ॥ ( १८ )
ततस्तुष्टौ महात्मानौ सहदेवाय वानरौ ।
ऊचतुश्चैव संहृष्टौ प्रीतिपूर्वमिदं वचः ॥ ( १९ )

एवमियं भ्रान्तिर्निरस्ता भवति यद्रामसेनायां जाम्ववदादयः पञ्चषा एव ऋक्षा आसन् । परिहायातिविस्तरमिदं कथितुं शक्यते यदेतावता विवेचनेनेदं फलितमृक्षपदस्य वानर इत्यर्थोऽपीति । रामसैनिकानां कृते प्रयुक्तस्यास्य पदस्यायमेवार्थो ग्राह्यः साधीयस्त्वेन ।

इदमत्रावधेयं यद् वानरार्थकमपीदं पदं रामकथाप्रसङ्गेऽत्र केवलं वानरपशुमेव नाभिप्रैतीति शम् ।

●●●

# रसायनं हि नाम भेषजप्रकाण्डम्[1]

डॉ० विद्याधरशुक्लः कविराजः

जी० ए० एम्० एस्०, आयुर्वेदाचार्यः, एम्० ए०, विद्यावारिधिः

शारीर-मानसागन्तुभिर्विविधवेदनाभिर्विक्रोशतां मानवानां वेदनोपशमनार्थं प्रवृत्तस्यायुर्वेदशास्त्रस्यान्यतमं प्रशस्तमङ्गं रसायनतन्त्रमिति । एतच्चाङ्गं दीर्घकालपर्यन्तं तारुण्यस्थापनात्, प्रभाबलवर्णौदार्यायुर्मेधाकरणात्, रोगप्रतिरोधकशक्त्याधायकत्वाच्च भेषजेषु प्रशस्ततमम् । रसायनं हि रसादिधातूनामाप्यायनम्, भेषजाश्रितानां रसवीर्यविपाकप्रभावपरमायुर्बलवीर्याणां वयःस्थैर्यकराणामयनं लाभोपायो भवति ।

**रसायननिरुक्तिः**

रसादीनां धातूनामयनं यद्वा भेषजद्रव्यस्थरसवीर्यविपाकादीनामयनं प्रापकं रसायनमुच्यते । तथा च—

**लाभोपायो हि शस्तानां रसादीनां रसायनम्** । इति । (चरक० चि०१।१।८)

**यद्वा—**

**यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम्** । इति । ( शार्ङ्गधरसंहिता )

---

१. भेषं रोगभयं जयतीति भेषजम् । रोगभयश्चौषधसेवनादपयाति । तथाहि भेषजशब्देनौषधमुच्यते । तथा च—
चिकित्सितं व्याधिहरं पथ्यं साधनमौषधम् ।
प्रायश्चित्तं प्रशमनं प्रकृतिस्थापनं हितम् ॥
विद्याद्भेषजनामानि ... ... । इति । (चरक० चि० १।१।३-४ )
भेषयति, 'भेषृ भये' ( भ्वा० उ० से० ) ण्यन्तः । अच् ( ३।१।१३४ ) । भेषं रोगभयं जयति । 'अन्येभ्योऽपि' ( वा० ३।२।१०१ ) इति डः । भेषं जयति वा । 'जै क्षये' ( भ्वा० प० से० ) 'आतोऽनुपसर्गे' इति कः । भिषज इदम् । 'तस्येदम्' (४।३।१३० ) इत्यण् । अनन्तावसथेति ह भेषजात्' (५।४।२३) इति निर्देशादेत्वम् । इत्यन्ये । ( अमरकोषः–रामाश्रमीटीका–२।६।५० )
प्रकृष्टं काण्डमवसरो रसो वास्य । प्रगतः काण्डो धर्मोऽस्मादिति वा ॥
मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि•••अमर १।४।२७ ।
अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः ।
प्रकाण्डयते । 'कड भेदने' ( चुरादिः ) 'एरच्' ( ३।३।५६ ) पृषोदरादिः ( ६।३।१०९) काम्यते, कमु कान्तौ ( भ्वा० आ० से० ) णिङ् । 'प्रकाण्डो विटपे शस्ते मूलस्कन्धान्तरे तरोः इति विश्वः' । अमर० २।४।१० ।

रसायनं हि जरां दूरीकृत्य तरुणं वयः स्थापयति व्याधींश्चापाकरोति। अथ च रसायनं नहि केवलं रसादीनां प्राशस्त्यमावहति, अपि तु स्वास्थ्यवर्धनपूर्वकं तारुण्यवयः-स्थापनेन सह रोगापहरणसमर्थमपि भवति। उक्तं च—

> स्वस्थस्योर्जस्करं यत्तु तद्वृष्यं तद्रसायनम्।
> प्रायः प्रायेण रोगाणां द्वितीयं प्रशमे मतम्॥
> प्रायःशब्दो विशेषार्थो ह्युभयमुभयार्थकृत्॥ इति।
>
> ( चरक० चि० १।१।५–६ )

एवञ्च रसायनौषधानामुपयोगो द्विधा भवति—स्वस्थस्योर्जस्करणार्थं ( वयःस्थापनार्थ-मायुर्मेधाद्युत्कर्षाधानार्थम् ) रोगापनयनार्थश्च। रसायनोपयोगेन शरीरे व्याधिक्षमत्वं ( Immunity ), किं वा रोगप्रतीकारबलम् ( Resistance ) वर्धते।

**रसायनस्य फलश्रुतिः**

रसायनौषधसेवनेन यथाभिलषितं शतवर्षं शताधिकवर्षं वा सुदीर्घमायुरवाप्यते। स्मृतिर्वर्धते, धारणाशक्तिरेधते, धातुसाम्यमुपजायते, तारुण्यं स्थिरीभवत्यङ्गेषु, प्रभासते प्रभा गात्रेषु, वर्णसौष्ठवं सुस्वरत्वञ्च विकासमेति, शरीरबलमिन्द्रियाणाञ्च बलमभिवर्धते। वागर्थ-मनुवर्तते, लोकवन्द्यता कान्तिश्च प्रसरति[1]। रस-रक्त-मांस-मेदःप्रभृतीनां धातूनां प्राशस्त्य-मुपजायते, वार्धक्येऽपि वयसि युवेव स्मृतिबुद्धिमेधाबलवर्णाभिव्यक्तिर्भवति। रसायनेन च व्याधिः शममेति। तथा हि—जरावरोधकत्वाद् व्याध्यपवर्तकत्वाच्चान्येभ्यो भेषजविधिभ्योऽस्य वैशिष्ट्यमस्ति। अतश्चास्य भेषजप्रकाण्डत्वमङ्गीक्रियते विज्ञैर्भिषग्भिः।

अत्र चाऽऽयत्तमैहिकमामुष्मिकञ्च श्रेयः। तपःस्वाध्यायव्रतनिरता महर्षयोऽमृत-मिवापरं रसायनमुपयुज्य जरानातुर्यं दौर्बल्यञ्चापनुदन्तोऽन्वविन्दन् परश्शतानि वर्षाणि जीव-नम्। रसायनप्रयोगाच्च न केवलं दीर्घमायुरारोग्यं बलवर्णादिकं समुपलभ्यते, अपि तु देवर्षि-निषेवितां शुभां गतिमक्षयं ब्रह्मपदञ्चाश्नुते। सर्वोपधात्यागाच्च निर्वाणपदमवाप्नोति[2]। सन्ति च तादृशानि रसायनानि येषां प्रयोगसौष्ठवेन निर्जरं वयस्तिष्ठति, श्रुतमवतिष्ठते, सर्वामयाः प्रशाम्यन्ति, विषमविषं भवति गात्रे, गात्रमश्मवत् स्थिरीभवति, भवति चाधृष्यो भूतानाम् रसायनार्थी जनः। जीर्णं वपुर्मुक्त्वाऽग्र्यं तरुणं वयः, तन्द्राक्लमादिरहितं निरातङ्कं

---

१. दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः।
प्रभावर्णस्वरौदार्यं देहेन्द्रियबलं परम्॥
वाक्सिद्धिं प्रणतिं कान्तिं लभते ना रसायनात्।
लाभोपायो हि शस्तानां रसादीनां रसायनम्॥ (चरक० चि० १।१।७–८)

२. न केवलं दीर्घमिहायुरश्नुते रसायनं यो विधिवन्निषेवते।
गतिं स देवर्षिनिषेवितां शुभां प्रपद्यते ब्रह्म तथेति चाक्षरम्॥ (चरक० चि० १।१।८०)

जीवनम्, वर्णप्रसादमिन्द्रियाणां प्रवरं बलमायुः प्रकर्षम् यथासुखविहारत्वमप्रतिहतसर्वारम्भत्वमप्रतिहतपराक्रमत्वमूर्जस्वलत्वञ्च समवाप्यते किल रसायनगुणैषिभिर्जनैः[1]।

**येषां रसायनं प्रतिषिद्धम्—**

ये किल यथाविधानं रसायनं सेवितुमक्षमा भवन्ति, न ते भाजनानि भवन्ति रसायनोपयोगानाम्। यथा चाह [2]सुश्रुतः—**'अथ सप्त पुरुषा रसायनं नोपयुञ्जीरन्। तद्यथा—अनात्मवानलसो दरिद्रः प्रमादी व्यसनी पापकृद्भेषजापमानी चेति। सप्तभिरेव कारणैर्न सम्पद्यते—अज्ञानादनारम्भादस्थिरचित्तत्वाद्दारिद्र्यादनायत्तत्वादधर्मादौषधालाभाच्चेति'**।

जरापक्वशरीराणाञ्च रसायनमकिञ्चित्करं भवति। मलसंसृष्टे वस्त्रेऽपि तरङ्ग इव नहि मलावृते शरीरे रसायनं फलदं भवति। अतश्च संशोधनैर्विशुद्धस्य जनस्यैव रसायनं सिद्ध्यति।

**रसायनस्य प्राणैषणामूलकत्वम्—**

अविहतसत्त्वबुद्धिपराक्रमैश्च पुरुषैः स्वाभाविकरूपेण **'प्राणैषणा, धनैषणा, परलोकैषणा'** चेति त्रिविधा एषणाः पूरयितव्या भवन्ति[3]। तत्र सर्वतोऽधिकं जीवनेच्छा भवति बलवती। सर्वे हि प्राणिनः कामयन्ते यथाकथञ्चन जीवनधारणम्। प्रयतन्ते च यथासुखं प्राणैषणापूर्तये। प्राणपालनार्थञ्चायुर्वेदस्य स्वस्थवृत्तानुवर्तनमातुरस्य विकारप्रशमनञ्चेत्युभयं प्रयोजनमाख्यातम्। स्वस्थस्य चोर्जस्करणार्थं दीर्घायुरारोग्यप्रदानार्थञ्च रसायनतन्त्रमाविर्बभूव। एतच्चायुर्वेदाङ्गेष्वन्यतमं पृथगेव तन्त्रमस्ति। आयुर्वेदीया **'रसविधा'** च रसायनतो भिन्नाभिन्नप्रयोजनलक्षणा परकालीना विद्यते, तथापि रसायनतन्त्रस्य विकासाय तद्योगदानं महार्घ्यमित्यत्र न कश्चन विप्रत्ययः।

पुरा किल पृथगेव रसायनतन्त्रं स्वातन्त्र्येण पदं लेभे, किन्तु दैवदुर्विपाकादधुना प्रकीर्णरूपेण तद्विषया यत्र क्वापि विकीर्णाः सन्ति। न च याथार्थ्येन समेषां रसायनद्रव्याणां परिचयोऽपि सुलभोऽधुना, तथापि रसायनस्य विविधास्तादृशाः प्रयोगा अद्यापि सुलभा यैरस्य तन्त्रस्य शीर्षण्यं स्थानमङ्गीकृतं विद्यते।

**रसायनयोग्यं वयः[4]**

शरीरमानसाभ्यां रोगाभ्यामनभिक्रान्तस्य, परमर्द्धिरुचिरविविधोपभोगपरस्य, समृद्धसत्त्वस्य जितात्मनः, प्रशान्तस्य, कृतक्षणस्य, यथेष्टविचारिणः, परिच्छदवतः, धृतिस्मृतिमतः,

---

१. अनेन च्यवनादयो महर्षयः पुनर्युवत्वमापुर्नारीणां चेष्टतमा बभूवुः, स्थिरसमसुविभक्तमांसाः, सुसंहतस्थिरशरीराः, सुप्रसन्नबलवर्णेन्द्रियाः, सर्वत्राप्रतिहतपराक्रमाः क्लेशसहाश्च। (चरक० चि० १।२।३)

२. सुश्रुत० चि० ३०।४।

३. इह खलु पुरुषेणानुपहतसत्त्वबुद्धिपौरुषपराक्रमेण तिस्र एषणाः पर्येष्टव्या भवन्ति, तद्यथा—प्राणैषणा, धनैषणा परलोकैषणा चेति। आसां तु खल्वेषणानां प्राणैषणा तावत्पूर्वतरमापद्येत, कस्मात्? प्राणपरित्यागे हि सर्वपरित्यागः। तस्यानुपालनं स्वस्थस्य स्वस्थवृत्तानुवृत्तिः आतुरस्य विकारप्रशमनेऽप्रमादः। (चरक० सूत्र० ११)

४. पूर्वे वयसि मध्ये वा मनुष्यस्य रसायनम्। सुश्रुत० चि० २७।३

दयार्द्रचेतसः, मैत्रीपरस्य, यौवनवतः प्रौढावस्थासम्पन्नस्य च ( षोडशवर्षादूर्ध्वं पञ्चाशद्वर्षायुः पर्यन्तम् ) रसायनप्रयोगो विधीयते ।

**रसायनस्य पूर्वकर्म**

यथाविधिस्नेहन-स्वेदनानन्तरं वमनादिभिर्विशुद्धदेहस्य पुनश्च संसर्जनक्रमेण ( पेया-विलेपी-कृताकृतयूषकृताकृतरसद्वारा ) गृहीतपथ्यस्य जातबलस्य च रसायनं प्रयुञ्जीत[1] । शुभेऽयने ( उत्तरायणे ) शुक्ले पक्षे शुभेषु तिथिनक्षत्रमुहूर्तेषु धृतिस्मृतिबलमाधाय मानसदोषानखिलान् विधूय प्राणिषु मैत्रीं चिन्तयन् पूज्यान् सम्पूज्य च रसायनप्रयोगमारभेत् ।

संशोधनार्थञ्च हरीतकी-सैन्धवलवण-आमलक-गुड-वचा-विडङ्ग-हरिद्रा-पिप्पली-शुण्ठीनां समभागगृहीतचूर्णस्य तोलकमेकमुष्णाम्बुना पिबेद् यथावश्यकं वर्चःशुद्धिलक्षणोदयपर्यन्तम् ।

**हरीतक्यामलकौ रसायनप्रवरौ**

सत्स्वप्यनेकविधभेषजेषु स्वतन्त्ररूपेण प्रयोगसमसाद्गुण्याद्धरीतक्यामलकौ श्रेष्ठतमौ समाख्यातौ[2] । अत एवाग्रगण्यद्रव्यगणनाप्रसङ्गे **'हरीतकी पथ्यानाम्, आमलकं वयःस्थापनानाम्'** इति चरकाचार्येण[3] समुदाहृतम् । चरकसंहितायाश्चिकित्सास्थाने च श्रेष्ठतमचिकित्सो-

---

१. पूर्वे वयसि मध्ये वा तत्प्रयोज्यं जितात्मनः ।
स्निग्धस्य स्रुतरक्तस्य विशुद्धस्य च सर्वथा ॥
अविशुद्धे शरीरे हि युक्तो रासायनो विधिः ।
वाजीकरो वा मलिने वस्त्रे रङ्ग इवार्पितः ॥ ( अष्टाङ्गहृदयम्, उत्तर० ३९।३-४ )

२. हरीतकीं पञ्चरसामुष्णामलवणां शिवाम् ।
दोषानुलोमनीं लघ्वीं विद्याद् दीपनपाचनीम् ॥
आयुष्यां पौष्टिकीं धन्यां वयसः स्थापनीं पराम् ।
सर्वरोगप्रशमनीं बुद्धीन्द्रियबलप्रदाम् ॥
कुष्ठं गुल्ममुदावर्तं शोषं पाण्ड्वामयं मदम् ।
अर्शांसि ग्रहणीदोषं पुराणं विषमज्वरम् ॥
हृद्रोगं सशिरोरोगमतीसारमरोचकम् ।
कासं प्रमेहमानाहं प्लीहानमुदरं नवम् ॥
कफप्रसेकं वैस्वर्यं वैवर्ण्यं कामलां कृमीन् ।
श्वयथुं तमकं छर्दिं क्लैब्यमङ्गावसादनम् ॥
स्रोतोविबन्धान् विविधान् प्रलेपं हृदयोरसोः ।
स्मृतिबुद्धिप्रमोहं च जयेच्छीघ्रं हरीतकी ॥
तान् गुणांस्तानि कर्माणि विद्यादामलकीष्वपि ।
यान्युक्तानि हरीतक्या वीर्यस्य तु विपर्ययः ॥
अतश्चामृतकल्पानि विद्यात् कर्मभिरीदृशैः ।
हरीतकीनां शस्यानि भिषगामलकस्य च ॥ इति ।
( चरक० चि० १।१।२९–३४,३६–३७ )

३. चरक० सू० २६ ।

पयोगिरसायनोपयोगिद्रव्यत्वाच्च प्रथममेवोपात्ता हरीतकी। रसायनेषु श्रेष्ठत्वाच्चामलकं हरीतकीसाहचर्येणैव वर्णितं विद्यते। **'रसायनं तु तज्ज्ञेयं यज्जराव्याधिनाशनम्'** इत्यनुसारमुभयमपि रसायनलक्षणलक्षितत्वात् प्रवरं रसायनमिति नात्र विचिकित्सा कापि।

**रसायनस्य भेदाः**

[क] प्रयोगभेदेन त्रिविधं रसायनम्— { १—कुटीप्रावेशिकम्, २—वातातपिकम्, ३—द्रोणीप्रावेशिकम् }

[ख] भेषजभेदेन द्विविधं रसायनम्— { १—द्रव्यभूतम्, २—अद्रव्यभूतम् }

[ग] प्रयोजनभेदेन त्रिविधं रसायनम्— { १—काम्यम्, २—नैमित्तिकम्, ३—आजस्रिकम् }

[घ]·कार्यभेदेन द्विविधं रसायनम्— { १—संशोधनम्, २—संशमनम् }

**[क] कुटीप्रावेशिकं रसायनम्**

रसायनप्रयोगविधिष्वयमुत्तमो विधिः[1]। कुटीप्रवेशेन निर्वृत्तः प्रयोगः कुटीप्रावेशिक इत्युच्यते, यद्वा कुटीप्रवेशद्वारा साध्यं फलं कुटीप्रावेशिकम्। कुटीप्रवेशेन यत् क्रियते तत् कुटीप्रावेशिकमिति वा निरुक्तिः कर्तुं शक्यते। कुटीशब्दस्य तात्पर्यं साम्प्रतिके स्वास्थ्यकेन्द्रे 'सेनेटोरियम' इत्यभिधाने वर्तते, यत्र च समस्तानामुपकल्पनीयसम्भाराणां सुसङ्ग्रहो भवति। तत्स्थानं रमणीये प्रदेशे सुखप्रदे वातावरणे निर्मीयते। तत्र हि धूमातपरजोव्यालस्त्रीमूर्खादिभिरपरिवारितो विहाय स्वजन-परिजन-मित्र-भृत्यादिशरणचिन्तामखिन्नो निर्बाधमभिनिविशते स्वशरीरेऽग्रसायनसाधनम्। बाह्यशीतोष्णपवनप्रसराभिघातात् पृथक्करणं श्रेयसे प्रभवति रसायनविधावस्मिन् कायाकल्पे।

अस्मिन् कल्पे विहाराहाराचारयन्त्रणापूर्वकं षोडशकलं चतुष्पादं नितरामपेक्ष्यते। रसायनस्यास्य षाड्गुण्योपलब्धिर्वैद्यसंश्रया। यथेप्सितफलोपलब्धये चेमे भिषग्गुणा[2] रसायना-

---

१. रसायनानां द्विविधं प्रयोगमृषयो विदुः।
कुटीप्रावेशिकं मुख्यं वातातपिकमन्यथा॥ इति। (अष्टाङ्गहृदयम्, उत्तर० ३९।५)

२. श्रुते पर्यवदातत्वं बहुशो दृष्टकर्मता।
यस्यैते षड्गुणास्तस्य न साध्यमतिवर्तते॥ इति। ( चरक० सूत्र० अ० ९ )
× × ×
विद्या वितर्को विज्ञानं स्मृतिस्तत्परता क्रिया।
यस्यैते षड्गुणास्तस्य न साध्यमतिवर्तते॥ इति। ( चरक० सूत्र० अ० ९।२१ )
× × ×
तत्त्वाधिगतशास्त्रार्थो दृष्टकर्मा स्वयं कृती।
लघुहस्तः शुचिः शूरः सज्जोपस्करभेषजः॥
प्रत्युत्पन्नमतिर्धीमान् व्यवसायी विशारदः।
सत्यधर्मपरो यश्च स भिषक्पाद उच्यते॥ इति। ( सुश्रुत० सू० ३४।१९–२० )

चार्ये कार्यस्याभिनिर्वर्तने सामर्थ्याधायका भवन्ति । तद्यथा—पर्यवदातश्रुतता, परिदृष्टकर्मता, दाक्ष्यम्, शौचम्, जितहस्तता, उपकरणवत्ता, सर्वेन्द्रियोपपन्नता, प्रकृतिज्ञता, प्रतिपत्तिज्ञता चेति।

**कुटीनिर्माणविधिः**

यत्र भूमिभागे पुण्यकर्मणां सज्जनानां राज्ञां द्विजातीनां क्षत्रियाणाम्, वैश्यानां निवासो भवेद्, तथाविधे सुलभावश्यकवस्तुनि निर्भये प्रशस्ते नगरादनतिदूरे पूर्वस्यामुत्तरस्यां वा दिशि सुभूमौ कुटीं कारयेत् ।

रसायनप्रयोगावधेस्त्रिमासपूर्वमेव कुटी निर्मेया । शुभे मुहूर्ते कार्यारम्भो विधेयः । कुटीनिर्माणेऽभिलषिता विशेषता स्यात्[1], तद्यथा—

**(१) विस्तारोत्सेधसम्पन्ना**—दैर्घ्ये उच्चतायाञ्च तथा स्यात्, यथा सा सुखप्रविचाराऽऽयामवती च भवेत् । यथा च देवमन्दिराणि राजप्रासादहर्म्याणि वा कतिपयैर्गर्भभित्तिभिरारचितानि भवन्ति तथैवेयं कुटी ।

**(१) त्रिगर्भा भवेत्**—मुख्या कुटी भित्तित्रयैरावृता स्यात् । तत्र प्रथमा द्वितीया चायामे ( चौड़ाई ) षट्फुटपरमिते स्याताम्, तृतीया तु दैर्घ्ये आयामे चान्यूनद्वादशफुटा भवेत् । त्रिषु भित्तिषु च प्रकाशप्रवेशार्थं वायोश्च प्रसरार्थं ६ × ९ इञ्चमितानि वातायनानि गवाक्षाकृतीनि स्युः । उत्सेधे चान्यूनदशफुटा कुटी कार्या ।

**(३) सूक्ष्मलोचना**—लम्बाकृतीनि वातायनानि निर्मेयानि, येन न हि साक्षादेव वायुप्रवाहस्पर्शो भवेत् ।

**(४) घनभित्तिः**—भित्तिश्चान्यून—१¼ फुटा घना स्यात् ।

**(५) ऋतुसुखा**—प्रत्येकस्मिन् ऋतौ सुखदा स्यात् । शीतोष्णवातवर्षासु च सर्वदैव सुखावहा स्यात् । साम्प्रतिके काले यथा 'एयर कण्डीशन' विधानं क्रियते ।

**(६) सुस्पष्टा**—प्रकाशस्य पर्याप्ता व्यवस्थाऽऽवश्यकी ।

**(७) मनसः प्रिया**—मनोऽनुकूला, नातिह्रस्वा, नातिदीर्घा, रुचिकरा, सुसज्जितसम्भारा, तरु-विटप-लतागुल्मादिचित्राङ्किता मनःप्रसादकारिणी भवेत् ।

**(८) अशस्तशब्दरहिता**—अप्रशस्ताश्चावाच्यवादास्तीव्रा भयङ्करा उत्क्रुष्ट-कोलाहल-रोदन-विलाप-प्रलापादयो यत्र न श्रुतिगह्वरता भवेयुः, तादृशी कुटी जनैरनाकीर्णे प्रदेशे निर्मेया ।

---

१. नृपवैद्यद्विजातीनां साधूनां पुण्यकर्मणाम् ।
निवासे निर्भये शस्ते प्राप्योपकरणे पुरे ॥
दिशि पूर्वोत्तरस्यां च सुभूमौ कारयेत् कुटीम् ।
विस्तारोत्सेधसम्पन्नां त्रिगर्भां सूक्ष्मलोचनाम् ॥
घनभित्तिमृतुसुखां सुस्पष्टां मनसः प्रियाम् ।
शब्दादीनामशस्तानामगम्यां स्त्रीविवर्जिताम् ॥
इष्टोपकरणोपेतां सज्जवैद्यौषधद्विजाम् । इति । ( चरक० चि० १।१।१७-२० )

**(९) स्त्रीविवर्जिता**—पूर्णरूपेण ब्रह्मचर्यव्रतपालनार्थं सर्वासामेव स्त्रीजातीनां कुटी-प्रवेशो निषिद्धः। स्त्रीभिर्भाष्य-हास्यादिकं परिहार्यम्। न हि तत्र स्त्रीभृत्य-मित्राणि कस्मिन्नपि व्यापारे सन्नियोज्यानि, एवंविधा निःस्त्रीका कुटी स्यात्।

**(१०) इष्टोपकरणोपेता**—सर्वाणि च दैनन्दिनोपभोगयोग्यानि विहाराहारोपयोगीनि वस्तूनि सन्निहितानि स्युः। भेषजाभिमतानि चात्ययिकावस्थाप्रयोज्यानि द्रव्याणि, ओषधयश्च समुपस्थितानि भवेयुः। सत्यावश्यके कस्यामपि व्यापत्तौ व्यापदः परिसङ्ख्याय झटिति निराकरणं कर्तुं सौविध्यं भवेत्। अन्तर्भागे च वर्चःस्थान-स्नानागारादीनां योग्यतमा व्यवस्था स्यात्।

**(११) सज्जवैद्यौषधद्विजा**—कुटीपार्श्वप्रदेश एव प्राणाचार्यवैद्यस्य निवासस्थानं स्यात्। वेदमन्त्रस्तुतिशीलाः, मङ्गलाचाराः, प्रियंवदाः, श्रुतिसुखदगीतेतिहासपुराणाख्यायिकादि-श्रावणपटवः, बुद्धिविद्याभिजनवृद्धाः, द्विजा आसन्नावसथाः, मङ्गलाशीभिराश्वासयेयुः। बहुकल्पाः, बहुगुणाः, रसवीर्यादिसम्पन्नाः, सर्वकर्मस्ववदाता ओषधयश्च प्रयोगाभिमत-रूपेणावस्थिता भवेयुः।

एवञ्च सर्वतोभावेन पुनीते प्रदेशे मनोहारिणी कुटी निर्मेया, यस्याश्च वाह्यद्वारं पूर्वाभिमुखम्, द्वितीयभित्तिद्वारं पश्चिमाभिमुखमाभ्यन्तरभित्तिद्वारञ्चोत्तराभिमुखं भवेत्। सर्वाणि च द्वाराणि ६ × २½ फुटपरिमितानि भवेयुः। सर्वस्मिंश्च भागे भित्तेरुत्सेधोऽन्यूनदश-फुटमितो भवेत्।

परिच्छदवतां शौचाचारानुरागप्रददाक्षिण्योपपन्नानाम्, दानेज्याहोमनियमादिषु वैद्यवचसि च बद्धादराणामास्तिकानाम्, सात्म्यासात्म्यविदाम्, सत्यव्रतानाम्, शीलवताम्, देवतानुस्मृतियुतानाम् युक्तस्वप्नजागरणानाम्, धैर्यस्मृतिवुद्धिशालिनामात्मवताम्, कृतक्षणानाम्, श्रद्दधतामेव सिद्धयति कुटीप्रावेशिकं रसायनम्।[1]

**रसायनाचार्यनिर्देशेन व्यवहर्तव्यम्**

शीलवान् मतिमान् शास्त्रपारगो वैद्यश्च रसायनगुणौंषभिरादरणीयो भवति। प्रवरसत्त्वे जने च रसायनप्रयोगस्य साफल्यं तदैवावाप्तुं शक्यते, यदा सर्वात्मना सश्रद्धमाचार्यस्य निर्देशनमनुपालितं स्यात्। ये च सन्ति शुश्रूषवस्त एव भाजनानि भवन्ति रसायनोपदेशानाम्।

जितेन्द्रियो विनयी साधक उत्तरायणे शुक्ले पक्षे शुभे च मुहूर्तकरणनक्षत्रे कृतक्षौरः गोब्राह्मणदेवताः सम्पूज्य मङ्गलाशीरवाप्य दृढमनोवलो धृतिस्मृतिवलमादधानः समाहितेन मनसा त्रिगर्भां कुटीं प्रविशेत्। रसायनगुरोदेशानुसरणमेकमेव श्रेयोमार्गम्। रसायनकल्पे गुरौ रसायनसेवनविधौ चोत्कृष्टौ श्रद्धाविश्वासौ समीहितसिद्धये प्रभवतः।

---

१. चरक० चि० १।१।२२-२४। अष्टाङ्गहृदयम्—उत्तर० ३९।९-१०। चरक० चि० १।४।२७-२८।

आचार्यश्च दाक्ष्येण रसायनोद्यतस्य साधकस्य देहप्रकृति-मानसप्रकृति-बल-शरीर-देश-काल-सात्म्यादिकं सुविचार्य ब्राह्ममुहूर्तादारभ्य रात्रिशयनकालीनचर्याया आपरिसमाप्ति कालं विभज्य नित्यकर्मणां शौच-दन्तधावन-स्नान-सन्ध्योपासन-जप-होम-शास्त्रश्रवण-आहार-विहार-भेषजसेवन-क्षीरपानादिकं समस्तमेव कृत्यनिवहं यथायथमुपदिशेत् । साधकश्च सावधानतया यथानिर्देशमनुचरेत् ।

एवञ्च कुटीप्रावेशिकरसायनं सेवितमायुःप्रकर्षाय प्रभावर्णस्वरसमृद्धये शरीरबुद्धीन्द्रिय-बलोदयाय प्रभवति । मेधा, स्मृतिरुत्साहः, सहिष्णुता, श्रमक्षमत्वञ्चोपजायते । देहे संहनन-सौष्ठवम्, कान्तिः, सौन्दर्यञ्चाभिवर्द्धते । समस्तानीन्द्रियाणि पटुतमानि सञ्जायन्ते । न च श्रमं क्लमं वाऽनुभवन्ति सत्यपि विषयाभिग्रहणातियोगे । वाक् चार्थमनुवर्तते, अर्थात् यदेव वदति तत्पूरणाय सुदृढं प्रयतते । कार्यरूपेण च स्ववाचः सत्यतामभिव्यनक्ति । वपुश्च किमपि मानुषातिगमोजःप्रसरमावहति । घनौघस्तनितानुकारी च स्वरस्तस्य यौवनसमृद्धिमाख्याति । तथाहि रसायनं कुटीप्रवेशविधिना निषेवितं समग्रमेव रसायनफलं साधयितुमभीष्टे । तत्र हि साधकस्य, आचार्यस्य परिचारकस्य, रसायनौषधयोगस्य च गुणसमुदायः स्वाभीष्टफलावाप्ति-साधको भवति[1] ।

**२—वातातपिकरसायनम्—**

यद्रसायनसेवनं बहिर्गृहादनावृते प्रदेशे यत्र क्वापि सेवितुं शक्यते, तद् वातस्य आतपस्य ( घर्मस्य ) सेवासहकृतेनापि ( वातातपसेवयाऽपि यत् क्रियते ) विधीयते । एतदेव **'वातातपिकम्'** इत्युच्यते ।

कुटीप्रावेशिकविधेर्महार्घ्यत्वात्, नियमैर्निगडितत्वात्, बहुपरिच्छदसाध्यत्वात्, राज-मात्रसेव्यत्वात्, कालनियमाच्च न सामान्यजनसुलभं कुटीप्रावेशिकं रसायनम् । वातातपिके च रसायने वायोर्घर्मस्य च न प्रतिषेधो विधीयते, अतश्च सामान्यजनैरपि कर्तुं [2]शक्यते । स्वस्वव्यवसायव्यापृतमानसैरपि साधयितुं शक्यमेतद् रसायनम् ।

---

१. प्राणकामाः पुरा जीर्णाश्च्यवनाद्या महर्षयः ।
रसायनैः शिवैरेभिर्बभूवुरमितायुषः ॥
ब्राह्मं तपो ब्रह्मचर्यमध्यात्मज्ञानमेव च ।
दीर्घायुषो यथाकामं सम्भृत्य त्रिदिवं गताः ॥
तस्मादायुःप्रकर्षार्थं प्राणकामैः सुखार्थिभिः ।
रसायनविधिः सेव्यो विधिवत् सुसमाहितैः ॥ ( चरक० चि० १।२।२०-२२ )

२. समर्थानामरोगाणां धीमतां नियतात्मनाम् ।
कुटीप्रवेशः क्षणिनां परिच्छदवतां हितः ॥
अतोऽन्यथा तु ये तेषां सौर्यमारुतिको विधिः ॥ इति । ( चरक० चि० १।४।२७-२८ )

अस्य चापरं नाम **'सूर्यमारुतिकम्'** इति । सूर्यस्य मरुतश्च समक्षं सेव्यत्वात् । अत्र च नैव ऐकान्तिकं जीवनमावश्यकम् । न च पञ्चकर्मणां बाध्यता विद्यते । सामान्यत एव मृदुविरेचनौषधप्रयोगेण कोष्ठसोधनं विधाय भेषजप्रयोग आरभ्यते । यद्यपि न हि कठोरनियमपालनानुशासनमावश्यकम्, तथापि ब्रह्मचर्यपालनमाचारपालनम्, विहाराहारपालनं तु नितरामपेक्ष्यते । व्यस्तकर्मभिरपि सेव्यत्वादेतत्सर्वसुलभम् । अतिश्रमोऽब्रह्मचर्यमाचारहानिरपथ्यसेवनं साहसं च कर्म वातातपिकरसायनफलं क्षिणोति । यथाशक्यं पथ्यपालने प्रयतितव्यमेव ।

पूर्वोक्तानि रसायनफलानि च क्रियताप्यंशेन भवन्ति फलवन्ति पथ्यभोक्तुराचारपरायणस्य प्रयतात्मनः रसायनसेविनः । स्वास्थ्यं समृद्धं भवति, शरीरे बलाभिवृद्धिरुत्साहः सर्वकर्मसु क्रियासामर्थ्यमायुःप्रकर्ष इन्द्रियबलं धृतिस्मृतिबलञ्चोपलभ्यते ।

नात्र कोऽपि प्रतिबन्धः कस्यापि नियमविशेषस्य । यानि च रसायनानि कुटीप्रावेशिकविधिना भवन्ति सेव्यानि तान्येव वातातपिकेऽपि सेव्यत्वेन निर्दिष्टानि । वैशिष्ट्यं तु फलोदये संलक्ष्यते । तानि हि रसायनानि कुटीप्रवेशविधिना सन्नियोजितानि विशेषोत्कर्षाधायकानि, तान्येव च वातातपिकविधिना हीनफलदानि जायन्ते ।

अतश्च येषां सर्वे परिच्छदाः सुलभाः, ये च कृतक्षणाः संयमिनस्तेषां कुटीप्रवेशविधिः प्रशस्यते । अतोऽन्यथाभूतानां तु वातातपिकरसायनसेवनमेव कर्तव्यम् ।

**३—द्रोणीप्रावेशिकं रसायनम्**[1]

इदं रसायनमस्मिन् युगे न हि सुकरम् । याश्चौषधयोऽत्र सेव्यत्वेन निर्दिष्टास्तासां नहि यथार्थतः परिचयः समुपलभ्यतेऽधुना । विधिश्चास्य रसायनस्य नैव यथायथं पालयितुं शक्यते, तथापि प्रसङ्गादत्र तदुपन्यासः क्रियते ।

आर्द्रपलाशकाष्ठैरेका मनुष्यशयनयोग्या सपिधाना द्रोणी निर्मेया, सा च घृतेन तैलेन सुष्ठुभाविता कृता स्यात् । ब्रह्मसुवर्चलादिभिर्नवभिरोषधिरसैर्यथालाभं सौहित्यं गत्वा ( यथेष्टं स्वरसं पीत्वा ) तस्यां द्रोण्यां दिग्वासाः शयीत, पिधानेन च तां द्रोणीमाच्छादयेत् । तत्र च रसायनार्थी मूर्च्छामापद्यते । षण्मासानन्तरञ्च प्रबुध्यते, तस्य चाङ्गानि सबलानि जायन्ते । तस्य नवं देदीप्यमानं शरीरं वर्णस्वराकृतिभिर्देवाननुकरोति । तस्य च ज्ञानं विवृद्धं भवति । दिव्यं नेत्रं श्रोत्रमिन्द्रियञ्च सम्पद्यते । निरुपद्रवञ्च दीर्घमायुरवाप्यते । एवञ्च सर्वमेवास्यालौकिकमितिवृत्तमभिव्यज्यते ।

सत्यपि लोकातिशायिनि परिणामेऽस्य रसायनस्य प्रयोगसौष्ठवमसुलभमाधुनिके काले भेषजानामलाभाद् धैर्यस्मृतिबलादेश्चासद्भावादिति ।

**४—द्रव्यभूतं रसायनम्**

द्रव्याणि पुनरोषधयः । रसायनप्रयोगार्थमेकैकं द्रव्यमप्युपयोज्यमानं फलप्रदं भवति । तथा च प्रमुखा ओषधयः कतिचन निर्दिश्यन्ते—हरीतकी, आमलकी, पिप्पली, दशमूलम्,

---

१. चरक० चि० १।४।७ ।

अष्टवर्गः, भल्लातकम्, पुनर्नवा, बला, अतिबला, नागबला, विदारीकन्दः, ब्राह्मी, पञ्चतृण-मूलम्, एरण्डः, शतावरी, मण्डूकपर्णी, शङ्खपुष्पी, मुस्तकम्, विडङ्गः, त्रिफला, मधुकम्, हरिद्रा, वचा, मुद्गपर्णी, माषपर्णी, शृङ्गी, द्राक्षा, जीवन्ती, पुष्करमूलम्, शटी, वृषमूलम्, रसोनः, चित्रकः, स्वर्णक्षीरी, शाल्मली, देवदाली, ज्योतिष्मती चेति । अन्या अपि विविधा वीरुधा भवन्ति प्रयोज्यानि ।

एषाञ्चौषधीनां सङ्ग्रहणं यथाशास्त्रं निर्दिष्टेषु कालेषु प्रशस्तेषु तिथिनक्षत्रकरणमुहूर्तेषु पूर्वरात्रमभिमन्त्र्य यथाविधि कर्तव्यम्, अन्यथा तु रसायनफलप्राप्तिः क्षीणा भवेत् ।

बहवश्च रसौषधियोगा रसकल्पे प्रयुज्यन्ते—सुवर्णम्, रजतम्, ताम्रम्, लौहः, अभ्रकम्, पारदम्, हिङ्गुलम्, मकरध्वजः, स्वर्णवसन्तमालती, वसन्ततिलकः, वसन्तकुसुमाकरः, रसायनयोगराजगुग्गुलुप्रभृतयः ।

**५—अद्रव्यभूतं रसायनम्**

एतच्च आचाररसायनापरपर्यायम्[1] । तथा च—काले सत्य–हित–मित–मधुरभाषी, सद्वृत्तनिरतोऽक्रोधनोऽध्यात्मप्रवणः, पेशलवाक्, दीनानामभ्युपपत्ता, सर्वभूतेषु मैत्रीपरायणः, दम–यम–नियम–आसन-प्राणायाम-शौच-सन्तोष-तप-स्वाध्यायरतः, प्रशमगुणदर्शी, हेतावीर्षुः फले नेर्षुः, रागद्वेषहेतूनां हन्ता, क्षमाशीलः, वश्यात्मा, धीरः, नात्युच्छ्रितसत्त्वः, ब्रह्मचर्य–ज्ञान-दानरतिरनलसः, सर्वभूतहितकर्ता, कल्याणाभिनिवेशी[2], दैन्यरहितः, परगुणलुब्धः, हिंसाऽस्तेयाऽन्यथाकाम-पैशुन्य–परुषाऽनृत–सम्भिन्नालाप–व्यापादाऽभिध्या–दृग्विपर्याख्यदशविध-पापकर्मपरित्यागी, अवृत्ति-व्याधिशोकार्तानुवर्तनशीलः, सम्पत्सु विपत्सु च समानमनस्कोऽनहंवादी हीनाऽनार्यसेवाविरतः, कायिक-वाचिक-मानसिकमिथ्यायोगविरहितः, परार्थेषु स्वार्थबुद्धिर्गुरु-वृद्धसिद्धजनेषु दत्तादरश्च जनोऽनारतं रसायनपरो भवति, निखिलाँश्च रसायनगुणान् समश्नुते[3] ।

---

१. सत्यवादिनमक्रोधं निवृत्तं मद्यमैथुनात् ।
अहिंसकमनायासं प्रशान्तं प्रियवादिनम् ॥
जपशौचपरं धीरं दाननित्यं तपस्विनम् ।
देवगोब्राह्मणाचार्यगुरुवृद्धार्चने रतम् ॥
आनृशंस्यपरं धीरं नित्यं करुणवेदिनम् ।
समजागरणस्वप्नं नित्यं क्षीरघृताशिनम् ॥
देशकालप्रमाणज्ञं युक्तिज्ञमनहङ्कृतम् ।
शस्ताचारमसङ्कीर्णमध्यात्मप्रवणेन्द्रियम् ॥
उपासितारं वृद्धानामास्तिकानां जितात्मनाम् ।
धर्मशास्त्रपरं विद्यान्नरं नित्यरसायनम् ॥
गुणैरेतैः समुदितैः प्रयुङ्क्ते यो रसायनम् ।
रसायनगुणान् सर्वान् यथोक्तान् स समश्नुते ॥ ( चरक० चि० १।४।३०–३५ )

२. चरक० सूत्र० अ० ८ ।

३. अष्टाङ्गहृ० सूत्र० अ० २ तथा उत्तर० अ० ३९ ।

चिन्तयता चात्महितमवेक्ष्यावेक्ष्य कर्मणां सम्पादनेन न चाक्रम्यते शारीरैर्मानसैर्वा विकारैः। एतादृशश्च संयमी जनो नैवातिसमयं ( बहुभिर्मिलित्वा कृतं नियमम् ) जहाति, न च लोकविरुद्धमाचरति, न च बालैरतिवृद्धैर्लुब्धैर्मूर्खैः क्लिष्टैर्वा जनैः सख्यं कुरुते। नैव च मद्यासक्तिं द्यूतं विश्वासहानिं वा विदधाति। एभिश्च गुणगणैरलङ्कृत्वान्नाभिभूयते रोगैः। यथा च–

**मतिर्वचः कर्मसुखानुबन्धं सत्त्वं विधेयं विशदा च बुद्धिः।**
**ज्ञानं तपस्तत्परता च योगे यस्यास्ति तं नानुतपन्ति रोगाः॥** (चरक० शा० १)

**६—काम्यरसायनम्**

कामः = इच्छाविशेषः, तत्पूर्त्यर्थं रसायनं काम्यरसायनमुच्यते। तथा च—आयुष्यप्राणकामीय-मेधायुष्कामीयादिरसायनानि-च्यवनप्राशः, ब्राह्मरसायनम्, आमलकरसायनम्, आमलकावलेहः, शङ्खपुष्पीरसायनम्, पिप्पलीरसायनप्रभृतीनि।

**७ – नैमित्तिकरसायनम्**

यद्रसायनं केनापि निमित्तेन सेव्यते, तन्नैमित्तिकमित्युच्यते। यथा च—कुष्ठरोगे खदिररसायनम्, ऐन्द्ररसायनम्, असनरसायनम्, मधुकरसायनम्, अमृतारसायनम्, धात्रीरसायनम्, त्रिफलारसायनञ्च। उन्मादे च मण्डूकपर्णी, मेध्यरसायनम्, यष्टीमधु, मेध्यरसायनम्, शङ्खपुष्पी, ब्राह्मीघृतरसायनम्, चन्दनरसायनादिकञ्च।

**८ – आजस्रिकरसायनम्**

यद् रसायनं स्वाभाविकरूपेण प्रत्यहं सेव्यते, तदाजस्रिकमुच्यते। तद्यथा—प्रतिदिनं सेव्यमानं क्षीरं सर्पिरन्नं फलादिकम्। तथा हि—

**शीतोदकं पयः क्षौद्रं सर्पिरित्येकशो द्विशः।**
**त्रिशः समस्तमथवा प्राक् पीतं स्थापयेद्वयः॥** (सुश्रुत० चि०२७।६)
**सतताध्ययनं वादः परतन्त्रावलोकनम्।**
**तद्विद्यसेवा विद्या च बुद्धिमेधाकरो गुणः॥**
**आयुष्यं भोजनं जीर्णे वेगानां चाविधारणम्।**
**ब्रह्मचर्यमहिंसा च साहसानाञ्च वर्जनम्॥**
( सुश्रुत० चि० २८।२७–२८ )

एवमाद्यपरे च नित्यप्रयोजनीया नियमा भेषजाहारविहाराश्चैतत्कोटौ परिगण्यन्ते। अथ च भिन्नभिन्नप्रयोजनवत्तावधारणेन कतिचनापरे रसायनाः, यथा—

९—सर्वोपघातशमनीयं रसायनम्। ( सुश्रुत० चि० २७ )

१०—मेधायुष्कामीयं रसायनम्। ( सुश्रुत० चि० २८ )

११—स्वभावव्याधिप्रतिषेधनीयं रसायनम्। ( सुश्रुत० चि० २९ )

१२—निवृत्तसन्तापीयं रसायनम् ( सुश्रुत० चि० ३० )

१३—प्राणकामीयं रसायनम्। ( चरक० चि० १।२ )

१४—तारुण्यकरं रसायनम्। च्यवनप्राशः, ब्राह्मरसायनप्रभृतयः, येषां सेवनेन दीर्घकालं तरुणं वयस्तिष्ठति।

१५—रोगहरं रसायनम्—हरीतकी रसायनमामलकरसायनं भल्लातकरसायनं शिलाजतुरसायनादिकम् ।

**१६—संशोधनम्**

रसायनप्रयोगस्य संशोधनेन महान् घनिष्ठः सम्बन्धो वर्तते । संशोधनादृते नहि रसायनं फलवद् भवति, मलिने वस्त्रेऽपि तरङ्गमिव मलिने शरीरे रसायनं न फलति । संशोधनकर्मसु वमनं विरेचनं निरूहोऽनुवासनं नस्यमिति पञ्चविधं कर्म परिगण्यते । पञ्चकर्माङ्गत्वेन च स्नेहनं स्वेदनञ्चेति प्रथममापततः । यथा च—

**तान्युपस्थितदोषाणां स्नेहस्वेदोपपादनैः ।**
**पञ्चकर्माणि कुर्वीत मात्राकालौ विचारयन् ॥ (चरक० सूत्र० अ० २)**

**[क] स्नेहनम्**—पुरुषोऽयं स्नेहसारः, प्राणाश्च स्नेहभूयिष्ठाः स्नेहसाध्याश्च भवन्ति । बहवश्च रोगाः केवलेन स्नेहेनैव साध्या भवन्ति । स्नेहाश्च गुरु-शीत-सर-स्निग्ध-मन्द-सूक्ष्म-मृदु-द्रवगुणबहुला भवन्ति । शरीरबृंहणे व्याधिक्षमत्वे च स्नेहनं मुख्यम् ।

जङ्गमस्थावरभेदेन द्विधा योनिः स्नेहो भवति । तत्र जङ्गमेषु घृतम्, वसा, मज्जा, दधि, क्षीरादिकं प्रमुखम् ।

**[ख] घृतम्**—सर्वेषु च स्नेहेषु घृतमुत्तमकोटौ गण्यते । यतो हि घृतं पित्तानिलहरं संस्काराच्च कफघ्नमपि भवति । घृतञ्च संस्कारानुवर्तनं करोति अर्थात्, संस्कारकद्रव्याणां गुणान् गृह्णाति स्वस्य च गुणाननुवर्तते, एतदेवास्य वैशिष्ट्यं नान्यः, स्नेहस्तथा संस्कारानुवर्तनं करोति ।

स्थावरतैलेषु च तिलः, प्रियात्वः, विभीतकः, सर्षपः एरण्डः, अतसी, करञ्जः, स्वर्णक्षीरीबीजम्, देवदारुः, अगुरुः, चन्दनप्रभृतीनि नानाविधानि तैलयोनिद्रव्याणि सन्ति । तैलस्य बाह्याभ्यङ्गरूपेण प्रयोगसौष्ठवं विशेषेणाङ्गीकृतमस्ति । तथा च—

**अन्नादष्टगुणं पिष्टं पिष्टादष्टगुणं पयः ।**
**पयसोऽष्टगुणं मांसं मांसादष्टगुणं घृतम् ॥**
**घृतादष्टगुणं तैलं मर्दनान्न तु भक्षणात् ।**

स्नेहाश्च भक्ष्यैरन्नैः सह, अभ्यङ्गेन, नस्येन, वस्तिविधानेन, गण्डूषकरणेन, शिरःश्रवणपादेषु तर्पणेन, गात्रे सर्वेष्वङ्गेषु वा यथावश्यकमुपयुज्यन्ते । ये च नैव स्नेहसात्म्या भवन्ति तेभ्यश्च पेया-विलोपी-कृशरौदन-सूप-व्यञ्जनादिषु विविधाभिः प्रविचारणाभिर्दीयन्ते स्नेहाः । सामान्यतश्च बाह्यमभ्यङ्गेनान्तश्चानुवासनवस्तिद्वारा स्नेह उपयुज्यते ।

स्नेहपानेन च धातूनां सन्तर्पणं भवति । यथा च काष्ठानि हि स्नेहदानात् सुदृढानि मृदूनि च जायन्ते, तथैव शरीरे स्नेहप्रयोगाद्वायुविकारः शाम्यति, शरीरं मृदु जायते मलसङ्गश्च नश्यति । जठराग्निर्वर्धते, कोष्ठशुद्धिर्जायते, धातूनां बृंहणं बल-वर्णवर्धनञ्च भवति । इन्द्रियाणि च दृढी भवन्ति, जरा नाक्रामत्यकाले, शतायुश्च भवति पुरुषः[1] ।

---

१. दीप्तान्तराग्निः परिशुद्धकोष्ठः प्रत्यग्रधातुर्बलवर्णयुक्तः ।
दृढेन्द्रियो मन्दजरः शतायुः स्नेहोपसेवी पुरुषो भवेत्तु ॥ ( सुश्रुत० चि० ३१ )

शरीरान्तःस्रोतःसु संलग्नमलानां स्नेहनेन मलं सुनिर्हरं भवति। तत्र सर्वोत्तमत्वाद् घृतमेवोपयोज्यतमं भवति। पित्तप्रकोपे शुद्धघृतम्, वाते सलवणं घृतम्, कफे च त्रिकटुचूर्णं (शुण्ठी-मरिच-पिप्पली) सहितं घृतं प्रयोज्यम्। संशोधनार्थञ्च प्रातरेव घृतं सेव्यम्। रोगिणश्च दोष-देश-काल-प्रकृत्यादिकं संवीक्ष्य ८ तोलकम्, ६ तोलकम्, ४ तोलकं वा एकदा देयं भवति। अनुपाने चोष्णोदकं प्रदेयम्।

स्नेहनार्थं घृतप्रयोगं क्रूरकोष्ठेषु पुरुषेषु सप्तदिनानि, मध्यमकोष्ठेषु पञ्चदिनानि मृदुकोष्ठेषु च त्रिदिनानि कुर्यात्।

**[ग] स्वेदनम्**—निर्वाते च स्थाने भोजने च जीर्णे स्वेदनं विधेयम्। कस्याप्यङ्ग-विशेषस्य समस्तस्य वा देहस्य वह्निसाहचर्येणाथवाऽनग्निरूपेण स्वेदानयनं स्वेद इत्युच्यते। स्वेदनेन च सूक्ष्मस्रोतःसु लीनाविकारा द्रवरूपेण वहिरायान्ति। तत्र वहिर्मार्गगतदोषाणां निष्क्रमणार्थं स्वेदनं श्रेष्ठं कर्म भवति। कोष्ठगतानां निर्हरणार्थं तु वमनं रेचनं नस्यं निरूहोऽनुवासनञ्चेति पञ्च कर्माणि। स्वेदनकर्म च विविधं वालुकास्वेद-उपनाह-प्रस्तरस्वेद-वाष्पस्वेद-नाडीस्वेद-कुम्भीस्वेद-भूस्वेदादिकम्। यदा च वहिस्त्वचि स्वेदोद्गमो भवति, तदा स्वच्छ-वस्त्रेण स्वेदापसारणं कर्तव्यम्। वायोश्च स्पर्शो निषिद्धस्तत्काले।

संशोधनं (पञ्चकर्म) स्वतन्त्ररूपेण वर्णनीयतामर्हति। अतश्चात्र संक्षेपकथनमकिञ्चित्करं स्यादिति कृत्वा विरम्यते तद् वर्णनात्। एवञ्च वमन-विरेचन-निरूह-अनुवासन-नस्यानां विषये जिज्ञासुभिश्चरकसंहितासुश्रुतसंहिते द्रष्टव्ये स्तः। संशोधनानि च शरीरशोधनमुखेन रसायनफल-प्रदानि भवन्ति, यथा—हरीतकीरसायनादीनि।

**संशमनम्**

यदौषधं दोषशमनद्वारेण रसायनकर्म करोति, तद् संशमनरसायनमुच्यते। यथा—नागबला रसायनादिकम्। तिलरसायनम्, पलाशबीजरसायनम्, पुनर्नवारसायनम्, वृद्धदारक-रसायनञ्च संशमनरसायनेषु श्रेष्ठतमम्। आमलकरसायनम्, च्यवनप्राशावलेहप्रभृतयश्च संशमनवर्गीया एव।

एवञ्च सुश्रुताचार्यकृता रसायनपरिभाषा नाति संक्षेपविस्तारेण वर्णिता भवति। यथा [1]चोक्तम्—**'रसायनतन्त्रं नाम वयःस्थापनमायुर्मेधाबलकरं रोगहरणसमर्थञ्च'**।

एतद्रसायनरहस्यफलश्रुतिः—

**इदमखिलमधीत्य सम्यगर्थान्**
**विमृशति योऽविमनाः प्रयोगनित्यः।**
**स मनुजसुखजीवितप्रदाता**
**भवति धृतिस्मृतिबुद्धिधर्मवृद्धः॥**

---

१. सुश्रुतसू० १।



# प्राचीनभारतेऽद्यतनगणितम्

डॉ० स्वामी आत्मानन्दपरमहंसः
गणितविभागः, काशीहिन्दूविश्वविद्यालये ।

अङ्कानां लेखनपद्धतेश्च प्रचारोऽतीव प्राचीनकालेऽस्मिन् देश आसीदिति ऋग्वेदस्थेन **'सहस्रं[1] मे ददतोऽष्टकर्ण्यः'** इति मन्त्रेण प्रतीयते। वैदेशिकैरपीदमुन्मुक्तहृदयेनाङ्गीक्रियत एव यद् अङ्कविद्या भारतवर्षादेवान्यैर्गृहीता। डैम्पियरमहोदयस्यायमुद्गारः 'भारतीयाङ्कगणिते[2] वरीवर्ति वैशिष्ट्यम्। तथाहि—ई० पू० तृतीयशताब्द्यामेव यादृशसङ्केतस्य भारतीयाङ्क-गणित आसीत् प्रचुरः प्रयोगस्तमेवाधारीकृत्याधुनातनप्रयुज्यमानानामङ्कानामाविष्कारः' इति।

न केवलमेतावदेव, अपि तु गणितस्य पृथक् शास्त्रत्वम्, तदध्ययनादिकं च सम्यग्रूपेण प्रचेलतुः। छान्दोग्योपनिषदि[3] नारदसनत्कुमारसंवादे नारदस्याधीतगणितविषयत्वश्रवणात् सनत्कुमारस्य **किम् भवद्भिरधीतम्'** इति प्रश्ने नारदेन **'स होवाचर्ग्वेदं भगवोऽध्येमि... राशिं ...नक्षत्रविद्याम्...'** इत्युक्तत्वाद् राशिविद्यापदस्याङ्कगणितपरकत्वस्य नक्षत्रविद्यापदस्य च ज्योतिषपरकत्वस्य प्रसिद्धतरत्वात्। एतेनेदमपि वक्तुं शक्यते यत्प्राचीनमहर्षीणामनुसारेण गणिताध्ययनस्याध्यात्मिकोन्नतौ न बाधकत्वम्, अपि तु मुण्डकोपनिषदनुसारेण[4] (गणिताद्य)-पराविद्यानां साधकत्वमेव। अतश्च न केवलं गणनाव्यवहारहेतुत्वमात्रमङ्गीकृतं मनीषिभि-र्गणितस्य, अपि तु—**'[5]यथाभिमतध्यानाद्वा'** इतीमं **पातञ्जलं योगसूत्रं** व्याचक्षाणैः कैश्चिदाचार्यै-र्गणितचिन्तनस्य चित्तैकाग्र्यसाधनायामतीव सहायकत्वं स्वीकृतम्। अत एव **[6]जैनमुनीनामप्य-**नुयोगचतुष्टयेऽन्यतमो मुख्यश्च गणितानुयोगः। **[7]बौद्धैरपि** गणितस्य श्रेष्ठतमकलात्मकत्व-

---

१. ऋग्वेदे—१०।६२।७॥

२. "Indian arithmetic is remarkabl, in that there is evidence to show that as early as the third century B. C. a system of notation was used from which was developed the scheme of numsals we employ to-dey."

—'History of Science' नामकग्रन्थे केम्ब्रिजविश्वविद्यालयतः १९६६ तमे ख्रिस्ताब्दे प्रकाशिते ९ पृष्ठे।

३. छान्दोग्योपनिषद्—७।१।२–४॥

४. मुण्डकोपनिषद्—१।१॥, ३।५॥

५. योगसूत्रम्—१।३९।

६. भगवतीसूत्रम् ९० तमम्, उत्तराध्ययनसूत्रम्—२५।७,८,३८।

७. विनयपिटके ओल्डनवर्गद्वारा सम्पादिते चतुर्थखण्डे पृ० ७, मज्झिमनिकाये प्रथमखण्डे पृ० ८५, चुल्लनिद्देशे पृ० १९९।

ङ्गीमकृतम् । इत्थञ्च स्पष्टमेव यदधुनातनवैज्ञानिकानां मतानुसारेण या सर्वविधवैज्ञानिकाविष्कारणां साक्षात्परम्परया वा जनकत्वेन रूपेण गणितस्य [1]मान्यता साऽतीव प्राचीना । यथोक्तं पूर्वाचार्यैः—

[2]यथा शिखा मयूराणां नागानां मणयो यथा ।
तद्वद्वेदाङ्गशास्त्राणां गणितं मूर्द्धनि स्थितम् ॥

इति स्पष्टमेव व्यक्तत्वात् ।

न केवलमङ्कगणितज्योतिषयोरेव प्रवीणताऽऽसीद् ऋषीणाम्, अपि तु प्रसिद्धचरस्य [3]सापेक्षतासिद्धान्तस्य प्रयोगेऽपि पारङ्गतत्वं प्राप्यते तेषाम् । तथा हि वर्ण्यते श्रीमद्भागवते[4]--- सत्ययुगे न्यायप्रियो राजा रैवतः कुशस्थलीप्रदेशे वसन् शासयति स्मानर्तादिदेशान् । स स्वीयकन्यकायै वरं प्रष्टुं ब्रह्मलोकस्थं सर्वलोकपितामहं ब्रह्माणं तया सहोपजगाम, ददर्श च तत्र चतुराननं कस्मिंश्चिदुत्सवे संलग्नं परिवृतश्च गन्धर्वकिन्नराद्यैः स्तुवद्भिः । संलापायाप्राप्तावसरो रैवतः कतिपयक्षणं प्रतीक्ष्योत्सवान्ते ब्रह्माणं प्रणम्य वार्तां समारेभे ।

ब्रह्मणोक्तम्—भो राजन् ! वरत्वेन येषां नामानि श्रावितानि त्वया, न केवलं त एव कालकवलीकृताः, अपि तु [5]तद्गोत्रजानामपि वार्ता न श्रूयतेऽधुना । तवात्रागमनकाले सत्ययुगे अधुना च सप्तविंशतिचतुर्युगोत्तरकालावच्छिन्नस्त्रेतायुगस्तत्र पार्थिवे लोके । अतस्तव प्रत्यावर्तने चागमनकालमपेक्ष्याष्टाविंशतितमो द्वापर एव भविता । तत्र भगवतोंऽशावताराय बलिरामाय प्रयच्छतु स्वकीयां कन्यकामिति । अत्र स्पष्टमेव दरीदृश्यते यद् ब्रह्मलोकस्य कतिपयक्षणावच्छेदेनैव पार्थिवलोके चतुर्युगानां सप्तविंशतिर्युगद्वयश्च व्यतीतम् । चतुर्युगस्य परिमाणं तु ४३२०००० वर्षात्मकम्, यत्र त्रेतायुगः १२९६००० वर्षात्मकः, द्वापरश्च ८६४००० वर्षात्मक इत्यविस्मरणीयम् । एतेन स्पष्टं प्रतीयते यदृषयः सापेक्षतावादसिद्धान्तेन सम्यग् व्यवहरन्ति स्म ।

---

१. Mathemtics being the moth of oll scientific discoveries—
इत्युक्तं प्रयागस्थोच्चन्यायालयस्य न्यायाधीशेन । 'नार्दर्न इण्डिया पत्रिका' इति समाचारपत्रे २१ जुलाई १९७६ दिनाङ्के प्रकाशितम् ।

२. वेदाङ्गज्योतिषे श्लोकः ४ ।

३. Theory of relativity विषयोऽयं पाश्चात्यानां विदुषां मते आइन्स्टाइनमहोदयेनारब्धः १९०५ खिस्ताब्दे ।

४. नवमस्कन्धस्य तृतीयाध्याये श्लोकाः २७–३४ ।

५. अहो राजन् निरुद्धास्ते कालेन हृदि ये कृताः ।
तत्पुत्रपौत्रनप्तॄणां गोत्राणि च न शृण्महे ॥
कालोऽभियातस्त्रिणवचतुर्युगविकल्पितः ।
तद् गच्छ देवदेवांशो बलदेवो महाबलः ॥—श्रीमद्भागवतम् ९।३।३२–३३

रामायणे[१] काकभुशुण्डेर्भगवदुदरे पार्थिवघटिकाद्वयाभ्यन्तर एव शतकल्पात्ययघटनया [२]"सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः' इत्यादिगीतावचनेनापि च सापेक्षतावादसिद्धान्तेन ऋषीणां परिचयोऽतिरोहितः। एवमेव क्षेत्रमित्यादिविषयेऽप्यत्रत्यानां वैदुष्यं शुल्वसूत्रादिदर्शनेन प्रतीयते।

[३]नव्यगणितगतानामपि तत्त्वानां स्थितिः शास्त्रेषु परिलक्ष्यते। तथाहि—[४]गणितीय-न्यायगतविश्लेषणयुक्तीनामाविष्कारोऽत्रत्यैर्विद्वद्भिर्बहुपूर्वमेव कृतः। विंशतिशताब्दीप्रारम्भे 'रसेल'महोदयेनोद्भावितस्य [५]नापितासामञ्जस्यसदृशानामसामञ्जस्यानां गङ्गेशोपाध्यायेन चतुर्दशशताब्द्यामेव [६]प्रतिपादितचरत्वात्। केवलान्वयिग्रन्थमधिकृत्यैकः [७]शोधलेखः प्रस्तुतो बी० के० मतिलालमहोदयेन १९६७ तमे ख्रिस्ताब्देऽन्ताराष्ट्रियगणितसम्मेलने ऐम्स्टरडमप्रदेशे (उत्तरीहालैण्डस्थे) यस्य समालोचकः के० इनोयू (टोकियोप्रदेशस्थः) स्वीकरोति यत्—'उपर्युक्तेनातिरोहितं यद् वर्त्तमानत्वावर्त्तमानत्वविषयकविचारा भारतीयतर्कशास्त्रिभिस्साव-धानतया परीक्षिताः'[८] इति।

---

१. भ्रमत मोहि ब्रह्माण्ड अनेका।
बीते मनहुँ कल्प सत एका ॥८१।१॥
उभयघरी महँ मैं सब देखा ॥१८।८॥—तुलसीदासकृतरामायण उत्तरकाण्डे

२. श्रीमद्भगवद्गीता—८।१७॥

३. Modern Mathematics।

४. Mathematical logic।

५. एकस्मिन् ग्रामे वसत्येको नापितः। स तु—
(क) केवलं तेषामेव पुरुषाणां वपनं करोति ये स्वयमेव न कुर्वन्ति।
(ख) उपर्युक्तानां पुरुषाणां वपनमवश्यमेव करोति।
असामञ्जस्यमिदम्—'तेन नापितेन स्वकीयकेशानां वपनं कृतं न वा इति प्रश्नस्योपस्थितौ 'कृतम्' इति कथने 'क' इत्यस्य 'न कृतम्' इति कथने 'ख' इत्यस्य च खण्डनं भवतीति।
—अस्य मूलं र० न० लालप्रणीतस्य 'Mathematical Logic' ग्रन्थस्यान्तिमभागे 'Appendise 2' इत्यत्रोद्धृतं द्रष्टव्यम्। 'मोतीलाल बनारसीदास पटना' प्रकाशनम्।

६. "व्यावृत्तत्वस्याव्यावृत्तत्वे व्यावृत्तत्वमेव केवलान्वयि, व्यावृत्तत्वे यत एव व्यावृत्तं व्यावृत्तत्वं तदेव केवलान्वयि"—इति केवलान्वयिग्रन्थे पृ० १०५ मोतीलालबनारसीदासेन २०१२ वि० प्रकाशिते।

७. 'B. K. Matilal, "Gangesa on the propsty of Euspresence ( Kevalanvayin )" Logic, Methodology and Philosophy Scienoe III ( Proc. Third International Congress Amsterdam, 1967 ), pp. 531–542 North Holland, Amsterdam, 1968.

८. 'The notions of presence and absence in the treatment above were carefully reamined by Indian logicians'—Mathematical Reviews Vol. 40, N0 2 Aug. 1970.

नव्यगणितस्यानेकशाखानामाधारभूतेन [1]कुलकसिद्धान्तेनापि ( व्याप्तिवादरूपेण ) चिरपरिचितत्वं नैयायिकानाम् । तथा हीत्थं प्रतिपादयन्ति कुलकसिद्धान्तवादिन:—'[2]यदि 'क' इत्युपकुलकस्य व्यापकं 'ख' इत्युपकुलकं तर्हि 'ख' पूरकव्यापकत्वं 'कपूरके' इति । युक्तिरियं नैयायिकैर्बहुपूर्वमेव [3]प्रतिपादिता । प्रसिद्धमेवेदं न्यायशास्त्रे—**'यदि यत्र यत्र धूमस्तत्रतत्राग्निः तदा यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभाव:'** इति । एवञ्च वयं विश्वसिमो यत्—**'स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवा:'** इत्यत्र चरित्रपदं गणितविज्ञानादीनामप्युपलक्षकमिति[4] ।

---

१. Set Theory. एकोनविंशतिशताब्दचामस्य विकास: ।

२. ( If A and B are subsets of a universal set X and ) if A is a subset of B then the Complementary set of B is subset of the Complementary set of A.

३. व्यतिरेकमुखेन प्रवर्तमानस्यानुमानस्य स्पष्टरूपेणोल्लेखो नवमशताब्दचां वाचस्पतिमिश्रेण प्रणीतेषु टीकाग्रन्थेषु द्रष्टुं शक्यते । व्यतिरेकव्याप्तेर्बीजरूपेणोल्लेखस्तु न्यायसूत्रतद्भाष्यादावपि परिलक्ष्यते । द्रष्टव्यम्—**'तद्विपर्ययाद्वा विपरीतम्'** इति सूत्रम् । ( न्याय० सू० १।१।३७ ) **'साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त उदाहरणम्'** इति । तद्भाष्यञ्च ।

४. मनुस्मृति: २।२० ।



# तिथिस्वरूपविमर्शः

डॉ० रामचन्द्रपाण्डेयः, व्याख्याता
श्रीरणवीरकेन्द्रीयसंस्कृतविद्यापीठः, जम्मू ( कश्मीरम् )

सम्प्रति हि पञ्चाङ्गावयवभूतां तिथिमधिकृत्य महान् विवादः प्रचलति। तत्र 'दृक्-प्रत्ययकारिका कदम्बप्रोतीया एव तिथिर्ग्राह्या' इति केषाञ्चिन्मतम्। 'बाणवृद्धिरसक्षया ध्रुवप्रोतीया एव तिथिर्ग्राह्या' इत्यपरेषां मतम्।

अत्र ब्रूमः—इदानीन्तनेषु पञ्चाङ्गेषु 'सप्तवृद्धिदशक्षया' तिथिरेव व्यवह्रियते, न तु बाणवृद्धिरसक्षयेति। तत्रादाविदं विचारणीयं यत् कया रीत्या साधिता तिथिः शुद्धा दृक्प्रत्ययकारिका च भवेदिति।

सूर्याचन्द्रमसोः सकाशादेव तिथिसाधनं क्रियते।[1] तच्च सूर्याचन्द्रमसोरस्थिरत्वात् तिथिमानं न शाश्वतिकं भवितुमर्हति। अतो भवेन्नाम कदाचित् कस्मिन् काले बाणवृद्धिरसक्षयात्मिका तिथिः शुद्धा, इदानीं तु सा न व्यवहारयोग्या। इतिहासपृष्ठावलोकनेनेदं स्पष्टं यत् कालभेदात् तिथेरपि ह्रासवृद्ध्योः क्रमे परिवर्तनं भवितुमर्हति।

वैदिककाले तिथेः स्वरूपं सर्वथा भिन्नमासीत्। तदानीं चान्द्रमासस्य ३० भागात्मकः कालतिथिरासीत्। यथा—

$$\text{चान्द्रमासः } \frac{१}{३०} = \frac{\text{चान्द्रमासः}}{३०} = \frac{२९\cdot५३०५८८ \text{ दिनानि}}{३०}$$

$$= \cdot९८४३५३ \text{ दिनम्}$$ । अर्थादेकदिवसादल्पकालः।

यद्यपि वेदेषु तिथीनामुल्लेखो नास्ति, केवलं ब्राह्मणग्रन्थेष्वस्या उल्लेखो दृश्यते, यथा—

"चन्द्रमा वै पञ्चशः। एष हि पञ्चदश्यामपीक्षते। पञ्चदश्यामापूर्यते[2]"।

अनेन स्फुटं यत्तदानीमपि प्रतिपदातः पञ्चदशीं यावत्तिथेर्व्यवहार आसीत्। एवमेव ऐतरेयब्राह्मणेऽपि तिथेः परिभाषा प्रदत्ता विद्यते—

"यं पर्यस्तमियाद् अभ्युदियादिति सा तिथिः[3]।"

अर्थात् चन्द्रोदयस्यासन्नकालश्चन्द्रास्तस्यासन्नकालो वा।

प्रो० पी० सी० सेनगुप्तमहोदयेनास्य व्याख्या एवंरूपेण कृता—शुक्लपक्षे तिथेर्गणना चन्द्रास्तं यावत्, कृष्णपक्षे तु चन्द्रोदयात् चन्द्रास्तं यावत् कर्त्तव्या[4]।

---

१. भक्ताब्यर्कलवा यमकुभिर्याता तिथिः स्यात् फलम्। ( ग्र० ला० २·८ )
२. तै० ब्रा० १।५।१०।   ३. ऐ० ब्रा० ३२।१०।
४. द्र० पञ्चाङ्ग समिति की रिपोर्ट, पृ० ४३१।

इयमेव पद्धतिस्तिथिगणनायास्तदानीं प्रचलिता आसीत्। शनैः शनैः सिद्धान्त-ज्योतिषस्य विकासेन सह तिथिमानमपि परिवर्तितम्। ४०० ईसवीयारम्भात् तिथिगणनायाः परिष्कृतं स्वरूपं व्यवहारे समायातम्। तदाप्रभृत्यनुदिनं सिद्धान्तज्योतिषशास्त्रे संशोधनं संवर्धनञ्च प्रचलितम्। सम्प्रति गृहीततिथ्यानयनप्रक्रियायाः सैद्धान्तिकं विवेचनं प्रस्तूयते—

रविचन्द्रयोर्भगणान्तरतुल्याश्चान्द्रमासा भवन्ति, यथोक्तं भास्करेण—

"अन्तरं तरणिचन्द्रचक्रजं यत् स विधुमाससञ्चयः।"[1]

यथा एकस्मिन् रव्यब्दे रवेर्भगणसंख्या एकः ( १ ), चान्द्रभगणाश्च त्रयोदश ( १३ ), अनयोरन्तरेण ( १३–१ = १२ ) द्वादशमासाश्चैत्रादयो भवन्ति। एकस्मिन् चान्द्रमासे त्रिंशत्संख्याकास्तिथयो भवन्ति। अमान्तादमान्तं यावच्चान्द्रमासः। अमान्तो नाम सूर्य-चन्द्रयोर्योग एकत्र स्थितिर्वा राश्यादिसम्बन्धेन। अतो रवीन्द्वोरेकयोगादपरयोगं यावदेक-श्चान्द्रमासः। तत्रोभयोरन्तरांशाः ३६०° अंशाः। अमान्तादमान्तं यावत् त्रिंशत् संख्याकास्तिथयो व्यतीताः। ततश्चानुपातेनैकतिथिसम्बन्धिरविचन्द्रयोरन्तरांशाः— $\frac{३६० \times १}{३०}$ = १२ = रविचन्द्र-योरन्तरांशाः। अत्र स्फुटं यद् रविचन्द्रयोर्योगाद् द्वादश-अंशं यावदन्तरमेकतिथेर्मानम्।

अत्रायं प्रश्न उदेति यत् कीदृशः सूर्यश्चन्द्रो वा तिथ्यर्थं ग्राह्यः ?

भारतीयज्योतिषसिद्धान्तेषु केवलं सौरब्राह्माख्यौ च द्वावेव सिद्धान्तौ पञ्चाङ्गानां निर्माणार्थं स्वीकृतौ। तयोः सिद्धान्तयोः सर्वत्रैव कदम्बप्रोतीय-सूर्याचन्द्रमसाभ्यां पञ्चाङ्गा-नामानयनं क्रियते। ययोराधारेण सूर्यसिद्धान्तीया ( मकरन्द० ) ग्रहलाघवीया च सारण्यौ निर्मिते स्तः। एतच्च न केवलं भारतीयः, अपि तु पाश्चात्त्यैराधुनिकैर्ज्योतिर्विद्भिः कदम्ब-प्रोतीयसूर्याचन्द्रमसाभ्यां पञ्चाङ्गानामानयनं स्वीकृतम्। तत्र केवलं पाश्चात्त्यमते ग्रहाणां स्फुटीकरणप्रक्रिया एव भिन्ना वर्तते। इयं प्रक्रिया सुगमा दृक्प्रत्ययकारिका च।

अत्र विचारणीयोऽयं विषयो यद् ध्रुवप्रोतीयं तिथिसाधनं सम्भवं स्यान्नवेति। किञ्च, ध्रुवप्रोतीयानां ग्रहाणामाधारेण स्थिरा सारणिर्निर्मातुं शक्यते न वा ?

ध्रुवप्रोतीयतिथिग्रहणे—"आयनदृक्कर्मकलासंस्कृतकदम्बप्रोतीयस्फुटचन्द्रस्य कदम्ब-प्रोतीयस्फुटसूर्येणान्तरं तिथिः। रविचन्द्रयोर्गत्यन्तरं तिथिमानम्।" इति तिथिलक्षणं भविष्यति। अस्मिन् पक्षे ग्रहलाघवीयम् "भक्ता व्यर्कविधोर्लवा यमकुभिर्जाता तिथिः स्यात् फलम्" इति तिथिलक्षणं न संघटते।

उपर्युक्तलक्षणे जिज्ञासेयं समुद्भवति यत् किं नाम दृक्कर्म ? तस्य साधनं च कथम् ?

ग्रहगतकदम्बसमसूत्रयोः क्रान्तिवृत्ते यदन्तरं तदेव दृक्कर्म नाम साधनमुप-योगश्चाग्रे वक्ष्यते—

---

१. सि० शिरोमणिः, ग० म० भगणाध्यायः, श्लो० १३।

स्फुटप्रतीत्यर्थं क्षेत्रम्-----

प्रस्तुतक्षेत्रे वि = चन्द्रबिम्बम्, स्था = क्रान्तिवृत्ते चन्द्रस्य कदम्बप्रोतीयं स्थानम् ।

अ = क्रान्तिवृत्ते चन्द्रस्य ध्रुवप्रोतीयं स्थानम्, चन्द्रायनदृग्ग्रहो वा ।

अ स्था = आयनदृक्कर्मकला

वि स्था अ त्रिभुजे---

∠ अ वि स्था = बिम्बीयायनं वलनम्

∠ स्था = ९०°

वि अ चापं ध्रुवप्रोते स्पष्टशरः

वि स्था अ त्रिभुजं सरलं मत्वा चापस्य ज्ञानायानुपातः---

$$\frac{\text{चन्द्रस्पष्टशरः} \times \text{बिम्बीयायनवलन ज्या}}{\text{त्रिज्या}}$$

= आयनदृक्कर्मकलाज्या । अस्या चापं कलामानम् ।

अनेन मानेन संस्कृतः कदम्बप्रोतीयश्चन्द्रो ध्रुवप्रोतीयो भवति । अनया रीत्या प्रतिदिनमायनवलनस्य शरस्य च मानं भिन्नं भिन्नं भविष्यति । अनयोर्गतिवैलक्षण्यात् काचित् स्थिरा सारणिर्निर्मातुं न शक्यते । अतो ध्रुवप्रोतीय-सूर्याचन्द्रमसोः सकाशात् तिथिज्ञाने इयमापत्तिः समायाति ।

यदि दृक्कर्मसंस्कार एवं गृह्यते, तथा---

उक्तक्षेत्रे वि स्था य त्रिभुजे---

∠ य = ९०°  ∠ स्था = स्थानीयमायनं वलनम् ।

अत्रानुपातः—

$$\frac{\text{चान्द्रमध्यमशरः} \times \text{स्थानीयमायनवलनज्या}}{\text{त्रिज्या}}$$

$$= \text{अहोरात्रवृत्तीयायनदृक्कर्मासु ज्या} = (\text{फलम्})$$

$$\frac{\text{फलम्} \times \text{त्रिज्या}}{\text{द्युज्या}} = \text{नाडीवृत्ते आयनदृक्कर्मासु ज्या ।}$$

ततः चापं विधाय क्रान्तिवृत्ते कलामितेर्ज्ञानं कर्त्तव्यम् । सा च कलामितिरायनदृक्कर्म भविष्यति । अत्रापि आयनवलनशरयोर्वैलक्षण्यात् प्रतिदिवसीये व्यवहारगणिते सारण्या निर्माणे च तस्या उपयोगो न सम्भाव्यते । यदि कमलाकरभट्टोक्तरीत्या साध्यते, तदा—




चन्द्रबिम्बगतचलवृत्ते सं० वि० चलग्रहस्य साधनं कमलाकरभट्टोक्तरीत्या भवति। अस्य ( चलग्रहस्य ) विषुवांशं चन्द्रस्य च स्थानीयविषुवांशं संसाध्य तयोरन्तरेण क्रान्ति-वृत्तीयायनदृक्कर्मकलायाः मानं ज्ञातुं शक्यते । विषयेऽस्मिन् कमलाकरेण बहवो नियमाः प्रदर्शिताः । यद्यपि आयनदृक्कर्मकलासाधनस्य सैद्धान्तिकी युक्तिस्तु वर्तत एव, परमस्य व्याव-हारिकं स्वरूपं नितान्तमसम्भवम्, आयनदृक्कर्मकलायाः साधनभूतानां सामग्रीणां प्रपञ्चबाहु-ल्यात् । यथा—साधनार्थमयनांशज्ञानमत्यावश्यकम् । परमयनांशस्य वार्षिकगतेः प्रभावेण चन्द्रस्यैकैव भोगांशोपरि आयनदृक्कर्मकलायाः मानं प्रत्यब्देषु पृथक् पृथक् समागमिष्यति। अतोऽनया रीत्यापि सारणिनिर्माणमसम्भवम् । एवं ध्रुवप्रोतीयतिथिग्रहणे प्रत्येकपक्षेऽपि दूषणं समायाति । अतः सारणिनिर्माणेऽयं पक्षो नोपयुज्यते ।

कदम्बप्रोतीयसूर्यचन्द्रमसोः सकाशात् तिथ्यानयनेऽयनांशसम्बन्धिनी काचिदापत्तिर्न समायाति; यतो हि परस्परं सूर्याचन्द्रमसोः संशोधनेनायनांशाः स्वयमेव विनष्टा भवन्ति ।

यदि सूर्याचन्द्रमसोः पृथक् पृथग् विषुवांशज्ञानं कृत्वा तयोरन्तरेण तिथिसाधनं क्रियते, तदा चलायनांशवशात् तयोर्विषुवांशमपि प्रतिवर्षं पृथक् पृथग् भविष्यति। अतो विषुवांशसकाशादपि तिथिसाधनमसम्भवम्। अत्रैकोऽपरोऽपि शास्त्रीयदृष्ट्या विरोधः सम्भवेत्, पूर्वोक्ता तिथिसाधनप्रक्रिया असिद्धा भविष्यति। तत्रोक्तं स्पष्टरविचन्द्रयोरन्तरं द्वादशभिर्भक्तं तिथिः। परमत्र रविचन्द्रयोर्विषुवांशान्तरं द्वादशभिर्भक्तं तिथिरिति भविष्यति।

इत्थं निष्कर्षरूपेणेदं वक्तुं शक्यते यत् पञ्चाङ्गनिर्माणार्थं ध्रुवप्रोतीयतिथिसाधनं शास्त्रविरुद्धमशुद्धञ्च। यदि केवलं "बाणवृद्धिरसक्षयः" इति वाक्यस्य परिरक्षणार्थं ध्रुवप्रोतीया तिथिर्गृह्यते, तदा अस्य न काचिदावश्यकता। यतो हि उक्तवचनस्य संगतिः सूर्यसिद्धान्त-रीत्यापि वर्तते। यदि सूर्यसिद्धान्तानुसारं कदम्बप्रोतीया तिथिः साध्यते तदा—"बाण-वृद्धिरसक्षयः" इति पक्षे न काचिद् हानिः। कदाचित् केवलं पलात्मकमन्तरं सम्भवेत्।

यदि ध्रुवप्रोतीयतिथिग्रहणे दृक्प्रत्ययस्य हेतुत्वं स्वीक्रियते तदा इयमापत्तिः—

परम्परागतसिद्धान्तानुसारं स्फुटग्रहाः कदम्बप्रोतीया एव भवन्ति। अनन्तरं कदम्ब-प्रोतीये स्फुटचन्द्रे आयनदृक्कर्मकलासंस्कारं कृत्वा ध्रुवप्रोतीयश्चन्द्रः साध्यते। अत्रेदमवधेयं यदि कदम्बप्रोतीयः स्फुटश्चन्द्रः सूर्यो वा अशुद्धो दृक्प्रत्ययकारकानर्हश्च, तदा अशुद्धचन्द्रस्याधारेण साधितो ध्रुवप्रोतीयश्चन्द्रोऽप्यशुद्धोऽदृश्यश्च। एवमशुद्धग्रहाधारेण साधितो दृक्कर्मसंस्कारोऽप्यशुद्ध एव भविष्यति। एतेन स्पष्टं प्रतीयते यद् दृक्प्रत्ययाय भारतीयसिद्धान्तानुसारमागतेषु ग्रहे-ष्वन्ये नवीनाः संस्कारा अपेक्षिताः सन्ति। ते कदम्बप्रोतीयग्रहेषु ध्रुवप्रोतीयग्रहेषु च भवितु-मर्हन्ति, साम्प्रतं प्रचलितेषु पञ्चाङ्गेषु ये दृक्सिद्धा ग्रहास्ते "नाटिकल आल्मनाक" द्वारा साधिताः सन्ति।

एवमेव यदि चान्द्रायणदृग्ग्रहानुसारेण तिथिः साध्यते, तदा क्षयमासाधिमासयोरपि साधनं तस्यैवाधारेण भविष्यति। परन्तु एतादृशो व्यवहारः शास्त्रेषु न कुत्रचिदपि दृश्यते।

अत एव पूर्वोक्तदोषभयात् पूर्वाचार्यैर्ध्रुवप्रोतीया तिथिर्न स्वीकृता, कदम्बप्रोतीया एव स्वीकृता।

वस्तुतस्तिथिसाधने दृक्कर्मसंस्कारस्यावश्यकता नास्ति। परन्तु केषाञ्चिद् विदुषां मतमस्ति यच्छाकल्येन शाकल्यसंहितायां तिथिसाधने दृक्कर्मसंस्कारस्य निर्देशः कृतो यथा—

**ग्रहणादन्ययोगे च कालभेदे तथैव हि।**
**भृङ्गोन्नत्युदयास्तेषु दृक्कर्माद्वाविदं स्मृतम्॥**

अत्र 'ग्रहणादन्ययोगे च' इत्यनेन तिथिरपि गृह्यते इति तेषां मतम्। परन्त्विदं न समीचीनम्। अस्य सामान्यार्थस्त्वयमेव यत् ग्रहणादिरिक्तेषु योगेषु दृक्कर्मसंस्कारः कार्यः। परन्तु 'योग' पदेन किं ग्राह्यमिति तत्र न स्फुटीकृतम्। सूर्यसिद्धान्तेऽस्य स्पष्टोल्लेखो वर्त्तते—

**नक्षत्रग्रहयोगेषु ग्रहास्तोदयसाधने।**
**भृङ्गोन्नतौ तु चन्द्रस्य दृक्कर्मादाविदं स्मृतम्॥** (सू० सि० ७।११)

अस्यायमभिप्रायो यद् नक्षत्रग्रहाणां योगेषु दृक्कर्म कर्त्तव्यम्। नक्षत्रग्रहाः के? भौमादयः पञ्च ग्रहाः, नक्षत्रग्रहाः, ताराग्रहा वा। तेषु योगेषु दृक्कर्म कर्त्तव्यम्, न तु सूर्यचन्द्रयोर्योगे, यथा सूर्यसिद्धान्ते स्पष्टरूपेणोक्तम्—

ताराग्रहाणामन्योन्यं स्यातां युद्धसमागमौ।
समागमः शशाङ्केन सूर्येणास्तमनं सह॥ (सू० सि० ७।१)

अर्थाद् भौमादीनां युतिर्युद्धाख्यः समागमाख्यश्च, पञ्चताराग्रहाणां शशाङ्केन सह युतिः समागमः, सूर्येण सर्वेषां युतिः 'अस्तं' पदवाच्या भवति। अतोऽत्र युतिपदेन तिथिर्न ग्राह्या। अत्रेदमपि विचारणीयं यद् दृक्कर्मपदेन किं ग्राह्यम्? दृक्कर्म द्विविधम्—आयनमाक्षणं च। यत्रायनमभीष्टं तत्रायनदृक्कर्मपदेन यत्राक्षमभीष्टं तत्राक्षदृक्कर्मपदेन सर्वत्रैव व्यवहृतम्। परं यत्र केवलं दृक्कर्म एवोक्तं तत्रायनाक्षयोर्योगान्तरभूतं स्फुटदृक्कर्म ग्राह्यम्।

यदि लङ्कादेशीयं तिथिसाधनमभीष्टम्, तदा केवलमायनं दृक्कर्म एव ग्राह्यम्। परन्तु आचार्यैः सर्वत्र लङ्कादेशीयग्रहाणामाधारेण देशान्तरचरान्तरसंस्कारयोः साहाय्येन स्वदेशीयाः ग्रहाः साधिताः। ज्योतिषशास्त्रे स्वदेशीयग्रहाणां तिथिवारादीनां च साधनं विहितम्। स्यान्नाम क्वचिद् धर्मशास्त्रे लङ्कादेशीयतिथिप्रतिपादनम्, ज्योतिषशास्त्रे तु नैतत् क्वाप्युक्तम्।

एवं ध्रुवप्रोतीयतिथ्यानयने समागतानां दोषाणां विवेचनं प्रदर्शितम्। अग्रे विचारणीयोऽयं विषयो यत् केन प्रकारेण सूर्यसिद्धान्तप्रक्रियया साधिता ग्रहा दृक्सिद्धतुल्या भविष्यन्ति? येन पञ्चाङ्गार्थं वयमाङ्गलदेशीयानां मुखापेक्षणं न कुर्मः, परमिदं निश्चप्रचं यद् दृक्सिद्धसूर्याचन्द्रमसोरन्तरेण समागता तिथिः 'बाणवृद्धिरसक्षयात्मिका' कथमपि न भविष्यति। केवलं प्राचीनपञ्चाङ्गेषु तिथेर्मानमल्पतमं ५४ घटिका यावदधिकतमं च ६५ घटिका यावद् दृश्यते। इदानीन्तनेषु पञ्चाङ्गेषु यत्र स्फुटा दृक्सिद्धग्रहाः स्थापिताः सन्ति, तत्र तिथेर्मानमल्पतमं ५० घटिका यावदधिकतमं च ६७ घटिका यावद्भवति। अत्रायमेव हेतुः—

प्राचीनाचार्यैश्चन्द्रस्य मन्दान्त्यफलज्याया मानं ५° अंशात्मकं स्वीकृतम्, आधुनिकैर्विद्वद्भिः ६½° अंशात्मकं च स्वीकृतम्। सूर्यस्य दैनिकी मध्यमा अधिकतमा न्यूनतमा च गतिरुभयोर्मते तुल्यास्ति, यथा क्रमेणास्या मानम् ५९, ६१, ५७ इति। एवं चन्द्रस्यापि दैनिकी मध्यमागतिरुभयोर्मते तुल्या एव। अस्या मानम् १३°११′ स्वल्पान्तरतः। परन्तु चन्द्रस्य मन्दान्त्यफलज्याया नवीनप्राचीनमतयोः पृथक् पृथग् ग्रहणात् चन्द्रस्य दैनिकाधिकतमायां न्यूनतमायाञ्च गत्यां महदन्तरं प्राप्यते।

अतः 'बाणवृद्धिरसक्षयः' इत्ययं सिद्धान्तो ज्योतिषशास्त्रस्य नियामको नास्ति। साम्प्रतं 'सप्तवृद्धिदशक्षय' इति पक्षो वर्तते। आगामिशतकेष्विदमन्तरं कियद् भविष्यतीत्यपि साम्प्रतं वक्तुं न प्रभवामः। यदि कश्चिदुपायः 'बाणवृद्धी रसक्षयः' इति पक्षस्य दृक्प्रत्ययकारितायाश्च सहैव साधनं कर्तुं समर्थश्चेत्, तथा तादृश उपायो मार्गितव्यः। स च विद्वद्भिरवश्यं समादरणीय इति।



# पञ्चाङ्गविमर्शः

पं० कमलाकान्तशुक्लः, प्राध्यापकः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

अस्मिन् भारतभूमिभागे वेदा एव प्रमाणं वेदमूलकं वस्तु ग्राह्यं मान्यञ्चेति निर्विवादो राद्धान्तः। तत्र ज्यौतिषं शास्त्रं कालप्रयोजकत्वाद् वेदस्य निर्मलं चक्षुरित्यनेन वेदाङ्गत्वं सिद्धयति। यथोक्तं भास्करेण—

वेदास्तावद्यज्ञकर्मप्रवृत्ता यज्ञप्रोक्तास्ते तु कालाश्रयेण।
शास्त्रादस्मात् कालबोधो यतः स्याद् वेदाङ्गत्वं ज्यौतिषस्योक्तमस्मात्॥

"शब्दशास्त्रमुखं ज्यौतिषचक्षुषी" इति वेदाङ्गत्वात् सर्वमान्यं दिग्देशकालव्यञ्जकत्वेन 'व्रतयज्ञतपोदानोपवासादीनामादिबीजमिति। यतः सर्वेषां वेदवेदाङ्गोपनिषद्दर्शनपुराणादीनामेक एव निष्कर्षो यद् यज्ञव्रततपोनियमैरीश्वर उपासनीय इति। उपासनञ्च सुकालकृतं सफलम्, विरुद्धकालकृतं विफलं वानेकविघ्नविघटितमित्यतः सुकालबोधाय कालबोधकस्य शास्त्रस्य प्रतिपदं प्रयोजनं विद्यते। अथास्य शास्त्रस्य सारं तत्तत्कालबोधकं वेदाङ्गमूलकं गणितमेव पञ्चाङ्गं वस्तुनिर्दिष्टतत्त्वम्। अत एव पञ्चाङ्गशुद्धेः परमोपादेयता। अनाद्यनन्तेऽस्मिन् काले कालक्रमशासनादिप्रभावादियं पञ्चाङ्गनिर्माणपद्धतिर्मध्ये मध्ये कदाचीदुपचीयतेऽपचीयते च। कदाचिच्च भारतीयानां क्षीणे पुण्ये पापोपचये चोच्छिन्नमूलवैदिकपरम्पराका वैदिककालीनानुपलब्धस्फुटसाधनप्रमाणेयं दरीदृश्यते। किन्तु महाभारत-वेदाङ्गज्यौतिषकालयोः पूर्वापरासन्नकाले तदानीन्तनीयेषु पुस्तकेषु स्थूला पञ्चाङ्गनिर्माणपद्धतिर्दृग्गोचरीभवति। अनन्तरं ज्यौतिषशास्त्रप्रवर्तकमुन्याचार्यप्रभृतिभिर्यथाक्रमं शनैः शनैरुपचीयमाना जायते। साम्प्रतं तावत्प्रस्तुतपञ्चाङ्गविषयकमध्यकालीना ( ३९८ शकादारभ्य १०३६ शककालं यावत् ) पञ्चाङ्गनिर्माणपद्धतिः सिंहावलोकनगुहेव विविच्यते। तदानीं सौरं ब्राह्मञ्चेति मतद्वयनिर्मितं पञ्चाङ्गं प्रचलितमासीत्। तत्र सूर्यसिद्धान्तानुसारि सौरं ब्राह्मस्फुटसिद्धान्तानुसारिकृतं ब्राह्ममिति। तत्रापि—अष्टादशसु ज्यौतिषशास्त्रप्रवर्तकेषु कालकर्तृत्वात् प्राणिनोऽनुप्राणितत्वात् खेचारिमुख्यत्वाच्च रविरेव सर्वमान्यः, तेन तत्कृतसिद्धान्तस्यैव प्राधान्यम्। तदनुसारि प्रणीतं पञ्चाङ्गमेव समादरणीयम्। किन्त्वनेकभेदसमवेतेषु सूर्यसिद्धान्तेषु क आश्रयणीय इति वाराहकृतपञ्चसिद्धान्तिकान्तर्गतो वा भट्टोत्पलविवृतौ संगृहीतवचः सूर्यसिद्धान्तः, अथवा साम्प्रतमुपलब्धो मयमहासुरकृतः सूर्यसिद्धान्त इति परस्परं भिन्नत्वे वास्तवसूर्यसिद्धान्तस्य निर्णयस्तावद् दुर्घट एव। किञ्चात्र यः कोऽपि नवीनः प्राक्तनो वा सूर्यसिद्धान्तो भवेत्, किन्तु सूर्यसिद्धान्तस्यैव निरतिशयप्रामाण्येऽमुं प्रचलितं सूर्यसिद्धान्तं वेदवन्निर्विकल्पं श्रेष्ठं मन्यन्ते। अत एव तञ्च स्नानजपहोमादिनात्मानं पूतीकृत्यैव पठन्ति पाठयन्ति च तदानीन्तना गणकप्रवराः। यच्चोक्तं भट्टेन "वेद एव रवितन्त्रम्", "यथार्थार्कमुखप्रणीतं प्रमाणमङ्गीकरणीयमार्यैः" इति।

तावत्तत्र गृहीतमपि सौरमतं विविच्यते—

**श्रीसूर्यसिद्धान्तमतेन सम्यग् विश्वोपकाराय गुरुप्रसादात् ।**
**तिथ्यादिपत्रं वितनोति काश्याभानन्दकन्दो मकरन्दनामा ।।**

इत्यनेन तिथ्यादिसाधनाय मकरन्दनिर्मिता प्रचलितसूर्यसिद्धान्तानुसारिणी सारणी मकरन्दनाम्ना प्रसिद्धोपलभ्यते, इयं सर्वत्रैवोत्तरभारते प्रसिद्धोपलभ्यते च । साम्प्रतिकैः पञ्चाङ्गसम्पादकैरनयैव तिथिग्रहनक्षत्रयोगाः साध्यन्ते । तदानीं पञ्चाङ्गसाधनस्येयमेव मूलभित्तिः । अनया निर्मितं पञ्चाङ्गं मकरन्दीयमित्यस्या प्रसार-प्रचारणवशाद् वस्तुतो मकरन्दनामासौ गणको मकरन्द इवान्वर्थतां गतः । यमद्यापि लोकस्तन्नाम्ना स्मरति । न केवलं तन्निर्मिता सारणी, अपि तु सूर्यसिद्धान्तमाश्रित्य बहुशः करणग्रन्थाश्चकासन्ते । यैः सम्प्रति पञ्चाङ्गं निर्मियते ।

अनन्तरं ब्राह्ममतं विविच्यते । विष्णुधर्मोत्तरपुराणान्तर्गतं ब्रह्मस्फुटसिद्धान्तमाश्रित्य गणकचक्रचूडामणिर्ब्रह्मगुप्तोऽपि ब्राह्मस्फुटसिद्धान्तं खण्डखाद्यकरणग्रन्थञ्च रचयामास । ब्राह्मस्फुटसिद्धान्तमुररीकृत्य श्रीमान् भास्करः १०७२ शके सिद्धान्तशिरोमणिं वार्द्धक्ये च प्रायः ११०५ शके करणकुतूहलं करणञ्चाकार्षीत् । यथोक्तम् "रसगुणपूर्णमहीशकनृपसमयेऽभवन्ममोत्पत्तिः । रसगुणवर्षेण मया सिद्धान्तशिरोमणी रचितः" इति । सिद्धान्तशिरोमणिमधिकृत्य मुनीश्वरः १५६८ शके "सिद्धान्तसार्वभौमममभिहितवान् । यथा तत्समाप्तौ "अष्टाङ्गाक्षक्ष्मामिते शाकयातवर्षेऽकार्षीत् सार्वभौमं मुनीश इति" । अनया परम्परया ब्राह्ममतस्यपि प्रसारः प्रचारश्च ज्ञायते । एवमेव प्रसारिते मतद्वयेऽपि सृष्टिवर्ष-वर्षमान-ग्रहभगण-फलसाधनादिषु परस्परं विभेदो दरीदृश्यते । तत्र तावद्भेदप्रदर्शनं यथा—सौरे कल्पादेरनन्तरं सृष्ट्यादिरिति सृष्टिरचयिता ब्रह्मा ग्रह-नक्षत्र-देव-दैत्यादीनां सर्जने बहूनि वर्षाणि व्यतीत्य निरन्तरं भ्रमणशीलं भचक्रं वियति नियोजितवान् । यथोक्तम्—

**ग्रहर्क्षदेवदैत्यादिसृजतोऽस्य चराचरम् ।**
**कृताद्रिवेदाब्दिव्यदाः शतघ्ना वेधसो गताः ।।**

इत्येवमन्यत्रापि बहुषु स्थलेषु भेदो वर्तते ।

ब्राह्मये तु—युगपदेव कल्पादिः सृष्ट्यादिश्च सूर्योदये लङ्कायामिति यथोक्तं तत्र—"लंकायां सूर्योदये चैत्रशुक्लप्रतिपदारम्भेऽर्कवासरे चाश्विन्यादौ रौद्रभेदौ कालप्रवृत्तिः" । एवं ब्रह्मगुप्तोऽपि स्वसिद्धान्ते "चैत्रसितादेरुदयाद्भानोर्दिनमासवर्षयुगादीनां युगत्प्रवृत्तिः" । श्री आर्यभटोऽपि तथैव निगदितवान्, यथा "कलिसंज्ञे युगपादे पाराशर्यं मतं प्रशस्तम् ।" केतक्याञ्च "विधोर्दिनादौ युगपत्समस्तं भूर्वा ग्रहाः प्रागमनानुकूलाः । इतीरितं वेदविरोधिनस्ते ब्रह्मार्कचन्द्रादिमताद्विभिन्नाः । ब्रह्मा प्राह च नारदाय हिमगुर्यच्छौनकायामजं माण्डव्याय वशिष्ठसंज्ञकमुनिः । सूर्यो मयायाददत् । प्रत्यक्षागमयुक्तिशालि तदिदं शास्त्रं विहायान्यथा । यत्कुर्वन्ति नराधमा न सत्तदिदं वेदोक्तिशून्या भृशम् ।" भास्करोऽप्यत्र

**लङ्कानगर्यामुदयाच्च भानोस्तस्यैव वारेः प्रथमं बभूव ।**
**मधोः सितादेर्दिनमासवर्षयुगादिकानां युगपत्प्रवृत्तिः ।।**

इत्यादि सर्वं सौराद्विभिन्नमिति ।

अन्यत्प्रस्तुतविषयविवादप्रकरणे यथावसरं द्रष्टव्यम् ।

**तत्र तावत् सौरमतस्य प्राधान्यम्—**

वाराहोक्तपञ्चसिद्धान्तिकायां पञ्चसिद्धान्तेषु "सावित्रः स्पष्टतरः" इत्यनेन सूर्यसिद्धान्तस्यैव सूक्ष्मत्वं सिद्धयति । भट्टकमलाकरः स्वसूक्ष्मधिया सूर्यसिद्धान्तस्थौल्यं परिलक्षयन्नपि भवत्या सौरमतस्यैव सौक्ष्म्यं प्रतिपादयन्नाह "कुत्रचिद्भगवता सूर्येण लोकानुकम्पया"—एवं कथितम् । तथान्यस्य ब्राह्ममतस्य सत्यपक्षेऽपि "वेदोक्तिशून्या भृशम्" इत्याद्युक्त्या खण्डितम् । अनेन सौरमतं सूक्ष्मं लोकव्यवहारयोग्यमेवेत्युद्घोषितम् ।

इदानीं ब्रह्ममतस्य वैशिष्ट्यं प्रतिपादयन् ब्रह्ममतानुयायिषु प्रथमं ब्रह्मणि जातभक्तिरपि ब्रह्मगुप्तो ब्राह्म्यं मतं महता कालेन शिथिलं भविष्यतीत्युद्घोषितवान्, यतो हि दृष्टवस्तुषु वाङ्मात्रप्रमाणं नार्हति, यथा भट्टेन सौरमतं वचसा परिपोषितम्, न तथायमिति । यथोक्तं तेन—

**ब्रह्मोक्तं ग्रहगणितं महता कालेन यत्खिलीभूतम् ।**
**अभिधीयते　तत्स्फुटं　जिष्णुसुतब्रह्मगुप्तेन ।।** इति ।

तेन च स तां त्रुटिं संशोध्यैव ब्राह्मस्फुटसिद्धान्तं रचितवान् । इत्थं ब्रह्ममतं परिपोषयन् भास्करः स्वसिद्धान्तस्य रचनाप्रयोजनमपि दृग्गणितैक्यमेवेति प्रतिश्रुतवान् यत्—

**यात्राविवाहोत्सवसूतकादौ खेटैः स्फुटैरेव फलस्फुटत्वम् ।**
**स्यात् प्रोच्यते तेन नभश्चराणां स्फुटक्रिया दृग्गणितैक्यकृद् या ।।**

अनेनेदं स्फुटं यत्तदानीन्तनाः सर्वे ब्रह्ममतानुयायिनः स्वाधारभूतं सिद्धान्तं संशोध्यैव स्वस्वसिद्धान्तान् रचयामासुः । इत्यनेन ब्राह्म्ये तात्कालिकोपलब्ध्यानुसारि-जायमानसंस्कारसंस्कृतत्वात् पूर्वापेक्षया सूक्ष्मत्वं प्रमाणितम् । दाक्षिणात्याः प्रायो वैष्णवसम्प्रदायिनो विशेषतोऽमुमेव मतं समादरन् ।

तत्र तावत्करणग्रन्थप्रयोजनं यथा—

प्राचीनाचार्यवर्यैः स्वसमये सिद्धान्तानुसारिग्रहसाधनक्रियाजनितगणितगौरवकाठिन्यापनोदनायोत्तराधिकारिसौकर्याय लोकोपकारबुद्धया पंचसिद्धान्तिका-खण्डनखाद्य-भास्वती-करणकुतूहल-बृहल्लघुमानस-ब्रह्मतुल्य-भास्वती-रामविनोद-ग्रहकौतुक-सिद्धान्तरहस्य-दिनचन्द्रिकादिकरणग्रन्था अपि निर्मिता आसन् । किं बहुना, ततोऽपि ग्रहसाधनलाघवाय सारण्यपि निर्मिता विराजते । यया सम्प्रति पञ्चाङ्गकुशला ग्रहान् साधयन्ति । परन्तु सिद्धान्तापेक्षयोत्तरोत्तरं स्थूलत्वापत्तेः सारणीया ग्रहा न सम्यग् दृग्गोचरीभवन्ति । तथापि क्रियालाघवाय व्यवहारोपयोगाय च सारणीत एव ग्रहादयो नीयन्ते । अत एव सारणीयग्रहवशादानीततिथ्यादयोऽपि स्थूला भवन्तीत्यन्वयव्यतिरेकात् । एतेन सुस्पष्टं खलु यत् स्थूलपरम्पराकगणितस्यातीव स्थूलतासद्भावात् तत्साधिता ग्रहा अदृष्टफलायापि न सम्यगवतरन्ति, किन्तावद् दृष्टफलाय कल्पनं शशकशृङ्गवच्छ्रुतमात्रसुखानुभूतिकरं भवति । तत्र का नाम यथागतावलोकनचमत्कारचातुरी कथा ।

अथ च प्राक्तनेषु ग्रहलाघवस्य सूक्ष्मत्वं प्रतिपादितं गणेशेनेति । यथा १४४२ द्विवेदेन्द्रमिते शकाब्देऽपूर्वगणितकौशलधिया तत्कालीनोपलब्धेषु सिद्धान्तेषु यस्माद् यस्य ग्रहस्य दृग्गणितैक्य-

प्रतीतिर्जाता, तद्ग्रहस्य कृते तमेव सिद्धान्तमाधारमधिकृत्योपनिबद्धो बहुविषयविशेषसन्निहितोदरोऽनुगृहीतकुसुमपरागो मधुराशिर्मधुकरस्येवास्य विदुषोऽलौकिकं पाण्डित्यं प्रकाशयन् स्वसिद्धस्फुटग्रहादिष्ट-पर्व-धर्म-नय-सत्कार्याणां यथोक्तं फलं स्वसाधुघटकत्वादद्यापि राजत एव। यथोक्तं स्वयमेव गणेशदैवज्ञेन—

सौरोऽर्कोपि विधूच्चमङ्ककलिको नाब्जो गुरुत्वःयंजोऽ-
सृग्राहू च काजं ज्ञकेन्द्रकमथार्ये सैषुभागः शनिः।
शौक्रं केन्द्रमजार्यमध्यगमितीमे यान्ति दृक्तुल्यतां
सिद्धैस्तैरिह पर्वधर्मनयसत्कार्यादिकं त्वादिशे॥

अस्य सर्वत्र समादरः सन्नपि दक्षिणभारते विशेषरूपेण समादरो वर्तते। तत्रत्याः पञ्चाङ्गकुशला अमुमेवाङ्गीकृतवन्तः। यद्यप्यत्र पूर्वापृष्टमनार्षं स्वविचारस्वातन्त्र्यं गणितं मध्ये मध्ये निवेसितम्, तथापि तत्कालीनोपलब्ध्या बीजक्रियया संस्कृतत्वात् सौरब्राह्ममतवदार्यभटमतमपि प्रधानीकृत्य निवेसितत्वाच्चास्य समादरे दृढप्रतीतिर्जायते। यतः सत्यप्रतीतिजनकेऽस्मिन् शास्त्रे सत्यपक्षस्यैव समादरत्वाद् गुणाः पूजास्थानं गुणिषु, न च लिङ्गम्, न च वयः। तथा—"ननु वक्तृविशेषनिस्पृहा गुणगृह्या वचने विपश्चितः" इति।

**दृग्गणितैक्यम्—**

१—प्राक्तनैराचार्यवर्यैः स्वस्वकाले निर्मितेषु स्वस्वग्रन्थेषु स्वग्रन्थप्रयोजनं दृग्गणितैक्यमित्युद्घोषितम्। किन्तु दृक्प्रत्ययकारकं वेधं विना दृग्गणितैक्यप्रतिश्रुतिर्वाचनिकामात्रेति वक्तुं युज्यते। यतो भास्करप्रतिपादितो वेधविधिर्यथा तद्ग्रन्देषूपलभ्यते, न तथान्यैर्विहितो वेधविधिस्तन्निर्मितेषु ग्रन्थेषु दृश्यते। अतस्ते यथावद्वेधं कृत्वा शिथिलत्वं निरास्यैव ग्रन्था निर्मिता इति न सन्देहावसरः। परन्तु तेऽतिन्द्रियज्ञानकुशला येन केनापि विधिना दृग्गणितैक्यं प्रत्यक्षीकृतवन्त एवेति दृढं प्रतीयते, तत्प्रतिपादितविधिविहितगणितस्य दृक्प्रत्ययगतत्वात्।

**पञ्चाङ्गम्—**

ननु तिथि-नक्षत्र-योग-करण-वारा इत्येव पञ्चाङ्गानि। एभिः समवेतं पञ्चाङ्गमिति व्यपदिश्यते। किन्त्विदानीन्तनोयं पञ्चाङ्गं बहुविषयविशिष्टं नानाङ्गीयमित्यन्वर्थकं नाम भवितुं युज्यते। एवञ्चेन्मूलपरम्पराया उच्छेदात्, तथा साम्प्रतिकपञ्चाङ्गीयसमस्तविषयाणां तिथ्यादिपञ्चाश्रयीभूतत्वाच्च पञ्चाङ्गमेवेति व्यवहार उचितं प्रतिभाति।

**पञ्चाङ्गेषु तावत्तिथिपरिचयः—**

(१) तत्र चान्द्रं दिनं नाम तिथिः, सा चैकस्मिन् चान्द्रमासे त्रिंशन्मितां संख्यामापूरयति। स चैको मासो दर्शाग्रतो दर्शावधिकालव्यापको भवति, "दर्शावधिश्चन्द्रमसो हि मासः" इत्यागमात्। तन्मध्ये त्रिंशन्मितानि चान्द्रदिनानि वा त्रिंशत्संख्याकास्तिथयो भवन्तीति। दर्शान्ते "सूर्येन्दुसङ्गमः" इत्यागमात् प्रथमयुतेरनन्तरं द्वितीययुतिं यावच्चन्द्रः = १ भ + सूग सूर्यश्च = सूग। अनयोरन्तरम् = १ भ + सूग − सूग = चं − सू = १ भगणः = ३६०° = ३० तिथिः तुल्या। अतो बीजेनैका तिथिर्द्वादशांशमितान्तरसमा = $\frac{३६०^\circ}{३०}$ = १२°। ततो द्वादशमितेन सूर्यचन्द्रान्तरांशमानेनैका तिथिः, तदेष्टान्तरांशैः कियतीति गता तिथयो भवन्ति,

शेषान्तरञ्च वर्तमानतिथेर्यातम्, तच्च हरात्प्रपतितं भोग्यम्, तयोः कालश्च गत्यन्तरानुपातेन ज्ञातव्यः, यथा गत्यन्तरकलाभिः षष्टिघटिकात्मकः कालश्चेत्, तदा यातैष्यकलाभिः किमिति तिथेर्यातो भोग्यश्च काल इति सर्वसिद्धान्तेषु प्रसिद्धमित्यलं तिथिविषये।

(२) करणं नाम "तिथ्यर्द्धभोगसमम्", "तिथौ हि करणद्वयम्" इत्यागमात्।

(३) योगः—सूर्यचन्द्रयोगकलाभिरष्टशतैरेको योगो भवति, तदेष्टरविचन्द्रयोगकलाभिः कियतीत्यनुपातेन लब्धसमागता योगा शेषश्च वर्तमानयोगस्य यातं तद्धरात् पतितं भोग्यम्, ततो गतियोगमितकलाभिवर्तमानयोगस्य यातैष्यकालः साध्यः पूर्वानुपातवत्।

(४) वियति रवेर्भ्रमणेनानुमीयमानस्य वृत्ताकारस्य मार्गस्यापरं नाम क्रान्तिवृत्तम्, तच्च सप्तविंशतिविभागात्मकं नाम नक्षत्रम्। इदं रूढिपरम्परातो वा प्रत्यक्षवेधविधिना सिद्धं सर्वैर्निर्विकल्पं स्वीकृतमिति। तत्रैकस्मिन् रविभ्रमणे क्रान्तिवृत्ताख्यचक्रेंऽशाः = ३६०° तथा ३६०×६०=२१६००′ इति च कला भवन्ति। ततश्च कलाभिः २१६००′ मिताभिः सप्तविंशतिनक्षत्राणि भवन्ति, तदैकस्मिन्नक्षत्रे कियन्तीत्यनुपातेन $\frac{२१६००}{२७}$=८०० अष्टशतकला जायन्ते।

पञ्चाङ्गे चान्द्रनक्षत्रस्यैव व्यवहाराच्चन्द्रभोगाष्टशतकलाभिरेकं चान्द्रनक्षत्रम् तदेष्टचन्द्रकलाभिः किमिति लब्धं गतं नक्षत्रम्, शेषं वर्तमाननक्षत्रस्य यातम्, तच्च हरात् प्रपतितं भोग्यम्, तयोः कलाभिर्भुक्तभोग्यघटिकादिकं चन्द्रगतिवशात् साध्यम्, यथा चन्द्रगतिकलाभिः षष्टिघटिकाः, तदा भुक्तभोग्यकलाभिः किमिति जातमभीष्टं घटिकादिकमिति वर्तमाननक्षत्रस्य।

(५) वारो नाम दिनमहोरात्रमिति व्यवहृतम्। वारेषु प्रथमं रवेरेव वारो गृहीतः "लङ्कानगर्यामुदयाच्च भानोस्तस्यैव वारे प्रथमं बभूव" इत्यागमात्। ततः कक्षाक्रमेण मन्दो नाम शनैश्चरः कक्षासु सर्वोपरि कक्षायां संचरति, ततः शनैश्चरात् प्रभृत्यधोऽधःक्रमेण चतुर्थाश्चतुर्थाः कक्षाधिपा दिवसाधिपा भवन्तीति यथोक्तं भगवता सूर्यांशपुरुषेण "मन्दादधःक्रमेण स्युश्चतुर्था दिवसाधिपाः" इति।

अधोऽधःकक्षाक्रमस्तु, (श)—(बृ)—(म)—(सू)—(शु)—(बु)—(च) एवं यथोदितं पूर्वं सृष्ट्यारम्भे प्रथमदिवसस्य पतिः सूर्यो नाम रविस्तस्यैव वारो रविवारः, ततो द्वितीयदिवसपती रवेश्चतुर्थश्चन्द्रश्चन्द्राच्चतुर्थो भौमस्तस्माच्चतुर्थो बुधो बुधाच्चतुर्थो गुरुर्गुरोश्चतुर्थः शुक्रः शुक्राच्चतुर्थः कक्षाधिपः शनिरित्यादिवारगणनायां पतयो भवन्तीति यथोक्तमुपपन्नम्।

अयमेव कक्षाक्रमो भास्करेणोर्ध्वोर्ध्वक्रमेण वर्णितः, यथा "भूमेः पिण्डः शशाङ्कज्ञकविरविकुजेज्यार्किनक्षत्रकक्षावृत्तैर्वृतः" इत्येते ग्रहा वृत्ताकारस्वस्वकक्षायां सञ्चरन्तीति दिक्प्रसङ्गागतम्।

अथैतेषु पञ्चाङ्गेषु तिथेरेव वैशिष्ट्यम्… …वेदे स्मृतौ च दर्शयागः पौर्णमास्ययागः कर्तव्य इति निर्दिष्टः तत्र दर्शे भवो दर्शः स चासौ दर्शयागः, 'अमायाम् अमायामिति यजेत्' पूर्णिमायां भवः पौर्णमास्यः, स चासौ यागः 'पूर्णिमायां पूर्णिमायां वा पौर्णमास्यां पौर्णमास्यां च यजेत्'। पूर्णिमायां देवयजनममायाञ्च पितृयजनमेकादस्यां व्रतं कुर्यादिति श्रुतिस्मृतिपुराणधर्मशास्त्रप्रतिपादितं सर्वं याग-व्रत-होम-पैत्र्य-यात्रा-विवाहादिशुभं कर्म तिथ्याधीनम्, तिथिस्तु चान्द्रीकला, रविचन्द्रान्तरकलाभिः साधितत्वात्। यैवौषधिमनुप्राणयति जलनिधिञ्चोद्बोधयति, सकलां

पूर्णिमाशर्वरीञ्च प्रकाशयति, तदभावात् सर्वान्धकारमयी अमायाः शर्वरी । अत एव सर्वापेक्षया तिथिरेव सर्वमान्या मुख्या चेत्यनेन तिथिपत्रमपि पञ्चाङ्गस्यापरं नामेति प्रसिद्धम् ।

**पञ्चाङ्गरचनायाः सूक्ष्मता—**

यद्यपि प्राक्तना गणकप्रवराः स्वसिद्धान्तप्रयोजनं दृग्गणितैक्यमेवेत्युद्घोषितम्, तथापि साम्प्रतं मकरन्दसारणीतो ग्रहलाघवादिसारणीतो वा पञ्चाङ्गं निर्मीयते, अतस्तत्र स्थूलत्वं जायत इति प्रागेवोक्तमस्मिन् लेखमध्ये । अपि तु स्वनामधन्यैर्महामहोपाध्यायश्रीसुधाकरद्विवेदिभिः प्रायः १८९३ ईस्वीये सुजनमनश्चमत्कारकारिणी सौरी सारण्यैका प्रवर्तिता, यया सूर्य-सिद्धान्तानुसारेणाहर्गणं विधाय दैनन्दिनीयौ चन्द्रार्कौ साधितौ, ताभ्याञ्च तिथि-नक्षत्र-योग-करणादीनामानयनं भवति । यदि सौरं पञ्चाङ्गमीष्ठञ्चेत्, तदा प्रचलितेषु पञ्चाङ्गेषु सर्वा-पेक्षयानया सारण्या निर्मितं पञ्चाङ्गं सूक्ष्ममिति वक्तुं पार्यते ।

**दृश्यपञ्चाङ्गम्—**

स्व० प० श्रीमहामहोपाध्यायबापूदेवशास्त्रिमहोदयैर्नाटिकलअल्मनाक( आङ्गल-पञ्चाङ्ग )रीत्या तत्रस्थविशुवांशक्रान्त्यंशेभ्यो भुजांशानानीय ततः सायनौ रविचन्द्रौ स्फुटौ संसाधितौ तौ च क्रान्तिपातादेव भवतः । ताभ्यां तिथ्यादेरानयनं कृतम्, परञ्चात्र भारतेऽक्षुण्ण-परम्परया निरयना एव ग्रहा अपेक्षिता इति विषयमवलम्ब्य विवादे समुपस्थिते सायनौ तौ रविचन्द्रौ पुनरयनांशरहितौ कृत्वा ताभ्यां तिथ्यादेरानयनं कृतमिति । तत्सम्प्रदायानुसारेणे-दानीमपि तदीदं पञ्चाङ्गं प्रचलति । महाराष्ट्रे तिलकमतानुयायिनस्तथाविधं सायनमेव पञ्चाङ्गं रचयन्ति । किन्त्वूभयत्र अयनांशयोर्महदन्तरत्वात्तयोः पञ्चाङ्गयोरपि महदन्तरं दृश्यते । मिथिलाप्रदेशे मकरन्दीयं पञ्चाङ्गं व्यवह्लियते । किन्तु महाराजरामेश्वरसिंहबहादुर-समयान्नवीनं पञ्चाङ्गं स्वीक्रियते तत्रत्यै राजपुरुषैः । नवीनपञ्चाङ्गप्रवर्तकमते स्फुटरविचन्द्र-साधिततिथ्यादिकमेवोपयुक्तम्, तत्र नवीने पञ्चाङ्गे च पाश्चात्यगणकवेधोपलब्धवास्तव-रविचन्द्राभ्यामानीततिथि-नक्षत्र-करण-योगा उपन्यस्यन्ते । अत एव तत्रत्याः तिथ्यादयः स्फुटाः, स्फुटत्वे च यावन्तः खस्थदृश्यपदार्था ग्रहण-शुक्रोदयास्त-शृङ्गोन्नतिप्रभृतयो यथा साधिताः सम्यग् दृष्टिपथमालमन्ते इति प्रमाणिते तत्रत्या प्राचीना अपि गणकाः सर्वान् दृश्य-पदार्थान् तदनुकूलमेव स्वीये पञ्चाङ्गे निवेशयन्ति स्म । इत्येवं नवीनाः प्राचीनानधिक्षिपन्ति । प्राचीनभगणेभ्यः "यथा स्वभगणाभ्यस्तो दिनराशिः कुवासरैः" इत्यादिना आनीता ग्रहा भूगर्भाभिप्रायिकाः ( भूकेन्द्रस्थद्रष्टुः सम्बन्धेन ) भवन्ति । पाश्चात्त्यैर्भूपृष्ठाभिप्रायिका ग्रहा नीयन्ते । ते च तिथ्यादिसाधनेऽनुपयुक्ताः प्राचीनानां मते च धर्मादिकृत्येषु भिन्नाः । पञ्चाङ्गे केवलं प्रत्यक्षदृष्याः पदार्था ग्रहणादयो नापेक्षिताः, अपि तु व्रत-यज्ञ-विवाहादिशुभकर्म-जातकस्या-दृष्टफलसूचकाय तिथ्यदिषु व्रत-दान-स्नानादिकार्यसम्पादनाय चापेक्षिता भवन्ति। धर्मशास्त्रे प्रयुक्तेन मुनीनां वाक्येनैवानुव्रजनीयं निबन्धकारैरपि धर्मशास्त्रानुमोदिततिथ्यादीनां निर्णयः कृतः, अतोऽत्र तिथ्यादीनां साधनाय प्राचीनोक्तो विधिरेवाश्रयणीय इत्येव धर्मः । प्रत्यक्षीकरणे ऋषयोऽपि तथैवोक्तवन्तः । यथोक्तं भट्टेन स्वसिद्धान्ते—

**अदृष्टफलसिद्ध्यर्थं यथार्काद् युक्तितः कुरु ।**
**गणितं यदि दृष्टयर्थं तद् दृष्ट्युद्भवतः सदा ॥**

एतेनादृष्टफलसिद्ध्यर्थं तिथ्यादिसाधनेऽदृष्टफलवती युक्तिः, तथा खे ग्रहणादीनामवलोकनाय प्रत्यक्षावलोकन-जनक-युक्तिर्ग्राह्येति विषयविवेचननिश्च्यूतं वस्तुतत्त्वम् ।

दृष्टादृष्टगणितद्वैविध्ये किम् ? तावज्ज्यौतिषशास्त्रस्य प्रामाण्यमुत वोन्मत्तप्रलापवदृषीणां वाक्यमिति नाशङ्कनीयम्, यतो ऋषिवाक्यमर्यादासंरक्षणायैव द्विविधं गणितं व्यवहृतम्, अन्यथा ग्रहण-युति-समागम-शृङ्गोन्नतिशुक्रोदयास्तादीनां प्रत्यक्षावलोकने लोकप्रतीतिर्न भविष्यतीति । प्रतीतेरभावान्मर्यादैत्र का नामेति भृशं विभावनीयं निःपक्षपातिभिः । ग्रहणादिदृष्टफलसाधनाय श्रममात्रापनोदनाय नवीनं पञ्चाङ्गमनुकुर्वन्ति, अन्यथा स्वसिद्धान्तप्रतिपादितसूक्ष्मयुक्त्या दृग्गणितैक्यस्य सिद्धिर्भवितुमर्हतीति सिद्धान्तकारैरुद्घोषितम् ।

**सत्यपक्षे सत्यस्यैव मान्यता—**

प्रत्यक्षेऽस्मिन् ज्यौतिषशास्त्रे सत्यस्यैव प्रतिष्ठानम्, न स्थूलताया नित्योदयास्तेन शीतोष्णवर्षादिकालप्रवर्तकत्वाद् रविः, तथा स्वोदयास्तेन शुक्लकृष्णदलविभागात्मकरूपेण कालप्रवर्तकत्वाच्च चन्द्रः । इमौ प्रत्यक्षलोकप्रत्ययकारकौ अस्य शास्त्रस्य प्रत्यक्षसाक्षिणौ लोकप्रतीतिं जनयतः । "प्रत्यक्षं ज्यौतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ" इत्युक्तं च । अहो प्रत्यक्षेऽस्मिन् कथं भूर्मुकुरोदरसन्निभा पुराणेषु प्रतिपादिता तत् सत्यमिव प्रतिभाति, यतो वृत्तस्य शतमितोभागो मुकुरोदरवदेव दरीदृश्यते, नरस्तनीयान् महत्या भुवो शतांशादप्यल्पमवलोकयति, तदावलोकनभूभागः सम एवेति मतं पुराणोक्तम्, न हि वस्तुतः सर्वो भूभागः समतलः, अपि तु वृत्ताकारः, यथोक्तं भास्करेणास्मिन् विषये—

**यदि समा मुकुरोदरसन्निभा भगवती धरणी क्षितेः ।**
**उपरि दूरगतोऽपि परिभ्रमन् किमु नरैरमरैरिव नेक्ष्यते ॥**
**समो यतः स्यात् परिधेः शतांशः पृथ्वी च पृथ्वी नितरां तनीयान् ।**
**नरश्च तत्पृष्ठगतस्य कृत्स्ना समेव तस्य प्रतिभात्यतः सा ॥**
**वृत्तैर्वृतोऽयं भूगोलः.... ... .... .... .... .... .... .... ।**

एवमेव पुराणश्रुतिसम्मतो राहुरेव ग्रहणे कारको भवति "स्वर्भानुर्हं वै असुरस्तमसा सूर्यं विव्याध" इति माध्यन्दिनिश्रुतिवचसा । किन्तु ज्यौतिषशास्त्रयुक्त्या रविग्रहणे चन्द्रः, तथा चन्द्रग्रहणे भूभा कारणमिति निर्विकल्पः, यतो हि चन्द्रग्रहणे प्राग्बिन्दौ स्पर्शः पश्चिमे च मोक्षः, इतो भिन्नभागे रविग्रहणे स्पर्शमोक्षौ भवतः । अन्यदपि चन्द्रग्रहणं सार्वत्रिकम्, रविग्रहणं तु देशकालवशाद्भिन्नं भिन्नं भवतीति । राहुरिति ग्रहणकारणस्वीकारे कथमपि न सम्भवतीत्यतो ग्रहणे राहुकर्तृत्वं निरस्तमपि पुराणश्रुतिमर्यादापरिरक्षणाय विचित्रं बुद्धिकौशलं दर्शितं भास्करेण, यथा—

**राहुः कुभामण्डलगः शशाङ्कं शशाङ्कगः छादयतीव बिम्बम् ।**
**तमोमयः शम्भुवरप्रसादात् सर्वागमानामविरुद्धमेतत् ॥**

भट्टस्त्वस्माद्भिन्नं प्रतिपादितम्, यथा—प्रत्यक्षे प्रत्यक्षस्यैव प्रामाण्यं घटितम्, न तु मर्यादायाः संरक्षणे विचेष्टितव्यम्, प्रत्यक्षसिद्धिसत्त्वेऽप्रत्यक्षसम्पादनपरिलक्षिते मुनिपुराणयोर्वचसि का नाम श्रद्धा जलताडनवत् । तदुक्तिर्यथा—

नान्यं मुनीन्द्रोक्तमपीदमस्मात् प्रत्यक्षसिद्धौ नहि वाक्प्रमाणा ।
सुयुक्तापि मुन्युक्तिरप्यत्र शास्त्रे भवेत् कार्यवर्यस्य यादृग्विरुद्धा ॥
तद्धि व्यासोदितं चापि दुष्टं ज्ञेयं विजानता ।

एवमेव प्राक्तनाः सर्वेऽप्याचार्यास्तात्कालिकस्फुटीकरणार्थं स्वसामयिकबीजं संस्कृत्य स्फुटं ग्रहं साधितवन्तः । अत एव स्फुटीकरणप्रत्यक्षे गुणग्राहिणो विपश्चितो ननु वक्तृबोधव्यविशेषनिर्गता भवन्ति । "बालादपि भुभाषितं ग्राह्यम्" इति न्यायाद्, यथोक्तं वाराहेण—

म्लेक्षा हि यवनास्तेषु सम्यक् शास्त्रमिदं स्थितम् ।
ऋषिवत्तेऽपि पूज्यन्ते किं पुनर्ब्रह्मविद्द्विजाः ॥

अनेनेदं निर्गलितं यद् ग्रहाणां प्रत्यक्षीकरणगणितकुशलाः प्रत्युत्पन्नमतयस्ते महात्मानः पूज्या मान्याश्च, तथा दृग्गणितैक्यमेव समादरणीयं व्यवहर्तव्यञ्चेति ।

**प्रत्यक्षे ग्रहणस्य चमत्कारः—**

ग्रहणे कृत-स्नान-दानजप-हवनादिकं कर्म अनन्तस्याक्षयस्य पुण्यस्य फलजनकत्वाल्लोकाभ्युदयश्रेयसे लोके चमत्कृतये चोपकल्प्यते । अत एव बहूपयोगित्वाद् ग्रहणं साधनीयमेव, यथोक्तम्—

बहुफलं जपदानहुतादिके.... ... .... ... ।
सर्वं गङ्गासमं तोयं सर्वे ब्रह्मसमा द्विजाः ।
सर्वं भूमिसमं दानं राहुग्रस्ते दिवाकरे ॥

अपि च—

भूमेर्दूरभवं ज्ञानं दिव्यं चार्केन्दुसम्भवम् ।
भविष्यं पूर्वमुक्तं चेच्चमत्कृतिकरं नृणाम् ॥

अर्थाद् भूमेरतिदूरप्रदेशे खे वासिनो रवीन्दोर्ग्रहणं प्रच्छादनरूपं निर्दिष्टसमयात् पूर्वं चेत् सूच्यते, तदेदं लोके चातीव चमत्कारप्रतीतिमुत्पादयति । किञ्च तादृक्कुतूहलजनकखगोलीयविषयविशेषचमत्कारज्ञानजिज्ञासापरिपूर्णमनोरथा लोका सुखान्यनुभवन्ति । अतः स्थूलतापरिच्छिन्नमूलगाणितिकाः सिद्धान्ताः करणग्रन्थाश्च न बहुमान्यतामधिगताः । उक्तं चात्र भट्टेन करणप्रायसिद्धान्ते—

.... .... .... .... स्वासद्युक्त्याभिमानतः ।
वयं कवय इत्याहुः स्वोक्तौ प्रौढ्या पुरातनाः ॥
त एव कवयो येऽत्र गोलतत्त्वार्थकल्पकाः ।
कुकाव्यपाठकास्ते तु कवयो न कथञ्चन ॥
भृङ्गारपदलालित्यं ग्रन्थशक्त्या विषग्विवदम् ।
वासनाशास्त्रमज्ञानां चामृतं तद्विदां सताम् ॥
मूर्खा निन्दां (प्रकुर्वन्ति) करिष्यन्ति न दुःखम् ।
तेन मे यस्माद् ज्ञातारो वा बहवो भुवि ॥

अनेनात्र स्थूलगणितस्य निराकृतिः, तथा सूक्ष्मगणितस्य प्रयोजनं प्रादुर्भवति ।

**पञ्चाङ्गविषयकविवादः**

सम्प्रति समुपस्थितस्य पञ्चाङ्गविषयकबहुविवादस्य निर्णयाय यत्र तत्र समितिः संयोजितेति श्रूयते । तत्र कीदृशो विवादः, कथं च तस्य निर्णयोऽपेक्षितः ? तत्र पञ्चाङ्गे दृश्यादृश्यगणितयोः कतरः पक्षः साधुर्यं आश्रयणीय इत्येव विवादस्य विषयः । तत्र प्राचीन-सिद्धान्त-करणग्रन्थ-सारणीभिः साधिता ग्रहाः स्थूला यथानीता दृष्टिपथं नालभन्ते, तेनेदानीन्तनं प्रचलितं पञ्चाङ्गमविकल्पेन स्थूलमिति साम्प्रतिकैरधिक्षिप्यन्ते । तत्र स्थूलत्वे कारणानि दीयन्ते, यथा (१) तत्र तावत्प्रथमं प्राचीनमते, एकस्मिन् वर्षे यानि सावनदिनानि तानि सर्वाण्यपि स्थूलानि ( अवास्तवानीति ), तत्रापि भिन्ना आचार्या मतिश्चापि भिन्ना तेषाम् । तत्साधनप्रकारस्य स्थूलत्वे तत्साधितानि दिनान्यपि स्थूलानि, कारणस्य स्थूलत्वे कार्यस्य स्थूलत्वं सुनिश्चितमेवेत्यन्वयव्यतिरेकात् ।

साधनप्रकारो यथा–कल्परविभगणैः कल्पकुदिनानि लभ्यन्ते, तदैकस्मिन् वर्षे किमित्यनु-पातेनैकस्मिन् सौरवर्षे सावनदिनानि जायन्ते ( कल्पे यावन्तः सौरा भगणास्तावन्ति सौर-वर्षाण्यपि ) । अनुपातस्य नियतैकविषयत्वाद्भगणपूर्तौ चानियतगतित्वादनुपातप्रभवानि सावनानि स्थूलान्येव । अनया रीत्यानेकसिद्धान्तसमुद्भवानि सावनान्यधोनिर्दिष्टानि प्रत्ययाय यदवलोकने भिन्नत्वं प्रत्यक्षं दृश्यते ।

## विवरणम

| ग्रन्थनाम | वर्षदिनम् | घटिः | पलम् | विपलम् | प्रतिविपलम् | |
|---|---|---|---|---|---|---|
| वेदाङ्गज्यौतिषे | ३६६ | — | — | — | — | |
| पितामहसिद्धान्ते | ३६५ | २१ | २५ | ४२ | २३ | पञ्चसिद्धान्तिकानुसारम् |
| पुलिशसिद्धान्तपक्षे | ३६५ | १५ | ३० | ० | ० | पञ्चसिद्धान्तिकानुसारम् |
| वशिष्ठसिद्धान्ते | ० | ० | ० | ० | ० | पञ्चसिद्धान्तिकानुसारम् |
| सूर्यसिद्धान्ते | ३६५ | १५ | ३१ | ३० | ० | पञ्चसिद्धान्तिकानुसारम् |
| रोमके | ३६५ | १४ | ४८ | ० | ० | पञ्चसिद्धान्तिकानुसारम् |
| प्रथमार्यसिद्धान्ते | ३६५ | १५ | ३१ | १५ | ० | |
| द्वितीयार्यसिद्धान्ते वाराहमिहिरे च | ३६५ | १५ | ३१ | ३० | ० | |
| ब्रह्मगुप्तसिद्धान्ते | ३६५ | १५ | ३० | २२ | ३० | |
| सिद्धान्तशिरोमणौ | ३६५ | १५ | ३० | २२ | ३० | |
| साम्प्रतिकोपलब्ध-सूर्य-वशिष्ठ-शाकल्य-रोमक-सोमसिद्धान्तेषु | ३६५ | १५ | ३१ | ३१ | २४ | |
| राजमृगाङ्क-करणकुतूलयोः | ३६५ | १५ | ३१ | १७ | १७ | |
| ग्रहलाघवे | ३६५ | १५ | ३१ | ३० | ० | |
| केतकरमते | ३६५ | १५ | २२ | ५४ | ० | |
| आधुनिकशोधने | ३६५ | १५ | २२ | ५६,८७ | | |

वेदाङ्गज्यौतिषकालादारभ्येदानींतनं यावत् स्थूलकल्पनया ३००० प्रायस्त्रिंशत्सहस्र-वर्षाणामुपरि दर्शितपरम्परया प्रतिफलितं यत्सर्वैरपि स्वकालिकोपलब्धानुसारेणैव संशोधनं कृत्वा स्वकीयं तन्त्रं विहितमिति तेनास्माभिरपि संशोधितं शुद्धं किमपि वर्षमानं ग्राह्यम्, पञ्चाङ्गोपकरणतिथ्यादिमानशुद्ध्यै ।

द्वितीयं कारणं तु—भगणारम्भस्थानाऽश्विन्यारम्भस्थानस्य प्राचीनसिद्धान्ते स्पष्ट-निर्देशाभावाद् दृग्गणितैक्यप्रत्यक्षीकरणदुर्घटत्वाच्च तिथ्यादिमानानयने स्थूलापत्तिः ।

अपरश्चारम्भस्थलस्य प्रतिपादने वैमत्यश्चापि दरीदृश्यते । तद्यथा—'पौष्णान्ते भगणस्मृतः' इति सूर्य-पितामह-ब्रह्म-रोमकसोम-वशिष्ठादिसिद्धान्तकारैर्निर्विकल्पं स्वीकृतम् । पौष्णान्तपक्षोऽयं रेवतीतारात्मक इति भास्करः । पौष्णान्तशब्देन तन्निवेशस्य ज्ञानाभावात् संदिग्धं पौष्णान्तमिति कैश्चिद् भूधरचण्डेश्वरादिभिः प्रोक्तम् । पौष्णान्तस्य रेवत्यन्त इति श्रीरङ्गनाथविश्वनाथप्रभृतिभिराचार्यैः रेवतीयोगतारानिकटत्वमभिहितम्, तथापि पौष्णान्तस्या-धिकस्फुटत्वाभावो वर्तते, भास्करादिमतेऽपि निर्दिष्टरेवतीतारासंदिग्धैव । म० म० प० सुधाकर-द्विवेदिभिरपि रेवतीनक्षत्रस्य तद्योगताराज्ञानं संदिग्धम्, न तथा चित्रानक्षत्रं चैकतारात्मकत्वात् प्रकाशाधिक्यात् तद्योगताराज्ञानं च सुखेन भवितुमर्हति । अत एव पौष्णान्तस्य रेवतीताराया अन्ते समीपस्थाने भगणपूर्तिरित्यनेन पौष्णान्ते भगणः स्मृत इत्युक्तम्, न खलु पौष्णान्त इति मुनीश्वरः । द्वात्रिंशत्तारात्मकत्वाद् यथोक्तं मुहूर्त्तचिन्तामणौ—

**नित्यङ्गपञ्चाग्निकुवेदवह्नयः शरेषु नेत्राश्विशरेन्दुभूकृताः ।**
**वेदाग्निरुद्राश्वियमाग्निवह्नयोऽब्धयः शतं द्विद्विरदाभतारकाः ॥**
**अश्वादिरूपं··· ··· ··· ··· ।**
**मौक्तिकं विद्रुमञ्च···· ··· ··· ॥** इति ।

अस्य स्फुटीकरणं चित्रायास्तारा मौक्तिकाकारा—एका चेति ।

एवं मतभिन्नत्वे, आरम्भस्थले ( भिन्नत्वे सत्यपि ) सन्दिग्धे सत्यपि तदुक्तारम्भस्थल-बलेनैव वास्तविकारम्भस्थलं निर्णेतुं पारयामः, यथा—

**प्रणम्य शिरसा कालमभिवाद्य सरस्वतीम् ।**
**कालज्ञानं प्रवक्ष्यामि लगधस्य महात्मनः ॥** (आर्षज्यौतिषम् २)

"वसुस्त्वष्टाभवोऽजश्च" (ऋ० ज्यौतिषम् ९)। "उदया वासवस्य स्युः" (ऋ० ज्यौ २९)। "स्वराक्रमेते सोमार्कौ" ( ऋ० ज्यौ० ५ )। "प्रपद्येते श्रविष्ठादौ" ( ऋ० ज्यौ० ६ )। इत्येभिर्मूलवचनैर्नक्षत्रचक्रे प्रथमं धनिष्ठानक्षत्रमेव प्रमाणैः सिद्धम् । तच्च चतुस्तारात्मक-त्वात् तत्प्रथमायाः प्रकाशबाहुल्यात् सैव योगतारा वेधोपकल्प्यते । तत्र प्रथमतारया सहाग्रे पञ्चमनक्षत्रान्ते अंशोनसप्तषष्टि ६६°।४०° भागान्तेऽव्यवहितोत्तराश्विन्यारम्भात् त्वाष्ट्रेन्दु-भागान्तरेऽतिशयेन देदीप्यमानं सार्द्धत्रयोदशनक्षत्रान्ते $१३\frac{१}{२} \times १३\frac{१}{३}$ = चैकतारात्मकं चित्रा-नक्षत्रं रोचमानं तिष्ठति । वैदिकधनिष्ठाप्रयुक्ताश्विन्यारम्भसम्मुखत्वेन वर्तमानत्वात् तस्यापि वैदिकत्वाद् भगणारम्भस्थलमेवाश्विन्यारम्भस्य सनातनत्वं सिद्ध्यति । तेन प्रकाशवत्याश्वि-न्याताराया वेधकरणे द्वितीयदिने न विन्द्वन्तरप्राप्तेर्वैयर्थ्यापत्तिः । इत्यलं प्रसङ्गागतविवेचनेन । चित्रैव वेधोपयुक्ता ग्राह्येति दिक् ।

तृतीयं कारणं तु—तिथ्यादिस्थूलत्वे प्राचीनसिद्धान्त-करण-सारणीभ्यो ग्रहस्पष्टीकरणमिति। वेधोपलब्धग्रहा नाडीक्रान्तिवृत्तसम्पातादेवागच्छन्ति, ते रेवत्यन्तबिन्दोरश्विन्यादितो वा सम्पादनायायनांशैः संस्कृता भविष्यन्ति। तत्रायनांशा वेधोपलब्धाः सूक्ष्मैव ग्राह्याः। एतदर्थं मत्कृतोऽयनांशविमर्शो द्रष्टव्यः।

४—पञ्चाङ्गापेक्षितं यद् दृश्यं तद् दृश्यगणितेन साध्यम्, यथा ग्रहण-उदयास्त-चन्द्रशृङ्गोन्नति-ग्रहयुतिप्रभृत्यखिलं दृश्यवस्तु यथानीतं नलिकायन्त्रेण आकाशे जले वा अवलोक्यते चेत्, तदा तत्साधुत्वं निर्विवादं स्वीकरणीयम्। परन्तु युक्तिमन्तराऽत्र दृश्यगणितस्वीकारेऽदृश्यगणितत्यागे च का युक्तिर्यया व्यवहरणीयम्।

पञ्चमं कारणं तु—सर्वैः प्राचीनाचार्यैः स्वस्वनिबन्धेषु दृग्गणितेनैव स्वमतं परिपोषयन्ति तदिदादीन्तनास्तत्तत्स्फुटं दृक्प्रत्ययकरं गणितं कथं न स्वीकुर्वन्ति, अपि तु तावत् स्वीकरणीयमेव दृग्गणितपक्षपातिनामयं पक्षः।

अत्र हि युगमन्वन्तरमनपेक्ष्य या काचिद् गणना सात्र न ग्राह्येति ब्राह्ममतं स्वीक्रियते चेत्, कैश्चिदुच्यते चेत्, तदा तन्न साधु, यथोक्तं तत्र ब्रह्मगुप्तसिद्धान्ते—

युगमन्वन्तरकल्पाः कालपरिच्छेदकाः स्मृतावुक्ताः।
यस्मान्न रोमके ते स्मृतिबाह्यो रोमकस्तस्मात्॥

इति सत्यम्।

६—प्राचीनसिद्धान्तेऽन्वयव्यतिरेकेण येन भगणमानेन वर्षमानं साधितम्, तेनैव मानेन युगे कल्पे वा भगणाः पठिताः, अतो ग्रहादीनामानयने न काचिद् विप्रतिपत्तिः। प्रकाशवती तारा चित्रा रेवती वा भवतु, अनेन न तत्र किञ्चित् प्रयोजनं सिद्ध्यति, यतो हि प्राचीनार्षसिद्धान्ते भगणैरेव ग्रहादीनां साधनं क्रियते, न वर्षमानेन इति।

अथ च यदि चित्रैव प्रकाशवती तारा भवेत्तथापि भार्द्धांशसमम् १८० संयोज्य रेवत्यन्तादश्विन्यादिबिन्दोर्वा ग्रहा ज्ञातुं शक्याः। अतो वर्षमानमूलबिन्दोर्निर्णयो निःप्रयोजनम्। दृश्यगणिते तु युगादिभगणप्रयोजनं विनैव वेधेनैव प्रत्यक्षं ग्रहाः साध्यन्ते। वेधेन सायना एव ग्रहा आगच्छन्ति। तेन वर्षमानमूलबिन्दोरयनांशनिर्णये परमोपादेयता। अन्यच्च लग्न-चर-क्रान्तिचरदलादिसाधने चायनांशसंस्कारस्य प्रयोजनं पदे पदे वरीवर्ति। तदयनांशसम्बन्धे बहुवक्तव्यमस्ति यदर्थं मत्कृतोऽयनांशविमर्शो विलोक्यः।

तथापि प्रसंगात् किञ्चिदुच्यते प्राचीनसिद्धान्ते स्फुटतया कुत्राप्ययनांशस्य चर्चा नास्ति, यतस्तदानीं तदभाव एव कारणं प्रतीयते, न ते जानन्तीति तु न, अपि तु भास्कराचार्यसमयेऽयनभागा उपलब्धा आसन्, किन्तु ते कतीति नोल्लिखितम्, अपि तु तद्विषयकी चर्चा तत्र सिद्धान्तेऽवलोक्यते, यथा—

"नहि क्रान्तिपातो नास्तीति वक्तुं शक्यते, तस्य प्रत्यक्षोपलब्धित्वात्, उपलब्धिप्रकारस्त्वग्रे वक्ष्यति। तत्कथं ब्रह्मगुप्तादिभिर्नोक्तमिति चेत्, तदा तैर्नोपलब्धः स्वल्पत्वात्, इदानीं बहुत्वात् साम्प्रतिकैरुपलब्धः। अत एव तस्य गतिरस्तीत्यवगतम्। तर्हि साम्प्रतिकोपलब्ध्यनुसारिणी कापि गतिरुररीकर्तव्या, यदा पुनर्महता कालेन महदन्तरं भविष्यति। तदा ब्रह्मगुप्तसमानधर्माणो महामतिमन्त उत्पत्स्यन्ते ते तदुपलब्ध्यनुसारिणीं

गतिमुररीकृत्य शास्त्राणि करिष्यन्ति । अत एवायं गणितस्कन्धो महामतिमद्भिर्धृताः, अत एव सनातनेऽनाद्यनन्तेऽपि काले खिलत्वं न याति । अतोऽस्य क्रान्तिपातस्य भगणाः कल्पेऽयुतत्रयं तावत्सूर्यसिद्धान्ते सिद्धाः । तथा मुञ्जालाचार्येर्यदुक्तमयनचलनं स एवायं क्रान्तिपातः । तस्य भगणाः चक्रभ्रमणेन गोऽङ्गर्तुनन्दगोचन्द्राः १९९६६९ उत्पद्यन्ते । अथ च ये वा ते वा भगणा भवन्तु, यथा—

"येंऽशानिपुणैरुपलभ्यन्ते, तदा स एव क्रान्तिपातः ।"

अनेन फलितं यच्छ्रीभास्करेणापि वेधेन येन केनापि विधिनोपलब्धास्तदानीन्तना अयनभागाः स्वयं न प्रतिपादिताः, अपि तु तत्कर्तव्यता भविष्यमाणब्रह्मगुप्तसमानधर्मज्यौतिषाचार्याणामुपरि विन्यस्ता । वस्तुतस्तु कल्पीयायनांशभगणमाने सौरमुञ्जालयोर्मते महदन्तरं समीक्ष्यैव भास्करस्यायनांशनिर्णयेऽनुत्साहो जातः । प्रत्यक्षसाधनप्रक्रियाया अभावादिति प्रतीयते, अन्यथायनांशविषये स्वयमुपपत्तिं प्रदर्श्यापि तत्र निश्चयो निर्णयो वा न कृतः । यद्यपीदानीमयनांशानयनाय भास्करप्रकार एव साधुः । यथा "समायां भूमावभीष्टकर्कटकेन वृत्तमालिख्य तच्चक्रकलाङ्कितं कृत्वा ध्रुवावलोकनादिनाऽत्र दिगङ्कितं कृत्वा दिङ्मध्ये ऋजुः सूक्ष्मं कीलकं विनिवेश्य प्रातः पश्चिमभागस्थो द्रष्टा करकलितालम्बकसूत्रेण तेन कीलकेन च प्रत्यहमर्द्धोदितं सूर्यं विध्वा त्रिज्यावृत्तस्य प्राग्विभागे स रविर्यत्र यत्र दृष्टस्तत्र तत्र चिह्नानि कुर्यात् । एवं विध्यता यस्मिन् दिने स सम्यक् प्राच्यां रविरुदितो दृष्टस्तद्विषुवद्दिनम्, तस्मिन् दिने तदानीन्तनीयो गणितेन स्फुटार्कः साध्यः, तस्य रवेर्मेषादेश्च यदन्तरं तेऽयनांशा ज्ञेयाः । इत्युत्तरगमने दक्षिणे तु तत्स्फुटार्कस्य तुलादेश्चान्तरं वायनांशाः । एवं प्रतिदिनं वेधं कुर्वता यदोत्तरां परमां काष्ठां प्राप्य यस्मिन् दिने दक्षिणदिशि तस्य रवेः प्रोच्चलनं दृष्टम्, तदयनं दिनम्, ततः प्रभृतिदक्षिणे गमनं जायते । तत्र दिने गणितेन स्पष्टः सूर्यः साध्यस्तस्य राशित्रयेण सहान्तरं वायनांशाः । एवं दक्षिणां परमां काष्ठां प्राप्य यदा निवृत्तो दृष्टस्तदुत्तरायणदिनारम्भः, ततः प्रभृतिरुत्तरं गमनमित्ययनांशसाधनसाधुत्वं स्फुटमेव ।" करणकुतूहले भास्करेण प्रायः ११०५ शकवर्षे ११ रुद्रांशमितायनभागाः स्वीकृताः सिद्धास्तदानुपातेन वार्षिकी आयनगतिरेका कला, मुञ्जालभगणेन ५४′ विकला, गणेशेन तु ४४४ शकेऽयनांशाभावो गतिश्चैका कला स्वीकृता, एवमेवायनांशभेदे प्रत्यक्षे सत्यपि सायनगणनायामपि स्थूलत्वं सम्भाव्यत एव । तेन निरयणः पक्षः समाश्रयणीयः, यथोक्तं गोविन्दशास्त्रिणा स्वर्काये सायनवादे ।

"मन्ये इमां गौणीमपि निरयणगणनां स्वीकुर्वन्ति लोकाः । यदि ते राशिचक्रस्य मूलभूतं निरयणमेषादिं निश्चिनुयुः सति कुड्ये चित्रमिति ज्यायान्, परमयं निरयणमेषादिः कथमपि निर्णेतुं न शक्यते" ।

अत एव ज्योतिर्गणितेन साधितसूर्येण सह वेधोपलब्धसूर्यस्यान्तरमेवायनांशान् वा भास्करप्रतिपादितायनांशान् गृहीत्वा पञ्चाङ्गं निर्मेयम् ।

अत्र यदि दृश्येन गणितेन ग्रहणादिकं समानीयते, तथा तिथ्यादिकं कथं नानीयते इति चेन्न, यतः प्रत्यक्षमपीदं शास्त्रं स्वातन्त्र्यरहितं वैदिकस्मार्तधर्मव्रतादिकृत्याधारमूलकत्वात् तन्निर्मितं पञ्चाङ्गं दृश्यादृश्यगणितसाधितवस्तुसमवेतं भविष्यति चेत्, तदेव धर्मशास्त्रानुमोदितं भविष्यतीति राद्धान्तः ।

यथात्राचार्याणां वचांसि—

तिथ्यन्तनाडीनतबाहुमौर्व्या   लब्ध्वार्कशीतांशुफले विनिघ्ने ।
मृदुस्फुटातो ग्रहणे रवीन्द्वोस्तिथिस्त्विदं जिष्णुसुतो जगाद ॥

इत्यनेन केवलं ग्रहणे स्फुटतासाधनाय तिथौ विशेषः संस्कारः प्रदत्तो ब्रह्मगुप्तेनेति सिद्धान्तशिरोमणौ स्पष्टाधिकारान्ते ब्रह्मगुप्ताशयोऽभिहितो भास्करेण । तत्रैव वासनाभाष्ये विषयेऽत्र चतुर्वेदाचार्यमतमपि व्यक्तीकृतम्, यथा "चतुर्वेदाचार्येणाप्युपलब्धिरेव वासनेत्यभिहितम्" । यदीदृश्युपलब्धिरस्ति, तदास्माभिः कथं नाङ्गीकर्तव्यमिति । एवं सूर्यग्रहणे—

शशिदृक्षेपार्थं यद्वित्रिभलग्नेषुणात्र संस्करणम् ।
जिष्णुजमतं तदुक्तं न मन्मतं वच्मि युक्तिमिह ॥ इति ।

ब्रह्मगुप्तेन ग्रहणे तथा भास्करेण शृङ्गोन्नतौ—

यौ ब्रह्मगुप्तकथितौ किल कोटिकर्णौ ।
ताभ्यां कृते तु परिलेखविधौ यथोक्ते ॥
नास्तीव भाति मम दृग्गणितैक्यमत्र शृंगोन्नतौ सुगणकैर्निपुणं विलोक्यम् ।

इत्यनेन विशिष्टः संस्कार उक्तः । अत एव दृश्यगणिते यथा दृग्गणितैक्यं स्यात्, तथैव सस्कारो देय इत्यभिमतं प्राचीनाचार्याणाम् । परन्तु अदृश्यतिथ्यादिसाधने

इन्दूच्चोनार्ककोटिघ्ना गत्यांशा विभवा विधोः ।
गुणो व्यर्केन्दुदोःकोट्यो रूपपञ्चाप्तयोः क्रमात् ॥
फले शशाङ्कतद्गत्योर्लिप्ताद्यंस्वर्णयोर्वधे ।
ऋणं चन्द्रे धनं भुक्तौ स्वर्णं साम्यवधेऽन्यथा ॥

इत्ययं नवीनः संस्कारस्तिथ्यादिसाधनेन क्रियते पूर्वैरुपेक्षितत्वात् ।

एवमेव ब्रह्मगुप्तकृतब्राह्मस्फुटसिद्धान्ते "संसाध्य स्पष्टतरं बीजं नलिकादियन्त्रेण, तत्संस्कृतग्रहेभ्यः कर्तव्यौ निर्णयादेशौ" इत्यस्य टीकायां भास्करतोऽपि प्राचीनचतुर्वेदाचार्यपृथूदकस्वामिभ्यामुल्लिलखितं यत्—

प्रत्याहं तिथिनक्षत्रयोगस्यानयने विधुः ।
अबीजसंकृतो ग्राह्यो ग्रहणादौ सबीजकः ॥
यत्र यन्त्रवेधादिना ज्ञातं यत्पूर्वैर्गणकैस्ततः ।
ग्रहणादि परीक्ष्येत न तिथ्यादि कदाचन ॥

शृङ्गोन्नतिग्रहयुतिग्रहणोदयास्तछायानिरीक्षणविधावुदये प्रदेयम् ।
बीजं फलं तिथिभयोगविधौ न देयं चन्द्रे प्रदेयमखिलं क्षितिजादिकेषु ॥

कमलाकरोऽपि—

अष्टफलसिद्धचर्थं यथार्काद् युक्तितः कुरु ।
गणितं यद्धि दृष्टचर्थं तद्दृष्ट्युद्भवतः सदा ॥

एभिरिदं फलितं यत्तिथिभयोगाः प्राचीनपद्धत्या साधनीयाः स्वीकरणीयाश्च, यतो वास्तवस्फुटतायै आवश्यकमपि लम्बन-दृक्कर्मसंस्कारं विनैव तिथ्यादिकं यदानीतं तत्र केवलं दृश्यत्वाभिमानमात्रं स्फुटत्वाभिलाषिणां तत्रापि स्थूलत्वापत्तेः प्राचीनमतमेवादरणीयमित्यलं पल्लवितेन ।

**दृश्यत्वम् ( दृश्यम् )**

खगोलीयं किमपि दृश्यं तद्यथातथ्यं दृष्टमेव फलदं भवति, अन्यथा लोका यथावद् दृष्टजन्यफलभागिनो न भवितुमर्हन्ति, सम्यग् दृष्टिमन्तरा दिवा चन्द्रग्रहणं रात्रौ रविग्रहणं पर्वरूपेण कथं न स्वीक्रियते ? यथोक्तमत्र—

सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।
सचैलं तु भवेत् स्नानं सूतकान्तं विवर्जयेत् ॥

इति वृद्धवसिष्ठः ।

"राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम्" इति विष्णुः । "स्नानदानतपःश्राद्धमनन्तं राहुदर्शने" । इति शातातपः ।

संक्रान्तेः पुण्यकालस्तु षोड्शोभयतः कलाः ।
सूर्यचन्द्रोपरागे तु यावद्दर्शनगोचरम् ॥

इति जावालिः ।

दिवा चन्द्रग्रहो रात्रौ सूर्यपर्व न पुण्यदम् ।
सन्धिस्थं पुण्यवद्ज्ञेयं यावद्दर्शनगोचरम् ॥

इति विश्वरूपः ।

अहोरात्रं न भोक्तव्यं सूर्यचन्द्रग्रहौ यदा ।
मुक्ति दृष्ट्वा तु कर्त्तव्यं स्नानदानादिकञ्च यत् ॥

इति विष्णुधर्मोत्तरे ।

ग्रस्तगौ चास्तमानं तु रवीन्दू प्राप्नुतो यदि ।
तयोः परेद्युरुदये स्नात्वाऽभ्यवहरेन्नरः ॥

इति भृगुः ।

अनेनेदं निर्विवादं यद् ग्रहणे दृष्टे सत्येव स्नानजपहोमादिकृतकर्मणां फलं भवति, अन्यथा न ।

दृश्यपक्षपरिपोषणायोद्धृतं प्रमाणवचनं समालोच्यते । यथा वसिष्ठः—

यस्मिन् पक्षे यत्र काले येन दृग्गणितैक्यकम् ।
दृश्यते तेजरूपेण कुर्यात् तिथ्यादिसाधनम् ॥

इदं वसिष्ठसिद्धान्ते नोपलभ्यते, किन्तु वसिष्ठसिद्धान्तमनुसृत्य विष्णुचन्द्रकृतसिद्धान्ते सम्भाव्यते, परन्तु स सिद्धान्तोऽपि सम्प्रति नोपलभ्यते ।

जातकपद्धतौ केशवः—

यन्त्रैः स्पष्टतरोऽत्र जन्मसमयो वेद्योऽथ खेटाः स्फुटाः ।
यत्पक्षे हि घटन्त उद्गम इहास्तर्क्षं सषड्भः स च ॥

अथ च प्रौढमनोरमाटीकाकारकमलकरगुर्हदिवाकर उल्लिखति यत् "ननु ब्राह्मसौरार्यपक्षेषु सत्सु कतमो ग्राह्यो ग्रहसाधनायेत्याशङ्क्य यत्पक्षे हि घटन्ते इति चाह। अर्थाद् यत्पक्षीयो ग्रह आकाशे यथानीतो दृश्यते स एवाश्रयणीय इति। यथोक्तं दामोदरपद्धतौ—

**यान्ति संसाधिताः खेटा येन दृग्गणितैक्यकम्।**
**तेन पक्षेण ते कार्याः स्फुटास्तत्समयोद्भवाः॥**

एतेन ब्रह्म-सौर-आर्यभटपक्षोऽङ्गीकार्यः।

सूर्यसिद्धान्ते—

**शास्त्रमाद्यं तदेवेदं यत्पूर्वं प्राह भास्करः।**
**युगानां परिवर्तेन कालभेदोऽत्र केवलम्॥**

यदिदं शास्त्रं तदेव यत्पूर्वं प्राह भास्करः। किन्त्वत्र केवलं कालभेदः, अर्थात् कालभेदजन्यमेवान्तरं भवितुं शक्नोति। गूढार्थप्रकाशे रङ्गनाथेनाप्युक्तं यत् कालवशेन ग्रहचारे किञ्चिद्वैलक्षण्यं भवतीति युगान्तरे तदन्तरं प्रसाध्य तत्कालस्थितिव्यवहारार्थं शास्त्रान्तरमिव कृपालुनोक्तम्। नान्तरं शास्त्राणां वैधर्म्यं कालभेदजन्यमन्तरं भवतीत्येवंविधोऽर्थोऽसाधुः, वास्तवार्थस्तु केवलं कालभेदः, न त्वर्थभेद इत्येवार्थः समीचीनः। यतो हि सूर्येणान्यस्मिन् युगे समये वा पूर्वोक्तम्, मया तु तदेवाद्यं शास्त्रमिदानीं कथ्यते। कालभेदेन नहि गणितमन्तरितमिति वाच्यम्। परमत्र कालभेदमात्रं तत्तद्युगस्थमिदमेतद्युगस्थमिति नात्र भगणकृतो भेदार्थ इति भट्टाभिमतम्।

एवमेव वसिष्ठसिद्धान्ते—

**इत्थं मण्डलसंक्षेपादुक्तम् शास्त्रं मयोदितम्।**
**विस्रस्ती रविचन्द्राद्यैर्भविष्यति युगे युगे॥**

विस्रस्तीत्यस्य शिथिलमिति पाठं कृत्वान्तरं प्रदर्शितम्, परञ्च नैष पाठः साधुः, यतो विस्रस्तीत्यत्र विस्तृतिरिति पाठः साधुः, यथाऽत्र कमलाकरः—

**इत्थं मण्डलसंक्षेपादिति पद्योत्तरार्धके।**
**विस्तृतिरित्यत्र कृत्वा तु विस्रस्तीति बलान्नराः॥**
**नाशयन्ति वशिष्ठोक्ति चलसृष्टिभ्रमात्स्थिरे।**
**यद्बीजमादृतं धात्रा स्थूलभुक्तिभवं हि तत्॥**
**स्थिरसृष्टौ तु तज्ज्ञानं यत्नैस्तज्ज्ञापकैर्ध्रुवम्।**
**नास्माद् दृशा तदज्ञानाद् नलिकामात्रतः क्वचित्॥**

इत्थं समालोचनयेदं फलितं यत्पूर्वैरपि तिथ्यादिसाधनेन कश्चिन्नूतनः सामयिकः संस्कारोऽपेक्षितः, अपि तु पूर्वोक्तरीत्यैव साधनीयम्।

**सायननिरयणविवादः**

अथ च वेधेन सायना एव ग्रहा आगच्छन्ति, अत एव सायनैव गणना साध्वीत्येव पं० बापूदेवशास्त्रिणामभिप्रेतम्। किन्तु सूर्यसिद्धान्तादौ साधिता ग्रहा निरयना इत्यनेन

शास्त्रिणापि निरयनं पञ्चाङ्गं निर्मितम् । रामदैवज्ञकृतमुहूर्त्तचिन्तामणिपीयूषधारायां तच्छिष्य-गोविन्देन संक्रान्तिप्रकरणे पुण्यकालनिर्णयप्रसङ्गे सायनैव गणना समर्थिता, तत्पुष्ट्यै वृद्ध-वसिष्ठवचनमुद्धृतं तत्र—

**चलसंस्कृततिग्मांशोः संक्रमो यः स संक्रमः ।**
**अजागलस्तन इव राशेः संक्रान्तिरुच्यते ॥**

परन्त्विदं वसिष्ठोक्तग्रन्थे नोपलभ्यते सम्प्रति । पूर्वमप्यासीन्न वेति सन्देहः । धर्मशास्त्रेऽपि न कुत्रापि सायनसंक्रमणफलमुक्तम् । तेन राशिसंक्रमणमेव फलदम्, तत्रैव जप-दानादिधर्मकृत्यमाचरन्ति । वस्तुतस्तदानीं धर्मशास्त्रस्मृतिकालेऽयनांशोपलब्धिर्नासीद् वायनांशा-भावकाल इति कथितुं पार्यते । अन्यथा मेषतुलासंक्रान्त्योर्नाम विषुवसंक्रान्तिरिति कथं स्यात् ? सृष्ट्यारम्भे द्वादशराशिविभागात्मकस्य क्रान्तिवृत्तस्य मेषादिविन्दौ विषुवद्वृत्तेन सह प्रथमः सम्पातः, तथा गोलोपरि महद्वृत्तयोः षड्भान्तरे द्वितीयसम्पातस्य सद्भावात् तुलादावेव विषुवद्वृत्तेन सह द्वितीयो योग इत्यनेनान्वर्थकं नाम मेषतुलादिसंक्रमणस्य । परञ्चेदानीं विषु-वापमवृत्तयोगरूपविषुवच्चिह्नात् प्रायः २३ त्रयोविंशत्यंशान्तरे राशिवृत्ते मेषतुलादिचिह्नं वर्तते, तथापि तदेव निरयणमेषतुलादिचिह्नं पूर्ववद्विषुवन्नाम्नाऽद्यापि व्यवह्रियते, तदनुकूलमेव यज्ञादिकमाचरिष्यते । अतो निश्चितं यद् धर्मशास्त्रव्यवस्था अयनांशभावकालिकीति । यद्यपि अयनांशोपलब्धिकालिका बहवो निबन्धा निबन्धिता निबन्धकारैः, परन्तु तत्र कुत्रापि सायननिरयणसंक्रान्तिविषयकी न चर्चोपलभ्यते । तथेदानीं राशिसंक्रमणमेव वास्तवसंक्रमणं स्वीक्रियते, चलसंक्रमणस्यास्थिरत्वात् ।

**फलिते पञ्चाङ्गस्य प्रभावः**

ज्योतिःशास्त्रस्य मुख्यं कार्यं फलादेश इति पुराणगणकैर्व्याचेष्टितम् । यथोक्तं गोला-ध्याये भास्करेण "ज्योतिःशास्त्रफलं पुराणगणकैरादेश इत्युच्यते ।" फलादेशस्तु-गणितस्कन्ध-विहितेन घटिकादिजलयन्त्रेण छायादिना वा सम्यक् सुपरीक्षितेष्टकालवशात् सुविहितग्रहलग्ना-धीनः । यथोक्तं वाराहेण "तन्त्रे सुपरिज्ञातलग्ने छायाम्बुयन्त्रसंविदिते होरार्थेऽत्र सुरूढे नादेष्टु-र्भारती वन्ध्या ।" भास्करोऽप्यत्र आह—

**नूनं लग्नबलाश्रितः पुनरयं तत्स्पष्टखेटाश्रयम् ।**
**ते गोलाश्रयिणोऽन्तरेण गणितं गोलोऽपि न ज्ञायते ॥**

इत्यनेन ।

स चादेशो लग्नबलाश्रितः, लग्नबलं तु स्पष्टग्रहाश्रितम्, एवं स्पष्टग्रहलग्नबलमाश्रित्य कृतः फलादेशो यथावद्धृदयग्राहीभवितुमर्हतीति न सन्देहलेशः ।

स्पष्टग्रहोऽपि सायनो निरयनो वा ग्राह्य इति मतद्वयं सम्प्रति प्रचलितमिति । वस्तुतस्तु सायनगणनया सम्यक् फलादेशं कर्तुं न पारयामः, यतो हि जातकादिग्रन्थेषु ग्रह-नक्षत्र-लग्नफलपरिपाकाय यद्बलादिकं विवेचितं भावानां स्थितिश्चोद्घोषिता तत्र सायन-निरयन-ग्रहयोर्वा सायन-निरयनलग्नयोश्च महदन्तरं दरीदृश्यते । यतो हि अद्यापि अयनांश-भगणस्य चलत्वात् सायनगणनया निरयणलग्नारम्भकालात् सम्प्रत्युपलब्धत्रयोविंशत्ययनांशानु-

सारेण दिगंशोनचतुर्मिताभिर्घटिकाभिर्वा सार्द्धहोरायाः पूर्वं सायनलग्नप्रवृत्तिः, तथा निरयण-राशिप्रवेशकालात् त्रयोविंशत्यासन्नैः सायनाहोभिः पूर्वमेव सायनरासिप्रवेशः। एवं चेद् ग्रहस्य लग्नस्य च कदाचिद् राश्यन्तरप्रवृत्तित्वात् सृष्ट्यारम्भे राशिवृत्तस्य च समद्वादशविभागेनैव रूप-शील-गुण-धर्म-तत्त्वाद्यनुभूत्यैव राशीनां संज्ञा स्थिरीकृता व्यवहारत्वाच्च। राशिलग्ना-नन्तरयोर्वैषम्यापत्ते राशिग्रहगुणधर्मादिस्वोच्चनीचमित्रशत्रुगृहाद्याश्रित्य फलप्रतिपादने तत्फलपरिपाकव्यवहारे च महद्वैधर्म्यमुपजायते। यथा सायनो ग्रहो मेषस्थो यथोदिष्टफलदो भवति। तस्मिन्नेव क्षणे स एव ग्रहो निरयणो वृषस्थो भविष्यतीति तेन न मेषस्थवत् फलं दातुं समर्थो भविष्यतीति। एवमेव शत्रुराशिस्थो मित्रराशिगतः स्यादिति फल-वैषम्ये लोकजुगुप्सापत्तेरक्षुण्णमूलपरम्परायाः परिपालनाय लोकानुभूत्या ग्रहराशिगुण-धर्मानुकूलादिष्टफलं यथावद् घटेदित्येव निरयणसरण्येव मनोहारिणीत्यनुसरणीया।

**उपसंहारः**

पञ्चाङ्गीयदृश्यादृश्यविषयपरिमन्थनेन निर्यातं यद् दृश्यं ग्रहणादिकं दृश्यगणितपथा, अदृश्यं व्रतदानोपयोगितिथ्यादिकं तु अबीजमदृश्यगणितेन साधनीयम्, यथाऽत्र लेखे निर्दिष्टं पूर्वमेव। तिथि-नक्षत्र-योगादिसाधनस्य केवलं रविचन्द्रावेवाधारभूतौ मूलं कारणम्, तौ च प्राचीनसिद्धान्तेन संसाधितौ स्फुटौ, ताभ्याश्चानीतं तिथ्यादिकं प्रमाणत्वेन लोकप्रतीतिं जनयन्नास्ते, यथा प्रतिवर्षं जनवरीमासस्य १४ चतुर्दशतारिकायां मकरसंक्रान्तिः, तथाप्रैलमासस्य त्रयोदश १३ तारिकायां मेषसंक्रान्तिरद्यापि लोकप्रतीतिमावहति। अनयैव गणनया नीता शुक्लीया पञ्चदशमिता तिथिः पूर्णिमा, तत्सर्वा रात्रिः प्रोज्वला देदीप्यमाना राजते, कृष्णा च पञ्चदशतिथिः अमारात्रिः, सर्वान्धकारमयी। इतोऽन्यथा लोके प्रत्यक्षप्रतीतेरभावादनुपपत्तिः सुनिश्चितैव। अत एव प्राचीनगणितसाधितरविचन्द्राभ्यामेव तिथिभयोगादीनां साधनं समुचित-मार्षञ्चेत्यविकल्पेन स्वीकरणीयम्। भौमादिग्रहाणां वास्तविकौदयास्तसाधने यथापेक्षितः संस्कारो विधेयः, तदर्थं प्राचीनैरपि तात्कालिकबीजादिसंस्कारो विहितः, प्रसिद्धश्च यथावसरं विवेचितं वर्तते। अतस्तत्र सिद्धान्तरीत्यैवानुसरणीया स्थूलत्वापत्तिभिया सारणीं चेद् व्यवहरेत्, तदा साम्प्रतिकोपलब्धबीजेन तथा संस्करणीया यथा सिद्धान्तमनुसरन्ति। एवं धर्मादिकृत्येषु प्राचीनपद्धतेरप्युच्छेदो मा भूदिति। यथोक्तमत्र—

> **बहुद्वारस्य धर्मस्य सूक्ष्मा दूरानुगा गतिः।**
> **तस्मान्न वाच्यो ह्येकेन बहुज्ञेनापि संशयः॥**

सिद्धान्तेष्वपि यत्र यस्य प्रचारः समादरश्च वर्तते तत्र तस्मादेव देशकालानुसारं पञ्चाङ्गं विधेयमिति निर्गलितोऽर्थः।



लघुग्रन्थमाला–२८

अप्पय्यदीक्षितविरचितं

# वृत्तिवार्त्तिकम्




सम्पादकः

प० वायुनन्दनपाण्डेयः

प्राध्यापकः—साहित्यविभागे

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वै० सं० २०३३

# उपोद्घातः

विघ्नव्यूहा विलीयन्ते सकृद् यन्नामकीर्तनात् ।
शिवोत्सङ्गे समासीनमेकदन्तमुपास्महे ॥१॥

यत्पादपद्मकृतसद्मसनोमिलिन्दः. खिन्ते क्वचिन्न नयवर्त्म सुखेन विन्ते ।
आद्यं गुरुं सकलशास्त्रविदां वरिष्ठं रामप्रतापविबुधं तमहं नमामि ॥२॥

ये शास्त्रकाननविलासनिरस्तशङ्काः
पञ्चानना विजयिनोऽधिजगद्विभान्ति ।
कालीप्रसादविबुधेन्द्रवरान् पुनस्तान्
वाक्यप्रमाणपदवेदिगुरून् नमामि ॥३॥

साहित्यशास्त्रे प्राचीनाचार्यैः प्रायो वृत्तिविचारोऽनावश्यकत्वान्न कृतः। काव्यस्यात्मतत्त्वमलङ्कार एवेति मन्वानैस्तैरलङ्कारा निरूपिताः। अलङ्कारश्च वाच्य एवेति तदर्थं [1]क्वचिदभिधावृत्तेर्नाममात्रं केनचिद् गृहीतम् [2]अन्येन लक्षणावृत्तेरपि, परं तत्स्वरूपादिज्ञानाय न्यायमीमांसाशास्त्रे एव शरणीकृते ।

'रीतिरात्मा काव्यस्य' इति वदन् [3]वामनोऽपि क्वचिदेव प्रस्तावशाद् (लक्षणाविषये) यत्किञ्चिदवोचत् ।

प्राचीनतमे 'अग्निपुराणे'[4] यदपि 'अभिव्यक्त्याख्ये' शब्दार्थालङ्कारे अभिधालक्षणाव्यञ्जनादीनामुपपादनं लभ्यते, तदप्यतीव संक्षिप्तम्। उद्देश्य लक्षणपरीक्षादिविधया नैव कृतम् ।

परं यदा आनन्दवर्धनाचार्यः 'काव्यस्यात्मा ध्वनिः, स च वस्त्वलङ्काररसादिरूपस्त्रिविधोऽपि वाच्याद्यर्थविलक्षणोऽर्थसामर्थ्याक्षिप्तः शब्दादेव प्रतिपन्नो व्यञ्जनाव्यापारस्यैव विषयः' इति निर्णिनाय[5]; तदा व्यङ्ग्यार्थमपह्नोतुमशक्नुवद्भिर्न्यायमीमांसादिशास्त्रप्रभावितैर्विद्वद्भिर्व्यञ्जनानिरसनाय प्रायासि। केचनाऽभिधाव्यापारेण (शरवद्दीर्घदीर्घतरेण)[6]अपरे लक्षणयैव तं गतार्थयन्तोऽभियुयुजुः। पुनश्च ध्वनिवादिभिस्ते यदा निरस्ताः, तदा मुकुलभट्टो 'अभिधावृत्तिमातृकाम्' निर्माय ध्वन्यमानमर्थं लक्षणावेद्य[7]मुपपादयाञ्चक्रे। भोजराजो[8]ऽपि अभिधां

---

१. भामहेन स्वकृतकाव्यालङ्कारे 'शब्दाश्छन्दोऽभिधानार्थाः' इत्यनेन प्र० अ० । २. उद्भटेन तत्रैव तद्व्याख्याने । ३. काव्यालङ्कारसूत्रम् ४।३।८ । ४. ३४५ तमेऽध्याये ७.१५ श्लोकं यावत् । ५. ध्वन्यालोके । ६. भट्टलोल्लटप्रभृतयः । ७. लक्षणामार्गावगाहित्वं तु ध्वनेः सहृदयैर्नूतनतयोपवर्णितस्येत्यादिना ११३ तमकारिकाया व्याख्यानान्ते । ८. सरस्वतीकण्ठाभरणे द्वि० प० ।

लक्षणां गौणीमिति त्रिविधां वृत्तिं निरूपयन् व्यञ्जनां नानञ्ज। कुन्तको[1] विचित्रामभिधामुपाददे। महिमा[2]ऽनुमितिमनुमेने।

अतस्तेषां निरासाय काव्ये त्रिविधं शब्दं त्रिविधमर्थम्, त्रिविधां वृत्तिं चोपपादयन् [3]मम्मटस्तत्रापेक्षितं तत्तद्वृत्तीनां स्वरूपं तत्तदर्थप्रतिपादनसामर्थ्यं च निरूपयाञ्चक्रे।

एवं वृत्तिनिरूपणेन साहित्यशास्त्रमपि परिपूर्णतां गतम्। ततस्तदनुयायिनो जयदेव-विश्वनाथादयो दीक्षिततः प्राचीना अर्वाचीनाश्च पण्डितराजजगन्नाथ-आशाधर-राजचूडामणिदीक्षित-अच्युतराय-केशवमिश्रप्रभृतयो वृत्तिं स्वस्वप्रबन्धे न्यभान्त्सुः।

तत्र मम्मटभट्टप्रभावितो वृत्तिविषयेऽस्फुटं विशेषं स्फुटीकर्तुं वृत्तिवार्तिकाभिधं ग्रन्थं जग्रन्थ किलाप्पय्यदीक्षितः।

**ग्रन्थकर्तुरितिवृत्तम्—**

वृत्तिवार्त्तिकस्य रचयिता श्रीमानप्पय्यदीक्षितः सर्वतन्त्रस्वतन्त्रो लोके लब्धप्रतिष्ठश्चासीत्। पण्डितराजजगन्नाथप्रभृतयोऽर्वाचीना आचार्या अस्य वैदुष्येणातिप्रभाविता इत्यनुपदमेवोपजीव्यविचारावसरे स्फुटीभविष्यति।

कोविदकुलकुमुदकलाधरः श्रीदीक्षितोऽयं भारद्वाजकुलकमलदिवाकरो विश्वजिद्याजिनः श्रीरङ्गराजाध्वरीन्द्रस्य तनूजन्माऽऽसीदिति मध्वतन्त्रमुखमर्दनस्योपसंहृतौ तत्कृतेन पद्येन ज्ञायते, तथा हि—

विद्वद्गुरोर्विहितविश्वजिदध्वरस्य श्रीसर्वतोमुखमहाव्रतयाजिसूनोः।
श्रीरङ्गनाथमखिनः श्रितचन्द्रमौलिरप्पय्यदीक्षित इति प्रथितस्तनूजः॥१५६॥

**जन्मकालनिर्णयः**

अयं द्रविडशिरोमणिर्मद्रप्रान्ते मद्रपुरात् पश्चिमदिशि स्थिते श्रीविरिञ्चिपुराभिधे दिव्यक्षेत्रे १५२० तमे खिृस्ताब्दे श्रीमङ्गलाम्बायां जनुरधत्तेति मध्वतन्त्रमुखमर्दनभूमिकायां स्पष्टम्।

सिद्धान्तलेशसङ्ग्रहस्य भूमिकायां ब्रह्मविद्यापत्रिकाकारमनुसृत्य १५५० तमे खिृस्ताब्देऽस्य जनिर्युक्त्योपपादिता। चित्रमीमांसाभूमिकायामेकत्र १५५४ तमखिृस्ताब्दात् १६२६ तमखिृस्ताब्दं यावदस्य स्थितिः (प्रमाणमनुद्धृत्यैव) वर्णिता।

परं वृद्धपरम्पराविसंवादाद् न कोऽपि पूर्वोक्तः कालः श्रद्धास्पदं भजते। यतो हि—पण्डितराजो यदा 'लवङ्गी' इत्याख्यां यवनकन्यां परिणीय दिल्लीश्वरात् 'शाहजहाँन्' इत्याख्याद् लब्धादेशो वाराणसीं प्रतिनिवृत्तः, तदा तम् 'अप्पय्यदीक्षितः' तिरश्चक्रे। जातिवहिष्कृतश्चैकदा पण्डितसभायां सम्मिलितो जगन्नाथोऽप्पय्यदीक्षितप्रेरणया भट्टोजिदीक्षितेन म्लेच्छोऽयमित्युक्त्या निर्भर्त्सितः। तेन खिन्नो

१. वक्रोक्तिजीविते। २. व्यक्तिविवेके। ३. काव्यप्रकाशे द्वि०उ०।

जगन्नाथो भट्टोजिदीक्षितस्य कृतिं प्रौढमनोरमां कुचमर्दनाभिधया टीकया खण्डयाञ्चक्रे। रसगङ्गाधरे बहुशोऽप्पय्यदीक्षितमतं निराकृत्याप्यसन्तुष्यन् 'चित्रमीमांसाखण्डनम्' निर्ममे इत्याप्तोक्तिः। सिद्धान्तलेशसङ्ग्रहस्य भूमिकायामुद्धृतमेकं पद्यमप्येतदर्थकमुपलभ्यते। तथा हि—

दृप्यद्द्राविडदुर्गहग्रहवशान् म्लिष्टं गुरुद्रोहिणा
　　यन्म्लेक्षेति वचोऽविचिन्त्य सदसि प्रौढेऽपि भट्टोजिना।
तत्सत्यापितमेव धैर्यनिधिना यत् सव्यमृद्नात् कुचं
　　निर्बध्याऽस्य मनोरमामवशयन्नप्य्यप्पयाद्यान् स्थितान्॥

पण्डितराजश्च स्वयं शब्दकौस्तुभशाणोत्तेजने ब्रूते यत्—'अप्पय्यदुर्ग्रहविचेतितचेतनानामार्यद्रुहासयमहं शमयेऽवलेपान्' इति। अप्पयदीक्षितश्च द्विसप्ततितमेऽब्दे शिवसायुज्यमभजद् इत्यपि निश्चितम्। दीक्षितः सिद्धान्तलेशसङ्ग्रहस्य भूमिकायां व्याजहार यत्—'वयांसि मम सप्ततेरुपरि नैव भोगे स्पृहा न किञ्चिदहमर्थये शिवपदं दिदृक्षे परम्'। इति।

यष्टुं विश्वजिता यता परिधरं सर्वे बुधा निर्जिता
　　भट्टोजिप्रमुखाः स पण्डितजगन्नाथोऽपि निस्तारितः।
पूर्वेऽर्धे चरमे द्विसप्ततितमस्याब्दस्य सद विश्वजिद्—
　　याजी यश्च चिदम्बरे स्वमभजद् ज्योतिःसतां पश्यताम्[1]॥

इत्यनेनापि पद्येन पूर्वोक्तोऽर्थो द्रढिमानमलभत।

अतो यवनशासकस्य 'शाहजहाँन्' इत्याख्यस्य शासनकाले दीक्षित आसीत्। तस्य च राज्याभिषेकः १६२८ तमे ख्रिस्ताब्दे बभूव। १६५८ तमे ख्रिस्ताब्दे चोरगजिह्वेन ( औरंगजेव ) इत्याख्येन स्वपुत्रेण कारागारे निक्षिप्तः। १६६६ तमे ख्रिस्ताब्दे मृत्युमालिलिङ्गेत्यैतिहासिका वदन्ति। पण्डितराजश्चास्यैव सभापण्डित आसीत्।

नीलकण्ठदीक्षितो नीलकण्ठविजये स्वगुरुमप्पयदीक्षितं वन्दमानो वर्तमानकालिकीं क्रियां प्रायुङ्क्त। तद्यथा—'श्रीमानप्पयदीक्षितः स जयति श्रीकण्ठविद्यागुरुः'[2] इति।

अतस्तत्काले दीक्षितो जीवन्नासीदिति निश्चितम्। नीलकण्ठविजयचम्प्वाश्च रचना १६३९ तमे ख्रिस्ताब्दे जाता। यतः स्वयं कविः कवते—

अष्टत्रिंशदुपस्कृतसप्तशताधिकचतुःसहस्रेषु।
कलिवर्षेषु गतेषु ग्रथितः किल नीलकण्ठविजयोऽयम्[3]॥ इति।

इत्थं नीलकण्ठविजयरचनाकाले जीवतो नलचरितरचनाकाले च स्वर्गतस्यास्य जनिः १५६८ तमे ख्रिस्ताब्दे सम्भाव्यते।

भट्टोजिदीक्षित एतस्मादवरः पण्डितराजश्चातिलघिष्ट आसीत्।

---

१. बालकवेः नलचरिते उ०।　२. नी० क० वि०।　३. तत्रैव।

**बाल्यकालः**

बाल्येऽयं विरिञ्चिनगरादाग्नेये कोणे स्थिते 'अडयप्पला'भिधे ग्रामे पित्रा सह न्यवात्सीत्। अस्य 'विनायकसुब्रह्मण्यम्' इति पिता नाम चकार, परं बान्धवाः स्नेहात् केचन 'अप्पः' इति, अपरे 'अप्पयः' इति, अन्ये 'अप्पय्यः' इति नाम्ना सम्बोधयन्त आसन्, अतस्तदेव नाम लोके ख्यातमभूत्। उपनीतोऽयं स्वजनकादेव सर्वा विद्या अधिजगे। 'तं सर्ववेदसमशेषबुधाभिराजं श्रीरङ्गराजमखिनं गुरुमानतोऽस्मि' इति तदुक्तेः प्रतीयते।

**राज्याश्रयः**

सर्वेषु शास्त्रेषु कृतभूरिश्रममेनं लब्धख्यातिमाहूय 'बेलूरपुरे' कश्चन सामन्तः **चिन्नबोमाभिधः** स्वसभापण्डितं चकार। तत्र च बहुग्रन्थान् निर्ममे इति मध्वतन्त्रमुखमर्दनप्रस्तावनायां स्पष्टम्।

परं कुवलयानन्दस्योपसंहारे दीक्षितोऽब्रवीद् यत्—

**अमुं कुवलयानन्दमकरोदप्पदीक्षितः।**
**नियोगाद् वेङ्कटपतेर्निरुपाधिकृपानिधेः॥ इति।**

वेङ्कटाभिधौ द्वौ राजानौ दक्षिणदेशे बभूवतुः। एको **'विजयानगरम्'** राज्ये बभूव, यस्य स्थितिः १५३५ तमे खिृस्ताब्दे आसीत्। अपरः **पेन्नकोण्डराज्ये** १५८६ खिृस्ताब्दात् १६१३ खिृस्ताब्दं यावदासीत्। तत्र द्वितीयस्यैव कृपाभाजनमासीद् दीक्षित इति सम्भाव्यते।

**धर्मः**

अयमद्वैतवेदान्तसिद्धान्त (शाङ्करमत) समुपासक आसीदिति तदुक्तितोऽवसीयते, यथा—

**आद्रियध्वमिदमध्वदर्शनं व्यध्वगं त्यजत मध्वदर्शनम्।**
**शाङ्करं भजत शाश्वतं मतं साधवस्स इह साक्ष्युमाधवः[२] ॥ इति।**

अयं शिवोपासकः, परं नान्यदेवतादूषको न वा मतान्तरद्वेषीति निर्णीयते, तथाहि—

**शिवं विष्णुं वा यद्यभिदधति शास्त्रस्य विषयं**
**तदिष्टं ग्राह्यं नस्सगुणमपि तद्ब्रह्म भजताम्।**
**विरोधो नातीव स्फुरति नहि निन्दानयविदां**
**न सूत्राणामर्थान्तरमपि भवद्धार्यमुचितम्[३] ॥ इति।**

**वस्तां पिसङ्गं वसनं दिशो वा गरुत्मता यातु ककुद्मता वा।**
**निद्रातु वा नृत्यतु वाऽधिरङ्गं भेदो न मे स्यात् परमस्य धाम्नः[४] ॥ इति।**

अयं ज्योतिष्टोमवाजपेयादिभिर्यज्ञैर्यज्ञपुरुषमयष्ट। अनन्तरं तीर्थयात्राप्रसङ्गेन सम्पूर्णं भारतं परिक्रम्य चिदम्बरक्षेत्रे ७२ तमे वर्षे नटराजमाराधयन् भौतिकं शरीरं

१. न्यायरक्षामणौ चतुर्थः श्लोकः। २. मध्वतन्त्रमुखमर्दने ५७ तमः श्लोकः।
३. तत्रैव प्रथमः श्लोकः। ४. हरिहरशतके।

सन्त्यज्य शिवसायुज्यमवाप। सन्ततयोऽस्य काञ्चीमण्डले चोलमण्डले पाण्ड्यदेशे चाद्यापि विराजन्ते। अनेन शताधिकाः प्रबन्धा निबद्धा इति नीलकण्ठोक्तितो ज्ञायते, तथा हि—"द्वासप्तर्ति प्राप्य समाः प्रबन्धान् शतं व्यधादप्पयदीक्षितेन्द्रः[1]" इति। मध्वतन्त्रमुखमर्दनस्य पुष्पिकायामपि 'चतुरधिकशतप्रबन्धनिर्माणचणस्य श्रीमदप्पयदीक्षितेन्द्रस्य'[2] इत्याद्युक्तेः प्रतीयते।

## कृतयः

राज्ञा सम्मानितो निवेदितश्चायं चतुरधिकशतं प्रबन्धान् निर्ममे। तेषु विंशतितमाः स्वकृतेरेव व्याख्याः सन्ति। द्वादशतमा अन्यग्रन्थटीकाः सन्ति। ते सर्वेऽत्र नाम्ना निर्दिश्यन्ते—

**१. अद्वैतवेदान्तविषयका ग्रन्थाः**

१. नयमञ्जरी, (अद्वैतमतानुसारिणी ब्रह्मसूत्रवृत्तिः), २. सिद्धान्तलेशसंग्रहः, ३. न्यायरक्षामणिः (ब्रह्मसूत्रप्रथमाध्यायव्याख्या), ४. कल्पतरुपरिमलः (कल्पतरुव्याख्यारूपः), ५. रामानुजश्रृङ्गभङ्गः, ६. मध्वतन्त्रमुखमर्दनम्, ७. मध्वमतविध्वंसनम् (तद्व्याख्या), ८. अधिकरणपञ्चिका, ९. तप्तमुद्राविद्रावणम्।

**२. मध्वसिद्धान्तानुसारिणो ग्रन्थाः**

१. न्यायमुक्तावलिः (मध्वमतानुसारिणी ब्रह्मसूत्रवृत्तिः), २. न्यायमुक्तावलीव्याख्या, ३. न्यायरत्नमाला, ४. तद्व्याख्या।

**३. पूर्वमीमांसाविषयका ग्रन्थाः**

१. चित्रपटः (मीमांसाधिकरणश्लोकसंग्रहः), २. विधिरसायनम् (अपूर्वादिविधित्रयविचारः), ३. तद्व्याख्या (विधिरसायनसुखोपयोजिनी), ४. उपक्रमपराक्रमः (उपक्रमप्राबल्यनिरूपणरूपः), ५. पूर्वोत्तरमीमांसावादनक्षत्रमाला, ६. धर्ममीमांसापरिभाषा, ७. मयूखावलिः (शास्त्रदीपिकाव्याख्या)।

**४. रामानुजमतविषयका ग्रन्थाः**

१. यादवाभ्युदयव्याख्यानम्, २. वरदराजस्तवः, ३. वरदराजस्तवविवरणम् (व्याख्या), ४. नयमयूखमालिका (ब्रह्मसूत्रवृत्तिः), ५. पादुकासहस्रव्याख्या, ६. रामानुजतात्पर्यसंग्रहः, ७. तद्व्याख्या।

**५. श्रीकण्ठमतविषयका ग्रन्थाः**

१. नयमणिमाला (ब्रह्मसूत्रवृत्तिः), २. शिवार्कमणिदीपिका (श्रीकण्ठभाष्यव्याख्या), ३. आनन्दलहरी (श्रीकण्ठभाष्यतात्पर्यरूपा) ४. चन्द्रिका (तद्व्याख्या)।

---

१. शिवलीलार्णवे। २. म० त० मु० म० अन्ते।

६. दर्शनविषयका ग्रन्थाः

१. शिवाद्वैतनिर्णयः, २. तत्त्वमुक्तावली, ३. मणिमालिका।

७. व्याकरणविषयकौ ग्रन्थौ

१. नक्षत्रवादावली, २. तिङन्तशेषसंग्रहः।

८. कोशग्रन्थाः

१. नामसङ्ग्रहमाला, २. तद्व्याख्या। ३. शब्दप्रकाशः। ४. अमरकोश-व्याख्या।

९. अलङ्कारशास्त्रीया ग्रन्थाः

१. कुवलयानन्दः, २. चित्रमीमांसा, ३. वृत्तिवार्त्तिकम्।

१०. काव्यग्रन्थाः

१. मार्गवन्धुचम्पूः २. प्रवोधचन्द्रोदयटीका, ३. वसुमती (चित्रसेन-विलासनाटकम्), ४. हंससन्देशटीका, १५. दशकुमारचरितसङ्ग्रहः।

११. पुराणेतिहासविषयका ग्रन्थाः

१. भारततात्पर्यसंग्रहः, २. तद्व्याख्या, ३. रामायणतात्पर्यसंग्रहः, ४. तद्व्याख्या, ५. हरिवंशसारचरितव्याख्या, ६. शिवपुराणतामसत्त्वखण्डनम्।

१२. स्फुटग्रन्थाः

१. पञ्चस्वरवृत्तिः, २. मतसारार्थसङ्ग्रहः, ३. लक्षणरत्नावलीव्याख्या, ४. प्राकृतचन्द्रिका, ५. अधिकरणमाला, ६. अधिकरणसारावलिः।

१३. स्तोत्रग्रन्थाः

१. कृष्णध्यानपद्धतिः, २. दुर्गाचन्द्रकलास्तुतिः, ३. तद्विवरणम्, ४. आदित्यस्तोत्रम्, ५. तद्व्याख्या, ६ अपीतकुचाम्बास्तवः, ७. रत्नत्रयपरीक्षा (हरिहरशक्तीनां माहात्म्यपरा), ८. तद्व्याख्या, ९. पञ्चरत्नस्तुतिः, १०. तद्व्याख्या, ११. शिखरिणीमाला (शिवोत्कर्षप्रतिपादिका), १२. तद्व्याख्या (शिवतत्त्वविवेकः), १३. ब्रह्मतर्कस्तवः, १४. तद्विवरणम्, १५. शिवकर्णामृतम्, १६. शिवार्चनचन्द्रिका, १७. बालचन्द्रिका, १८. तद्व्याख्या, १९. वीरशैवम्, २०. गङ्गाधराष्टकम्, २१. भस्मवादावली, २२. शिवध्यानपद्धतिः, २३. शिवपूजाविधिः, २४. हरिहरस्तुतिः, २५. निग्रहाष्टकम्, २६. आत्मार्पणस्तुतिः, २७. मानसोल्लासः, २८. श्रीविद्यातत्त्वविवरणम्, २९. मार्गवन्धुपञ्चरत्नम्, ३०. तान्त्रिकमीमांसा, ३१. अनुग्रहाष्टकम्, ३२. शिवमहिमकलिकास्तुतिः, ३३. अरुणाचलेश्वरस्तुतिः, ३४. कृष्णध्यानपद्धतिव्याख्या, ३५. जयोल्लासनिधिः, ३६. मार्गसहायस्तोत्रम्, ३७. विष्णुतत्त्वरहस्यम्,

३८. शान्तिस्तवः, ३९. शिवध्यानपद्धतिव्याख्यानम्, ४०. शैवकल्पद्रुमः, ४१. सिद्धान्तरत्नाकरः, ४२. स्तोत्ररत्नाकरः, ४३. मार्गसहायलिङ्गस्तुतिः, ४४. भक्तिशतकम् इति।

ग्रन्थकर्तुरुपजीव्यत्वविचारः

वृत्तिवार्त्तिकस्य प्रणेताऽयमप्पयदीक्षितो व्याकरण-न्याय-मीमांसा-साहित्य-वेदान्त-सांख्ययोग-पुराणागमादिष्वधीतिरित्यत्र नास्ति मनागपि संशीतिस्तद्ग्रन्थ-परिशीलयतां विपश्चिताम्। अतः समेषां शास्त्राणां प्रभावोऽस्य ग्रन्थेषु यत्र तत्र परिलक्ष्यत एव; तथाऽपि वृत्तिवार्त्तिकाभिधोऽयं (लघु) ग्रन्थोऽर्थगौरवयुतः साहित्यशास्त्रस्य ग्रन्थ इति "वृत्तयः काव्यसरणावलङ्कारप्रबन्धृभिः" इति मङ्गल-पद्योक्तेः प्रतीयते। तत्राप्ययं ध्वनिसम्प्रदायस्य, ध्वनिसम्प्रदायाचार्यैरेव व्यञ्ज-नाया निरूपणात्। अतोऽयं ध्वनिकारानन्दवर्धनाचार्य-अभिनवगुप्तपादाचार्य-मम्मटाचार्यजयदेवादिभिः प्रभावित इति वृत्तिवार्त्तिकादेव निश्चीयते। तत्राभिधा त्रिधा रूढिर्योगो योगरूढिश्चेति निरूपयन् जयदेवमनुसरति। जयदेवोऽपि—'रूढयौगिकतन्मिश्रैः प्रभेदैः स पुनस्त्रिधा'[1] इति त्रिधैव निरूपयाञ्चक्रे। नैयायि-कोऽप्ययं यौगिकरूढिरिति चतुर्थं भेदं न मनुते।

अयमानन्दवर्धनेनाभिनवगुप्तपादाचार्येण च प्रभावितो नानार्थस्थलेऽप्रस्तुतेऽर्थं व्यञ्जनां नाङ्गीकरोति। ध्वनिकारिकाकारोऽपि—

आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते।
यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः[2]॥

इति ब्रूते।

यत्र शब्दशक्त्याऽलङ्कार एव प्रकाशते, तत्र शब्दशक्त्युद्भवो ध्वनिः। आनन्दवर्धनोऽपि तत्रैव वृत्तौ 'वस्तुद्वये च शब्दशक्त्या प्रकाशमाने श्लेषः'[3] इत्याह। अत एव शब्दशक्त्युद्भववस्तुध्वनिं नाङ्गीकुर्वन्ति ध्वनिकारादयः। लोचने सङ्कलि-तेषु ध्वनिभेदेषु शब्दशक्तिमूलो वस्तुध्वनिर्न गणितः। एकविध एव शब्दशक्तिमूलोऽ-लङ्कारध्वनिर्गणितः[4]। यदि द्वितीयोऽर्थो व्यङ्ग्यः स्यात्, तदा वस्तुध्वनिमपि गणयेत्।

लोचने[5] तत्रैव चतुर्णां मतानामुपादानं वर्तते, तेषु प्रथमं मम्मटः स्वीकरोति, चतुर्थं दीक्षित इति। परमयं नानार्थस्थले द्वितीयेऽर्थेऽप्यभिधां मन्वानोऽपि मम्मटप्रभावादेव 'शनिरशनिश्च' इति पद्ये 'विरुद्धौ द्वौ त्वदनुवर्तनार्थमेकं कार्यं कुरुत'[6] इति व्यङ्ग्ये शब्दशक्त्युद्भवं वस्तुध्वनिमङ्गीकरोति।

मम्मटप्रभावितोऽपि सर्वथा मम्मटं नानुसरति खण्डयति च बहुशः। यथा विरोधितोदाहरणम्—'भ्रमरतिमलसहृदयताम्' इति पद्ये विषपदेनात्र हालाहलं

१. चन्द्रालोके प्र० म० नवमश्लोके। २. ध्वन्यालोके द्वि० उ० २१ तमा का०। ३. तत्रैव वृत्तौ। ४. तत्रैव ३१ तमकारिकाया लोचने। ५. तत्रैव लोचने २४१–२४२ तमपृष्ठे। ६. वृत्तिवार्त्तिके प्र० परि०।

व्यङ्ग्यमिति। एवं नानार्थस्थले प्राकरणिकेऽर्थे व्यञ्जनाम्[1], सारोपलक्षणां[2] च मम्मटाभिमतं खण्डयति। क्वचिद् वैशिष्ट्यमपि, यथा— निरूढलक्षणायामपि शुद्धगौणभेदेन द्वैविध्यम्[3]। एवं फललक्षणाया जहदजहल्लक्षणाख्यो भेदः। जहदजहल्लक्षणास्वीकारे वेदान्तिभिः प्रभावितस्तैरेव भागत्यागलक्षणा, (जहदजहल्लक्षणा[4]) स्वीकृता। व्याकरणप्रभावितश्च रूपके लक्षणां नाङ्गीकरोतीति। शुद्धसाध्यवसानां जहल्लक्षणायामन्तर्भावयति[5] च। **'राजकीयः पुरुषो राजा'**, **'इन्द्रार्था स्थूणा इन्द्रः'** **'अतक्षाऽयं तक्षा'** इत्याद्युदाहरणानि[6] काव्यप्रकाशतो गृहीतानि।

जहल्लक्षणायामभेदाभिव्यक्तौ काव्यप्रकाशमेव प्रमाणतयोपन्यस्यति। **'तटादीनां गङ्गादिशब्दप्रतिपादने...... सम्प्रत्ययः'**[7] इति। रत्नाकरमप्यत्रैवोद्धरति **'स्रोतस्तीरयोरेकशब्दबोध्यत्वेन........प्रयोजनसिद्धिः'**[8] इति। रूपकेऽभेदप्रतिपत्तिं मम्मटोऽप्युपपादयति **'तद्रूपकमभेदो य उपमानोपमेययोः'**[9] इति। दीक्षितोऽपि तथैवेति।

**'तव प्रसादात् कुसुमायुधोऽपि'** इति पद्ये कुसुमायुधपदेन योगशक्त्या (अवयवार्थप्रतीतौ) तदायुधस्यासारत्वप्रतीतावपि कामवाचकपदं नोपात्तमिति शङ्कायां साहित्यचिन्तामणिकृतः (वेमभूपालस्य) समाधानमुद्धरति। अत्रैव प्रसङ्गे एकावलीकारं विद्याधरमपि स्मरति। तथा आश्रयाश्रयिभावसम्बन्धेन लक्षणायामलङ्कारसुधानिधिं श्लेषरूपकयोर्विभागव्यवस्थायां चक्रवर्तिनं च प्रमाणतयोद्धरति। अत एतेषामपि प्रभावो दीक्षिते वर्तत इति।

## वृत्तिवार्त्तिकस्योपजीवकत्वविचारः

पण्डितेन्द्रो जगन्नाथस्तथा राजचूडामणिदीक्षितश्चोभौ वृत्तिवार्त्तिकेन प्रभाविताविति तद्ग्रन्थाध्ययनेन ज्ञायते। तथा हि—पण्डितराजः 'केवलसमुदायशक्तिः, केवलाऽवयवशक्तिः, समुदायावयवशक्तिसङ्करश्चेति त्रिविधामभिधामभिधाय **'एता एव विधा रूढि-योग-योगरूढिशब्दैर्व्यपदिश्यन्ते'**[10] इत्याह। एतेषां लक्षणे दीक्षितेनोक्तम्—**'अखण्डशक्तिमात्रेत्यादि अवयवशक्तिमात्रेत्यादि अवयवसमुदायोभयशक्तिमात्रेत्यादिः'**। तदेव पण्डितराजेन समुदायशक्तिरित्यादिपदेन भेदो विहितः।

अथ च मण्डपनिशान्तकुवलयादिशब्देषु का गतिरित्याशङ्क्य 'अत्र केचित्' इत्यनेन दीक्षिताभिमतमेव समाधानमाह। तथा हि **'अश्वगन्धारसं पिबेत्'** इत्यत्र केवलसमुदायशक्तिः, अश्वगन्धावाजिशालेत्यत्र केवलयोगशक्तिरित्याह[11]। दीक्षितोऽपि, योगरूढिमतः शब्दस्यार्थविशेषेऽवयवार्थस्यानन्वयात् समुदायार्थमात्रे विश्रान्तौ [12]रूढिशक्तिमुपपादयति।

---

१. तत्रैव। २. तत्रैव द्वि० प०। ३. तत्रैव। ४. वृत्तिवा० द्वि० प०। ५. तत्रैव। ६. तत्रैव। ७. तत्रैव। ८. तत्रैव। ९. का० प्र० द० उ०। १०. र० ग० द्वि० आ० अभि० नि०। ११. तत्रैव। १२. वृ० वा० प्र० प०।

एवं 'निरूढायामपि गौणीत्वशुद्धत्वाभ्यां द्वैविध्यमामनन्ति'[1] इत्युक्तावपि दीक्षितस्य प्रभावः स्फुटं लक्ष्यते।

एवं पण्डितराजः शब्दशक्त्युद्भवं वस्तुध्वनिं रूपके लक्षणां च स्वीकुर्वन् अप्पय्यदीक्षितमतं सबहुमानम् 'अन्ये तु, 'नव्यास्तु' इत्यनेनोपपादयाञ्चक्रे[2]।

मम्मटप्रभावितोऽपि पण्डितराजः उपादानलक्षणलक्षणेत्यादिशब्दान् परित्यज्य जहत्स्वार्थाऽजहत्स्वार्थेत्यादिशब्दान् लक्षणाभेदेषु प्रायुङ्क्तेति[3]।

एवमेव राजचूडामणिदीक्षितोऽपि काव्यप्रकाशस्यैव व्याख्यानमयं 'काव्यदर्पणम्' रचयन् अभिधाभेदे दीक्षितमतमेवोपपादयति। लक्षणाभेदेऽपि दीक्षितमेवानुहरति। उदाहरति च तदुदाहरणमेव प्रायो यत्किञ्चिद् विपर्यासेन[4] :—

शक्यसादृश्यसम्बन्धरूपा गौणीति सा मता।
लावण्यनिधिरेषैव प्रवीणा युववञ्चने॥

इत्यस्य वृत्तौ 'ननु सादृश्यं न सम्बन्धः' इत्यादिना दीक्षितमतमेवानुवदति[5]।

परं यत्र मम्मटं विरुणद्धि दीक्षितस्तत्राक्षरशो वृत्तिवार्त्तिकमनुवाद्य महता प्रयासेन खण्डयति इत्यनुपदमेव प्रतिपाद्यविषयविवेचनावसरे स्फुटीभविष्यति।

## प्रतिपादनशैली

वृत्तिविषये विशेषाऽभिधानाय दीक्षितनिर्मितमिदं वृत्तिवार्त्तिकमतिसरलया हृदयहारिपद्धत्या विवेच्यमर्थं स्फुटमर्पयति। मनागपि क्वचिदनपेक्षितशब्दजालजटिलतानोपलक्ष्यते, न वा क्वचनार्थदुरूहता हृदयमधिरोहति। अतिसूक्ष्मतत्त्वोपपादनेऽपि विषयः स्फुटं प्रकाशते। प्रतिपाद्यं वस्तु निर्भ्रान्तं मनोमुकुरे प्रतिबिम्बते सचेतसाम्।

अत्रोदाहृतपद्यान्यतीव हृद्यानि भगवद्विषयकरतिभावमयानि ललितानि प्रायः स्वरचितानि सन्ति। शृङ्गाररसविषयकमेकमेव पद्यम्, तदप्यतीव हृद्यं रसिकानां हृदयमपहरति। तथा हि—

परारिसन्दर्शितसन्निवेशौ परुत्पराभूतसरोजकोशौ।
इमावियन्तौ पुनरेषमस्ते कुचौ कियन्तौ परतो भवेताम्[6]। इति।

शास्त्रे, काव्ये चास्य समानरूपेण विलक्षणैषाऽव्याहता गतिः। प्रायः सर्वाण्युदाहरणपद्यानि प्रसादमाधुर्यगुणाभिव्यञ्जकानि वैदर्भीरीतिगुम्फितानि, क्वचिद् गौणीविलसितानि कवेर्भक्तिप्रवणतां द्योतयन्ति। पद्यान्तर्वर्तीनि सर्वाणि पदानि सार्थकानि साभिप्रायगर्भाणि सन्त्यतो नारुन्तुदानि रूक्षाणि वा क्वचिदपि मनागप्यर्थप्रतीतिं न स्थगयन्तीत्यहो अस्य कवित्वम्!

१. र० गं० द्वि० आ० ल० नि०। २. र० गं० द्वि० आ० नानार्थनिरू० ल० नि० च। ३. तत्रैव। ४. काव्यदर्पणे द्वि० उ०। ५. तत्रैव २४ तमका० वृत्तौ। ६. वृ० वा० चेष्टोदाहरणे प्र० प०।

एवं हि दृश्यते लक्षणग्रन्थेषु यान्युदाहरणान्युपलभ्यन्ते प्रायशः शृङ्गारमयानि, तान्यपि परकीयाविषयकत्वेनाभासमयानि, यथा—**'सा पथिक रात्र्यन्धकशय्यायां मम'**[1] इत्यादीनि। इत्याक्षेपो मार्जितोऽनेन वृत्तिवार्त्तिके उदाहरणानुरूपाणि सुमधुरललितोचितसरसानि भक्तिभावमयानि काव्यानि रचयतेति न तिरोहितं विपश्चिताम्। अतो नात्र **'काव्यालापांश्च वर्जयेत्'** इयादिस्मृतिवचनानामवकाशः।

## वृत्तिवार्त्तिकम् इत्यभिधाने मूलम्

वृत्तिवार्त्तिकस्य प्रतिपाद्यो विषयो 'वृत्तिविषये विशेषः'। तत्र **'किं नाम वृत्तित्वम्'**[2] इति जिज्ञासायां ग्रन्थकारः प्रायो मौनमेवाललम्बे, वृत्तिसामान्यस्य लक्षणाऽकरणात्, तत्प्रतिपाद्यत्वाभावात्। प्रायः कोऽप्यालङ्कारिको वृत्तिसामान्यलक्षणं न लक्षयाञ्चक्रे। परं तेषां ग्रन्थानां परिशीलनेन ज्ञायते यत् तेषु केचन व्यापाररूपाम्,अपरे सम्बन्धरूपां वृत्तिं मन्वते। तद्यथा मुकुलभट्टः—**'शब्दव्यापारतो यस्य प्रतीतिस्तस्य मुख्यता'** इति निजगाद। मम्मटोऽप्याह—**'स मुख्योऽर्थस्तत्र व्यापारोऽस्याभिधोच्यते'**[3] इति। अर्थाद् मुख्यार्थप्रतिपत्तिहेतुभूतशब्दव्यापारोऽभिधेति। दीक्षितोऽपि शक्त्या प्रतिपादकत्वमभिधेत्याद्यभिदधानः प्रतिपत्त्यनुकूलशब्द व्यापाररूपां वृत्तिं मनुते। एवं वृत्तयः शब्दव्यापाररूपाः।

**आशाधरभट्टश्च 'वर्तते = अर्थे प्रवर्तते शब्दोऽनयेति वृत्तिः'**[4] इत्याह। पण्डितेन्द्रो जगन्नाथश्च सम्बन्धरूपां वृत्तिं मनुते। यथाह—शक्त्याख्यः शब्दस्यार्थगतोऽर्थस्य च शब्दगतः सम्बन्धविशेषोऽभिधा[5]। शक्यसम्बन्धो लक्षणेत्यादि।

एवं व्यापाररूपायां वृत्तौ व्यापारस्य प्रेरणागर्भत्वेन **'अस्माच्छब्दादयमर्थो बोद्धव्यः'** इत्यादिरूपः सम्बन्धिज्ञानविषयाऽपरसम्बन्धिस्मारकत्वरूपो 'वा' व्यापारः। एवं **'शाब्दबोधजनकोपस्थितिजनकज्ञानविषयसम्बन्धत्वं वृत्तित्वम्'** इति फलितम्। अर्थात् शाब्दबोधजनिका या उपस्थितिस्तज्जनकं यद् वृत्तिज्ञानं तस्य विषयो वृत्तिः, सा च सम्बन्धरूपेति लक्षणसमन्वयः। अथवा **'शाब्दबोधजनकपदपदार्थसम्बन्धत्वं वृत्तित्वम्'** इति ज्ञेयम्।

न चैकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीति रीत्या पदं। पदार्थं स्मारयति, न तु शाब्दबोधं जनयतीति कथं शाब्दबोधजनकेत्यादिलक्षणं युक्तमिति शङ्क्यम्, पदादपि शाब्दबोध एव जायते, न पदार्थस्मृतिः; अन्यथाऽवान्तरवाक्यार्थबोधानन्तरं पदार्थस्मृतेर्नष्टत्वान् महावाक्यार्थबोधानुपपत्तेः। परमिदं द्वितीयं लक्षणं ध्वनिकारादीनां प्रतिकूलम्, यतस्ते कथयन्ति **'पदानां स्मारकत्वेनावाचकत्वात्'**[6] इति।

**स च सम्बन्धः क्वचित् साक्षात्, क्वचित् परम्परारूपः।**

---

१. ध्व० लो० प्र० उ०। २. अ० वृ० मा०। ३. का० प्र० द्वि० उ०। ४. त्रिवेणिकायाम्। ५. र० गं० द्वि० आ० अ० नि०। ६. ध्व० लो० तृ० उ० प्र० का०वृ०।

सा च वृत्तिस्त्रिधा—१. अभिधा, २. लक्षणा, ३. व्यञ्जनेति भेदात् ।

तासु वृत्तिषु वृद्धैरनुक्तं विशेषमुपपादयितुं कृतोऽयं ग्रन्थो वृत्तिवार्त्तिकपदेनाभिधीयते, यतो हि—

उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते ।
तं ग्रन्थं वार्त्तिकं प्राहुर्वार्तिकज्ञा विचक्षणाः ।।[1] इति ।

सर्वेषु शास्त्रेषु प्रथमं सूत्रम्, तस्योपरि भाष्यम्, भाष्योपरि वार्त्तिकं वर्तते । ऋते व्याकरणशास्त्रात् । व्याकरणे सूत्रम्, तदुपरि वार्त्तिकम्, द्वयोरुपरि भाष्यम्, अतोऽस्य भाष्यस्य महाभाष्यत्वं सिद्धम् । अत्राभिधालक्षणादीनामुक्तविषयाणां नानार्थस्य द्वितीयार्थे व्यञ्जनेत्यादिदुरुक्तानाम्, तत्रानुक्तानां विशेषाणां चोपपादनादस्य वार्त्तिकत्वं युक्तमिति युक्तमस्याभिधानम् 'वृत्तेर्वर्तनाद्वाऽस्याभिधानं वृत्तिवार्त्तिकम्' इति ।

**प्रतिपाद्यविषयः**

तत्रादौ प्रारिप्सितप्रतिबन्धकदुरितदूरीकरणाय विबुधवृन्दमिलिन्दपरिवन्दितपादारविन्दमकरन्दां शारदां समुपास्य तत्रभवान् दीक्षितः काव्यसरणौ समुपपादितासु शक्तिभक्तिव्यक्त्याख्यासु तिसृषु वृत्तिषु साहित्यशास्त्रप्रबन्धृभिर्वृद्धैः क्वचित् क्वचिदस्फुटीकृतान् विशेषान् स्फुटीकर्तुं वृत्तिवार्त्तिकाभिधमर्थगौरवान्वितं लघुग्रन्थं ग्रन्थन्नभिधां लक्षयति—'शक्त्या प्रतिपादकत्वमभिधा'[2] इति ।

**अत्राक्षेपः**

अत्र पण्डितराजो जगन्नाथो दीक्षितकृताभिधालक्षणं युक्तिविरोधादात्माश्रयदोषदूषितत्वाच्च तुच्छमित्यभिधत्ते[3] । तथा हि—इयमभिधा शब्दवृत्तिः, तस्याश्च ज्ञानं शब्दजन्यार्थोपस्थितौ कारणम् । तल्लक्षणं 'शक्त्या प्रतिपादकत्वम्' इत्युच्यते । प्रतिपादकत्वं नाम प्रतिपादकवृत्तिधर्मविशेषः । प्रतिपादकश्च शाब्दप्रतिपत्तौ कारणभूतः शब्द एव । एवं शब्दगतप्रतिपत्तिकारणतेति फलितम् । शब्दः प्रतिपत्तिहेतुरित्येतावन्मात्रज्ञानेनार्थोपस्थितेरभावात् ।

यदि प्रतिपादकत्वं प्रतिपत्त्यनुकूलशब्दव्यापारः, स च ज्ञातः सन्नेवोपयुज्यते, नाज्ञात इति, तदपि न युक्तम्, यतो हि भवता लक्षणे शक्त्येत्युपात्तम्, अतः शब्दनिष्ठाऽर्थनिष्ठा वा काचन शक्तिरेव प्रतिपत्तिहेतुतया विवक्षिता । सा एवाभिधा । एवमभिधया प्रतिपादकत्वमभिधेति लक्षणं फलितम् । इत्थमभिधाज्ञानाय कृते लक्षणेऽभिधाज्ञानस्यापेक्षितत्वादात्माश्रयदोषोऽसङ्गतिश्च स्फुटाविति ।

**परिहारः**

**नागेशश्च**[4]—शक्त्या इत्यत्र 'प्रकृत्यादिभ्य उपसंख्यानम्' इति वार्त्तिकेनाभेदे तृतीया । धान्येन धनवानितिवत् । एवं 'शक्त्यभिन्नप्रतिपत्त्यनुकूलो व्यापारोऽभिधा' इत्यर्थेन नात्माश्रयोऽसङ्गतिर्वेति समादधे ।

---

१. पराशरोपपुराणे ।　　२. वृ० वा० प्र० पृ० ।　　३. र० गं० द्वि० आ० ।
४. तत्रैव गुरुमर्मप्रकाशे ।

न च सामान्यविशेषयोरभेदान्वय इति नियमात्, सामान्यविशेषयोरेवाभेदान्वयो भवति। यथा धान्येन धनवानित्यत्र धान्यं विशेषधनम्, धनपदेन च सामान्यधनं विवक्षितम्। एवमत्र धान्याभिन्नेन धनेन तद्वानिति बोधः। परमत्र तु शक्तिरपि विशेषोऽभिधापि विशेष एवेति विशेषयोः कथमभेदान्वय इति शङ्क्यम्? शक्तिपदेनात्र वृत्तेर्विवक्षितत्वात् **'तिस्रः शब्दस्य शक्तयः'**[1] इति विश्वनाथोक्तेः। लोचने[2]ऽपि बहुशः शक्तिपदमेव वृत्त्यर्थे प्रयुक्तमिति शक्तिपदं सामान्यशक्तिवाचकम्, अभिधापदं च विशेषवाचकमिति तयोः सामान्यविशेषभावसत्त्वादभेदान्वयोपपत्तेः।

## अभिधाभेदः, तल्लक्षणं च

साऽभिधा त्रिधा—१. रूढिः, २. योगः, ३. योगरूढिभेदात्।

तत्र रूढेर्लक्षणम्—'अखण्डशक्तिमात्रेणैकार्थप्रतिपादकत्वं रूढिः' इति। यत्रावयवार्थस्याप्रतीतिः, यत्र वाऽवयवार्थस्य प्रतीतावपि तस्य बाधस्तत्राखण्डशक्तिः (समुदायशक्तिः)। यथा—मणिनूपुरादिशब्दानामवयवार्थस्य प्रतीतिरेव नास्ति। अतिमुक्तशब्दस्य मुक्तामतिक्रान्तोऽतिमुक्त इत्यवयवार्थस्य प्रतीतावपि वासन्तीरूपेऽर्थे तस्य बाध इति अखण्डशक्त्यैव बोधः। अतिमुक्तादिशब्दानां यत्रैकस्यैव वासन्तीरूपस्यार्थस्य बोधोऽभीष्टः, तत्रैव रूढिः, अत एव लक्षणे एकग्रहणं सार्थकमिति।

**'अवयवशक्तिमात्रसापेक्षं पदस्यैकार्थप्रतिपादकत्वं योगः'** इति। यत्र समुदायार्थस्याप्रतीतिः, यत्र वा प्रतीतस्यापि समुदायार्थस्यावयवार्थेऽसम्बन्धः, तत्रावयवशक्तिः (योगशक्तिः)। यथा—**'ऊर्ध्वं विरिञ्चिभवनात् तव नाभिपद्मात्'** इत्यादिपद्ये विरिञ्चिभवननाभिपद्मादिशब्दानां विरिञ्चेः = ब्रह्मणोर्भवनमित्याद्यर्थो यौगिक एव, न समुदायार्थः। **'सोढः सतां बत निशान्तमुपागतानाम'** इति पद्यांशे निशान्तशब्दस्य समुदायशक्त्या गृहरूपस्यार्थस्य प्रतिभासेऽपि तस्य निशाया अन्तमिति निशावसानरूपेऽर्थे सम्बन्धाभावादवयवशक्तिरेव। **'अवयवसमुदायोभयशक्तिसापेक्षमेकार्थप्रतिपादकत्वं योगरूढिः'** इति।

यथा—**'कुर्वन् प्रदक्षिणमुपेन्द्रसुरालयं ते'** इति पद्यांशे सुरालयशब्दस्य **'सुराणामालयः'** इत्यवयवशक्त्या 'रत्नसानुः सुरालयः' इति कोशात् समुदायशक्त्या च सुमेरोर्बोधे योगरूढिरिति।

## पण्डितराजकृताक्षेपपरिहारः

अत्र रूढ्यादीनां लक्षणत्रयेऽपि पण्डितराजेन दोष उद्घाटितः **'अभिधालक्षणोक्तदूषणानामिहापि दुर्वारत्वात्'**[3] इत्यादिना। अर्थाद् यथा 'शक्त्या' इत्यस्याभिधालक्षण उपादानादात्माश्रयासङ्गतिदोषौ समापततः, तथैव। रूढ्यादिलक्षणेष्वपि शक्तिपदोपादानेन तौ दोषौ बलादापतत इति।

---

१. सा० द० द्वि० प० । २. ध्व० लो० लोचने ६२ पृ० चौ० प्र० ।
३. र० ग० द्वि० आ० अभिधानिरूपणे ।

परं यथाऽभिधादोषौ पूर्वं वारितौ तथैवात्रापि वारणीयाविति न पुनर्विशेषवक्तव्यतामर्हति ।

**विशेषः**

अत्र **पण्डितराजो**[1] यौगिकरूढिरित्याख्यश्चतुर्थभेदमपि केषाञ्चिन्मते प्रतिपादयति । तद्यथा—अश्वगन्धाश्वकर्णमण्डपनिशान्तकुवलयादिपदेषु का शक्तिरित्याशङ्क्य, **'अश्वगन्धारसं पिबेत्'** इत्यादावोषधिविशेषे केवलरूढिशक्तिः । अश्वस्य गन्धो यत्र सेति वाजिशालाऽर्थे केवलयोगशक्तिः । योगरूढिशक्त्योर्द्वयोरप्यर्थभेदेनैकस्मिन् शब्दे विद्यमानेऽपि परस्परान्वयायोग्यार्थप्रतिपादकत्वेनात्र न तयोः सङ्कर इति समाधायान्येषां मते सङ्करस्य द्वौ भेदौ योगरूढिः, यौगिकरूढिश्च, तत्र योगरूढेरुदाहरणं पङ्कजादिशब्दाः, यौगिकरूढेश्चाश्वगन्धादय इति निरूप्याह **'चतुर्थ एवाऽयमभिधाया भेद इत्यप्यन्ये'**[2] इति । तत्रान्य इति पदेन **'नैयायिकाः'** गृहीताः, यतो हि यत्र यौगिकार्थरूढचर्थयोः स्वातन्त्र्येण बोधः, तद् यौगिकरूढमिति । यथा—**'उद्भिदादि'**पदम् । उद्भिद्पदेनोद्भेदनकर्त्ता तरुगुल्मादिरपि बुध्यते यागविशेषोऽपीत्युक्तेः[3] ।

प्रथमसमाधानं तु दीक्षितरीत्यैवोक्तम्, यतो हि दीक्षितोऽपि योगरूढिमतः शब्दस्यार्थविशेषेऽवयवार्थस्यानन्वयात् समुदायार्थमात्रे विश्रान्तौ रूढिशक्तिं स्वीकरोति । यथा—**'उल्लासयत्युदरबन्धनिबद्धदिव्य .... नाभ्युद्गताम्बुरुहकुड्मलपङ्क्तिशोभाम्'**[4] इति पद्येऽम्बुरुहपदस्य भगवतो नाभिपद्मेऽवयवार्थस्यासम्बन्धाद् रूढिः । (अम्बुरुहपदस्याम्बुनि रोहतीति अवयवार्थस्य भगवतो नाभ्युद्गते पद्मेऽन्वयाभावाद् रूढिः) । एवं **"कह्लारकैरवमुखेष्वपि पङ्कजेषु"**[5] इत्यत्र पङ्कात् जातं पङ्कजमिति योग एव, न पुनः समुदायशक्तिः ।

एवं योगरूढेरुदाहरणे **'पक्षद्वयक्रुशिमपोषविभाव्यमाने'** इत्यादिपद्यघटकसुरालयशब्दस्य सुराणामालय इत्यवयवशक्त्या समुदायशक्त्या च कनकाचले योगरूढिः ।

अत्र सुरालयशब्दस्य हेमाद्रौ रूढिरेव, न योगरूढिः । तपस्यतीन्दुरिति चन्द्रकर्तृकतपस्योत्प्रेक्षणेन सुरालयपदस्य योगशक्तिलभ्यार्थस्याभेदाध्यवसायेन निर्वाहादिति न शङ्क्यम् । तत्रैवावयवार्थस्यापि सम्भवादभेदाध्यवसायस्य परमुखस्य निरीक्षणायोगात् । यौगिकार्थप्रतीतेः सर्वानुभवात् ।

अत्रावयवशक्त्यैव निर्वाहे रूढिकल्पनाऽपार्थेत्यपि न शङ्क्यम्, 'रत्नसानुः सुरालयः' इति कोशात् सुरालयशब्दस्य हेमाद्रौ समुदायशक्तेरपि सिद्धेः ।

अत एव योगरूढिमत्पदसत्त्वे पुना रूढिपदप्रयोगे पुनरुक्तदोष उल्लसति । यथा—**'भद्राय भवतु भवताम्'** इति पद्ये **'दिवसारम्भविकस्वरनीरजनलिनाभिरामतरनयनः'**[6] इत्यत्र नीरजनलिनपदोपात्ते । परं यत्र योगरूढिमत्-

१. तत्रैवाभिधाभेदनिरूपणे । २. र०गं०द्वि०आ० अभि०नि० । ३. न्या०सि०मु० श०ख० । ४. वृ०वा०प्र०प० । ५. तत्रैव । ६. तत्रैव ।

पदस्यावयवशक्त्या प्रतीतेऽर्थे एव विश्रान्तिः, तत्र रूढिमत्पदान्तरप्रयोगेऽपि न पुनरुक्तदोषः, यथा—'**प्राप्तुं तवाधररुचामवलोकनेन नालं सहस्रनयनः स वृषापि तृप्तिम्**'[1] इत्यत्रावलोकनप्रकर्षप्रत्यायनाय कृतस्य सहस्रनयनपदप्रयोगस्य नेत्रगत-सहस्रसङ्ख्यात्वप्रत्यायन एव विश्रान्तेः। एवं क्वचिद् योगरूढिमत्पदस्य समुदायार्थमात्रे विश्रान्तिः, यथा—अम्बुरुहपदस्य भगवन्नाभिपद्मे। क्वचित् समुदायार्थस्यान वयादवयवार्थमात्रे विश्रान्तिः, यथा—पङ्कजपदस्य कुमुदादिष्विति। [2]नैयायिकास्त्वेतादृशस्थले लक्षणामङ्गीकुर्वन्ति।

## संयोगो विप्रयोगश्चेत्यादिकारिकाया उदाहरणे विशेषः

इत्थं त्रिविधामभिधां निरूप्यानेकार्थस्य शब्दस्याभिधानियमनाय संयोगादयः सोदाहरणं निरूपिताः। तत्र विरोधितायाः अभिधानियामकत्वे 'रामरावणयोरिव' इत्युदाहरणम्। अत्र रामशब्दस्य दाशरथौ जामदग्न्ये बलरामे च शक्तौ सत्यामपि रावणेन सह दाशरथेरेव वध्यघातकभावविरोधाद् रामपदस्य दाशरथावभिधा नियम्यते।

## मम्मटस्य खण्डनम्

मम्मटाचार्या[3] विरोधिताया उदाहरणम् '**रामार्जुनगतिस्तयोः**' इत्याहुः। तत्र दीक्षितस्याक्षेपः—रामार्जुनपदयोर्वध्यघातकभावविरोधाद् रामपदस्य भार्गवे, अर्जुनपदस्य कार्तवीर्य्येऽभिधा। विरोधेन नियम्यते इति प्राचीना आहुः, तन्न सम्यक्, यतो ह्यत्र रामपदमर्जुनपदं चोभयं नानार्थकम्, तत्र रामपदस्य पूर्वं भार्गवेऽभिधायां नियमितायां सत्यां पुनर्भार्गवस्य कार्तवीर्य्येण सह वध्यघातकभावविरोधप्रतिसन्धानेनार्जुनपदस्य कार्तवीर्येऽभिधाया नियमनं स्यात्। अर्जुनपदस्य कार्तवीर्य्येऽभिधानियमने सति तद्विरोधप्रतिसन्धानेन च रामपदस्याभिधानियमनमित्यन्योन्याश्रयदोषः।

तस्मादन्यतरस्यैकार्थकत्वे एव स्मृततद्विरोधेन नानार्थपदस्याभिधानियमनमिति मदुक्तमेवोदाहरणम् '**रामरावणयोरिव**'इति युक्तम्, '**रामार्जुनगतिस्तयोः**' इति तु शब्दान्तरसन्निवेरुदाहरणं युक्तमिति।

## दीक्षितमतखण्डनम्

अत्र पण्डितराजो दीक्षितमतं निराकुर्वन्नाह[4]—'रामरावणयोरिव' इत्युदाहरणं रामलक्ष्मणावितिवत् साहचर्य्यस्यैव युक्तम्, न विरोधितायाः।

अत्रेदं नाशङ्कनीयं यद् रामनिष्ठं लक्ष्मणसाहचर्य्यं प्रसिद्धम्, न रावणसाहचर्य्यमिति। अन्येन सहापरस्य प्रसिद्धः सम्बन्ध एव साहचर्य्यपदार्थत्वात्। नानार्थपदसमभिव्याहृतपदार्थान्तरस्य प्रसिद्धः सम्बन्धः साहचर्यमित्युक्तेः।

१. वृ० वा० प्र० प०। २. न्या० सि० मु० श० ख०। ३. का० प्र० द्वि० उ०।
४. र० गं० ध० द्वि० आ०।

एवं यथा पितृभ्रातृजायापत्यभृत्यनगरीणां सम्वन्धो लोके प्रसिद्धस्तथा शत्रोः सम्वन्धस्यापि लोके प्रसिद्धत्वात् तदपि, साहचर्यम् ।

अस्यां स्थितौ शत्रुसम्वन्धस्य साहचर्यान्तर्गतस्यापि किञ्चिद् वैलक्षण्येन विरोधितायाः पृथग् नियामकत्वाङ्गीकारे मित्रत्वादेरपि पृथग् गणनापत्तेः । तस्माद् 'रामरावणयोरिव' इति विरोधिताया भवदुक्तमुदाहरणमप्ययुक्तमेव ।

यच्च दीक्षितेनोक्तम्—**'द्वयोः पदयोरेकतरस्य निश्चितार्थकत्वे ( एकार्थकत्वे ) अपरस्य नानार्थकत्वे स्मृततद्विरोधेन नानार्थपदस्याभिधानियमनम्'** इति, तदपि न सङ्गतम्; हरिनागस्येत्यत्रोभयोरपि पदयोर्नानार्थकत्वेऽपि **'येषां च विरोधः शाश्वतिकः'**[1] इति सूत्रेण कृतस्यैकवद्भावस्य विरोधाभिव्यञ्जकत्वात्, तदभिव्यक्तेन विरोधेन एकदैव हरिपदस्य सिंहरूपेऽर्थे नागपदस्य च गजरूपेऽर्थेऽभिधाया नियमनदर्शनात् ।

यच्चोक्तम् **'रामार्जुनगतिस्तयोः'** इति शब्दान्तरसन्निधेरुदाहरणमिति, तदप्ययुक्तम्, भवदभिमते शब्दान्तरसन्निधेरुदाहरणे **'निषधं पश्य भूभृतम्'** इत्यत्र निषधपदस्य ( देशविशेषपर्वतविशेषवाचिनः) पर्वतविशेषे, भूभृत्पदस्य (भूपपर्वतवाचिनः ) पर्वतसामान्ये च यावदभिधा न नियन्त्रिता स्यात्, तावत्तयोरन्वय एवानुपपन्नः । रामार्जुनगतिस्तयोरित्यत्र तु तयोः रामार्जुनवद्गतिः = सामर्थ्यमित्यर्थान्तरे कृतेऽप्यन्वयस्य निष्पन्नतया महद्वैलक्षण्यम् । अत इदं न शब्दान्तरसन्निधेरुदाहरणम् ।

## मम्मटसमर्थनम्

न च मा भवतु शब्दान्तरसन्निधेरुदाहरणम्, विरोधितोदाहरणमपि कथमन्योन्याश्रयदोषदूषितत्वादिति शङ्क्यम् ? तयोः कयोश्चित् प्रसिद्धविरोधयो रामार्जुनसदृशी गतिरिति तदर्थेन प्रकरणवशात् प्रतीतेन विरोधेन युगपदेव रामपदस्य जामदग्न्येऽर्जुनपदस्य कार्तवीर्येऽभिधाया नियमनादन्योन्याश्रयाभावात् ।

न चैवमिदमुदाहरणं प्रकरणेनाभिधानियामकत्वस्य स्यादिति शङ्क्यम्, शक्तिनियामकस्य विरोधस्य प्रकरणप्राप्तत्वेऽपि नियम्ययोः भार्गवकार्तवीर्ययोः प्रकरणप्राप्तत्वाभावात् । नियम्यस्य प्रकरणप्राप्तत्व एव प्रकरणस्य नियामकत्वस्वीकारादिति रुचिरमभिदधे पण्डितेन्द्रः ।

शब्दान्तरसन्निधेरुदाहरणम् **'निषधं पश्य भूभृतम्'** इत्यवोचद् **दीक्षितः** । तस्यायं भावः—जनपदविशेषपर्वतविशेषवाचिनो निषधपदस्य पर्वतसामान्यवाचिनो भूभृत्पदस्य सन्निधानात् पर्वतविशेषेऽभिधा नियम्यते । भूपपर्वतवाचिनो भूभृत्पदस्य च पर्वतविशेषवाचिनो निषधपदस्य सन्निधानात् पर्वतेऽभिधा नियम्यते ।

---

१. पा० सू० २–४–९ ।

अत्र निषधशब्दस्याभिधानियमनाय भूभृत्शब्दस्याभिधानियमनम्, भूभृत्-पदस्याभिधानियमनाय निषधपदस्याभिधानियमनं वा नापेक्षितम्, अतो नान्योन्याश्रयः।

किन्तु, निषधभूभृत्पदयोरर्थान्तरग्रहणे तयोर्मिथोऽन्वयानुपपत्त्या युगपदेवाभिधा नियम्यत इति। शब्दान्तरसन्निधिश्च नानार्थपदवाच्यैकार्थसम्बन्ध्यर्थान्तरवाचकपदसमभिव्याहारः।

## मम्मटाभिमतं खण्डयति

नियतार्थशब्दसामानाधिकरण्यं शब्दान्तरसन्निधिरिति न युक्तम्, लिङ्गाद्युदाहरणेऽपि कुपितो मकरध्वज इत्यादौ कुपितपदस्यैकार्थकत्वादतिव्याप्तेः। अत एव **'देवस्य त्रिपुरारातेः'** इति तदुदाहरणमपि (त्रिपुरारातिपदस्यैकार्थकत्वात् तत् सन्निधानाद् देवपदस्य शङ्करेऽभिधानियमनमिति) न सङ्गतम्, लिङ्गेनैव नियमनात्।

यत्रैकार्थानेकार्थयोः समानविभक्तिकत्वम्, तत्र शब्दान्तरसन्निधेरुदाहरणम्। यत्र च विभिन्नविभक्तिकत्वम्, तत्र लिङ्गादेरित्यपि वक्तुं न युक्तम्, उभयत्र शब्दप्रतिपादितलिङ्गादेरेव नियामकत्वेन भेदस्यास्य परिभाषामात्रत्वात्। **'व्यालो दानेन राजते'** इति वाक्ये व्यालदानपदयोरुभयोरप्यनेकार्थत्वे परस्परसमभिव्याहारेण दुष्टगजमदजलयोरभिधानियमनस्य सर्वानुभवसिद्धत्वात्। तस्यापि शब्दान्तरसन्निधेरुदाहरणत्वेन सङ्ग्राह्यत्वाच्चेति मदुक्तमेव युक्तमिति।

[1]पण्डितराजोऽत्र दीक्षितोक्तमेवानुसरन् मम्मटोक्तमुदाहरणं पुरा निराकृत्य पुनः समादधे। एकस्यैवाखण्डपदस्य (न तु समस्तस्य) अर्थो नानार्थपदस्यार्थान्तरेणासम्बद्धः प्रस्तुतैकार्थमात्रसम्बद्धो धर्मो लिङ्गम्, यथा कुपितो मकरध्वज इत्यत्र कुपितपदार्थः। 'त्रिपुरारातेः' इति तु समस्तं पदमनेकपदघटितमिति, तदर्थो न लिङ्गमिति प्राचामाशय इति।

**राजचूडामणिदीक्षितश्च**[2]—दीक्षितमतमनूद्य निराचक्रे। तद्यथा—**'नानार्थपदवाच्यैकार्थसम्बन्ध्यर्थान्तरवाचकनानार्थपदसमभिव्याहारः शब्दान्तरसन्निधिः'** इति स्वीकारे **'निषधं पश्य भूभृतम्'** इति वाक्यघटकनिषधभूभृत्पदयोः कस्मिंश्चिदप्यर्थेऽभिधा नियमिता न स्यात्। यतो हि निषधपदवाच्यजनपदविशेषसम्बन्धिनि राजन्यपि भूभृत्पदस्याभिधाया नियमनसम्भवात्। भवदुक्तेऽर्थेऽपि सम्भवाच्च।

न च **'निषधम्', 'भूभृतम्'** इति पदयोः समानविभक्तिकयोः पर्वतविशेषपर्वतसामान्यरूपवाच्यार्थेऽभिधायां नियमितायाम् **'सामान्यविशेषयोरभेदान्वयः'** इति नियमादभेदान्वयः सङ्गच्छते। जनपदविशेषतत्सम्बन्धिभूपरूपार्थस्वीकारे तु तयोः सामान्यविशेषाभावेनाभेदान्वयाभावात् सामानाधिकरण्यनिर्देशोऽनुपपन्नः स्यात्, अतः पूर्वोक्तार्थे एवाभिधानियमनं सङ्गतमिति न शङ्क्यम्; एवं सतीदमुदाहरणमौचित्यस्य स्यात्, न तु शब्दान्तरसन्निधेः।

१. र०ग०द्वि०आ०। २. का०द०द्वि०उ०।

न चात्रौचित्यान्निर्वाहेऽपि **'व्यालो दानेन राजते'** इत्यत्र व्यालपदस्य सर्परूपे वाच्यार्थेऽपि दानपदस्य 'दानखण्डने' इत्यस्माद् धातोर्निष्पन्नस्य खण्डनार्थस्वीकारेऽप्यौचित्यनिर्वाहाद् **'दुष्टगजमदजलयोः'** अभिधानियमनाय शब्दान्तरसन्निधेरावश्यकत्वादिति वाच्यम्, व्यालपदस्याभिधानियमनात् पूर्वं न दानपदस्याभिधानियमनसम्भवः। एवं दानपदस्याभिधानियमनात् पूर्वं न व्यालपदस्येति तदर्थसम्बन्ध्यर्थप्रतिपादकत्वज्ञानाभावादिति परस्पराश्रयापत्तेः।

न च तदर्थसम्बन्ध्यर्थान्तरवाचकपदमेव तदर्थस्मृतिहेतुरिति नान्योन्याश्रय इति वाच्यम्, **'गङ्गायां घोषः'** इत्यत्रापि तीररूपार्थसम्बन्धिप्रवाहवाचकगङ्गापदात् प्रवाहस्मृतिं विनैव तीरस्मृत्यापत्तेः। एवं हस्तिपदाद् गजस्मृतिं विनैव हस्तिपकस्मरणापत्तेश्च। तस्माद् नानार्थकोभयपदघटितवाक्येषु **'औचित्यात्'** एवाभिधानियमनम्। अतः **'देवस्य त्रिपुराराते:'** इत्येतदेव शब्दान्तरसन्निधेरुदाहरणम्।

न चैकस्य पदस्य नियतार्थकत्वे तत्प्रतिपादितलिङ्गेनैवाभिधानियमनसम्भव इति न शङ्क्यम्। तद्गतगुणक्रिययोरेव लिङ्गत्वेन विवक्षितत्वात्। तद्गतासाधारणधर्ममात्रमेव लिङ्गमिति विवक्षितत्त्वात् स्वतन्त्रेच्छानां प्राचां खण्डनमयुक्तम्, अन्यथा सम्बन्धिमात्रस्य लिङ्गत्वं विवक्षित्वा संयोगसाहचर्यादीनामपि लिङ्गान्तर्भावपर्यनुयोगस्य दुष्परिहरत्वादिति।

एवं पण्डितराजराजचूडामणिदीक्षिताभ्यां यद्यपि प्राचीनमतं समर्थितं युक्तं च प्रतिभाति, तथापि अप्पय्यदीक्षितस्योद्भावनमप्यपूर्वमेवेति न तिरोहितं विपश्चिताम्।

## श्लेषस्थले विशेषः

एवं संयोगादीनभिधानियामकानुदाहृत्य श्लेषस्थले विशेषमुद्भावयति। तद्यथा—यत्रानेकार्थस्य शब्दस्यानेकस्मिन्नर्थेऽभिधानियामकाः प्रकरणादयोऽविशिष्टाः, तत्र नैकस्मिन्नर्थेऽभिधाया नियमनम्, यथा—**'पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः'** इत्यत्रोमाधवस्य माधवस्य च स्तुत्यतयोभयोरपि प्राकरणिकत्वम्। अतोऽन्धकासुरक्षयकरः स उमाधवस्त्वां सर्वदा पायादिति अन्धकानां राज्ञां क्षयकरो निवासकृत् सर्वं ददातीति सर्वदः माधवस्त्वां पायादिति चार्थद्वयेऽप्यभिधैव व्यापारः। अत एवाऽत्र सखण्डाखण्डोभयश्लेषाऽलङ्कारः।

## शाब्द्यां व्यञ्जनायां विशेषः

यत्र चानेकार्थस्यैकस्मिन्नर्थे प्रकरणादिकेऽभिधानियामके सत्यपि प्राकरणिकार्थप्रतीतौ सत्यां पुनरर्थान्तरस्य प्रतीतिर्जायते। यथा—

**'असावुदयमारूढः कान्तिमान् रक्तमण्डलः।**
**राजा हरति लोकस्य हृदयं मृदुभिः करैः'**[1] ॥

---

१. वृ० वा० प्र० प०।

इत्यत्र चन्द्रोदयवर्णनप्रकरणेऽप्राकरणिकोऽप्यभ्युदयादिविशिष्टो राजा प्रतीयते। तत्र का गतिः ?

## अत्र मम्मटमतम्

अत्र प्राचीनाः[1]-द्वितीयेऽर्थे ( अप्राकरणिके ) नाभिधा प्रकरणेन तस्या नियन्त्रितत्वात्। मुख्यार्थबाधादिहेतुत्रयाभावाद् लक्षणाऽपि न, अपि तु शब्द-शक्तिमूलव्यञ्जनैव व्यापारस्तत्र शरणमित्याहुः।

अत्र यथा प्रकरणेनाभिधानियन्त्रिताऽप्राकरणिकं राजरूपार्थं नाभिदधाति, तथैव व्यञ्जनाऽपि प्रकरणेन नियन्त्रिता सती नार्थान्तरं बोधयितुं क्षमेति शङ्का न कार्या। धर्मिग्राहकमानेन = (धर्मी = व्यञ्जना, तद्ग्राहकं मानम् = सहृदयानुभवः, तेन) सहृदयहृदयप्रमाणेनाप्राकरणिकार्थबोधायैव व्यञ्जनाया उल्लासात्। अत एव काव्यान्तर्वर्तिनः प्रकरणादिना कस्मिंश्चिदर्थे नियन्त्रितस्यापि पदस्या-सभ्यार्थस्मारकत्वेन त्याज्यत्वम्। अन्यथा—'यस्याननं योनिरुदारवाचाम्' इत्यत्राभिधाया इव व्यञ्जनाया अपि प्रकरणेन नियन्त्रितत्वादसभ्यार्थप्रतीते-रभावादश्लीलदोषो न स्यात्। तस्माद् यत्राभिधासंयोगाद्यैर्नियन्त्रिताऽर्थान्तरावगमे कुण्ठिता, तत्रार्थान्तरप्रतीतौ व्यञ्जनैव व्यापार इति।

## अत्र दीक्षिताभिप्रायः

**एवं प्राचीन** (मम्मट) मतं प्रतिपाद्य दीक्षितः स्वाभिप्रायं प्रकटयति। तद्यथा **'असावुदयमारूढः'** इत्यादौ यथा प्राकरणिकेऽर्थे प्रकरणमभिधानियामकम्, तथैवा-प्राकरणिकेऽपि राज-कर-मण्डलादिशब्दानां मिथोऽन्वययोग्य-नृपति-तद्ग्राह्यधन-देशादिवाचकानां समभिव्याहार एवाभिधानियामकोऽस्ति।

अतः प्राकरणिकाप्राकरणिकरूपार्थद्वयेऽप्यभिधैव व्यापारः। परस्परान्वय-योग्यार्थवाचकपदसमभिव्याहारोऽपि शब्दान्तरसन्निधिरूपोऽभिधानियामकोऽस्त्येव प्रकरणवदिति।

निश्चितार्थकपदसन्निधिरेव शब्दान्तरसन्निधिरिति वादिभिरपि नानार्थ-शब्देभ्योऽर्थान्तरप्रतीतेरनुभवसिद्धतया नियामकान्तरमवश्यमभ्युपेयम्।

न चाप्रस्तुतेऽर्थे शब्दान्तरसन्निधिमात्रम्, प्रस्तुतेऽर्थे शब्दान्तरसन्निधिः प्रकरणं चेति नियामकाधिक्यात् प्रस्तुतेऽर्थे एवाभिधा स्यादिति वाच्यम्। अनेकार्थ-शब्दजन्यशक्यस्मृतौ प्रकरणादिष्वन्यतमः कारणम्। तेष्वेकस्यापि समवधाने अभिधाया नियमनस्य युक्तत्वात्, नियामकाधिक्यस्याप्रयोजकत्वात्। तदुक्तं हरिणा—**'शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः'** इति। संयोगादिषु कस्यचिदपि सत्त्वे स्मृतिसामग्र्याः पर्याप्तत्वात्।

---

१. मम्मटादयः का० प्र० द्वि० उ०।

यत्रैकमेव पदं नानार्थं वर्तते, तस्य चेत्, प्राकरणिकेऽप्राकरणिकेऽपि तात्पर्यं यथा—

**करोति कंसादिमहीभृतां वधाज्जनो मृगाणामिव यत्तव स्तवम् ।**
**हरे हिरण्याक्षपुरःसरासुरद्विपद्विषः प्रत्युत सा तिरस्क्रिया[1] ।।**

इत्यत्र हरिपदेन सम्बोध्यः कृष्णः परं हिरण्याक्षप्रभृत्यसुरेषु गजत्वारोपात् श्लेषेण सिंहोऽपि विवक्षितः । तत्रापि समभिव्याहृतद्विपपदात् प्रतीतेन गजेन सह विरोधेन हरिपदस्याप्राकरणिके सिंहेऽर्थेऽप्यभिधा नियम्यते ।

यत्रापि **'यस्याननं योनिरुदारवाचाम्'** इत्यादौ योनिशब्दस्याश्लीलेऽर्थेऽभिधानियामकं किमपि प्रकरणादिकं नास्ति, तत्रापि तथा बुबुधिषा विषयार्थव्यापृतमपि मनः कदाचित् तद्विषयं परिहीयाश्लीले पूतिमयेऽर्थे प्रवर्तते, तथैव प्रकरणादिनियन्त्रितोऽपि शब्दो विषयस्वभावादश्लीलेऽर्थेऽपि प्रवर्तत एवेति न क्वाप्यभिधाविषये व्यञ्जनाऽङ्गीकार्या ( एवंविधस्थले सर्वत्राभिधैव वृत्तिर्न व्यक्तिः ) ।

एवं क्वचिद् योग्यान्वयार्थवाचकपदसमभिव्याहाररूपशब्दान्तरसन्निधिः, क्वचिद् विरोधिता, क्वचिच्च विषयस्वभावः प्राकरणिकेऽप्राकरणिकेऽप्यर्थेऽभिधानियामकः । यद्येतादृशोऽभिधानियामकान् व्यक्तिवादिनो नाङ्गीकुर्युस्तदोक्तोदाहरणेषु व्यञ्जनयापि व्यङ्ग्यार्थावगतिर्न स्यात् । यतो हि सर्वत्राप्राकरणिकेऽर्थे व्यञ्जनास्वीकारे प्रकरणादिभिरभिधानियन्त्रणोक्तिरेवाफला स्यात् ।

यथा इष्टानिष्टक्षेत्रगामिनो जलाशयजलस्येष्टक्षेत्रगामित्वव्यवस्थासिद्धये इष्टक्षेत्रगामिनीं कुल्यामेकां विधाय पुनरपरया कुल्यया जलस्यानिष्टक्षेत्रगामित्वापादनेऽपि कृते सतीष्टक्षेत्रगामित्वव्यवस्था मुधैव कृता स्यात्, तथैव प्राकरणिकेऽर्थेऽभिधां प्रकरणेन नियन्त्रितां विधाय पुनर्व्यञ्जनयाऽप्राकरणिकार्थप्रतिपादने कृतेऽभिधानियन्त्रणमेव व्यर्थं स्यात् । अतो न सर्वत्राप्राकरणिकेऽर्थे व्यञ्जना, अपि तु यत्र चमत्काराधानायाप्राकरणिकेऽप्यर्थे कवेस्तात्पर्यम्, अश्लीलदोषो वा यत्र, तत्रैव व्यञ्जना न सर्वत्रेति व्यवस्था सिद्धये पूर्वोदीरितानि अन्यानि वा नियामकान्यवश्यमभ्युपगन्तव्यानि, तैश्चाप्राकरणिकेऽप्यर्थेऽभिधाबोधनात्, तयैवार्थप्रतीतेस्तदर्थं व्यक्तिकल्पनाया अपार्थत्वात्, अभिधाव्यापारस्य दुर्वारत्वाच्च ।

अपि च किमभिधा शक्तिरूपाऽस्ति । उत शक्यार्थप्रतिपादकत्वरूपशब्दव्यापाररूपा वा ? उभयरूपाऽपि साऽप्राकरणिकेऽर्थेऽस्त्येव । अप्राकरणिकस्याप्यर्थस्य शब्दादेव प्रतीतिः । सा च शक्तिरूपाया व्यापाररूपाया वाऽभिधाया अभ्युपगमात् । शक्तिग्रहसहकारेणार्थप्रतिपादकत्वमभिधेति स्वीकारेऽप्यप्राकरणिकोऽर्थोऽगृहीतशक्तिकस्य न प्रतीयते, अतस्तत्राऽप्यभिधायाः सत्त्वात् ।

अभिधाया मुख्यार्थसम्बन्धेनार्थप्रतिपादिकायां लक्षणायामनतिप्रसक्तिवारणायाभिधालक्षणे साक्षादिति विशेषणं देयम्, अर्थात् **'शक्त्या साक्षात् प्रति-**

१. शि०पा०व०, प्र० स० ३९ तमः श्लोकः ।

**पादकत्वमभिधा'** इति तल्लक्षणम् ।

एवं नानार्थस्थले प्रकरणवलेन प्राकरणिकस्यार्थस्य झटिति वोधे तद्व्यवधानेनार्थान्तरप्रतीतौ नाऽभिधावृत्तिः, अपि तु व्यक्तिरेवेति शङ्का न कार्या, 'तद्विषयशक्तिग्रहमपेक्ष्य तत्प्रतिपादनमभिधा' इति लक्षणे कृतेऽपि शक्यार्थसम्बद्धे लक्ष्यार्थे शक्तिग्रहाभावादेवानतिप्रसक्तौ साक्षात्त्वविशेषणस्यानावश्यकत्वात् ।

अपि च प्रतिपादनव्यवधानाभावरूपसाक्षात्वविशेषणे सति **'येन ध्वस्तमनोभवेन'** इत्यादौ शिवपक्षे स्फुटस्य मनोभवपदस्य सन्निधिरस्ति । मनोभवध्वंसकः शिव इति प्रसिद्धिरपि प्रचुरा, अतो झटिति तत्पक्षार्थवोधः । विष्णुपक्षे च येन अभवेन अनः ध्वस्तमित्यस्फुटस्य पदस्य सन्निधिः, शशिमच्छिरोहरः, अन्धकक्षयकर इत्यनयोरभीष्टेऽर्थे कविभिरप्रयुक्तत्वाद् अन्धकासुरविनाशकर इति प्रसिद्धमर्थमपहाय अन्धकवंश्यानां निवासकर इत्यर्थस्याप्रसिद्धतया निहितार्थत्वाच्चाप्रयुक्तनिहितार्थदोषग्रस्तत्वेनाप्रसिद्धतया विलम्बेनार्थप्रतीतिरिति सर्वसम्मतेऽप्यभिधाविषये ( श्लेषे ) अभिधाया अभावप्रसक्तेः ।

एवं श्लेषस्थले यत्राप्रस्तुतोऽर्थः प्रसिद्धतरः, प्रस्तुतश्च न प्रसिद्धतरः, तत्र प्रसिद्धिप्रचुरतयाऽप्रस्तुतार्थप्रतोतिरेव प्रथमं जायतेऽतोऽप्रस्तुतेऽभिधा । प्रस्तुते एव व्यवहितप्रतीतेर्व्यञ्जनेति साक्षात्त्वविशेषणेन वैपरीत्यापत्तिश्च । प्रस्तुतार्थस्यैव प्रकरणेन प्रथमं वोधो जायते इति वक्तुं नैव शक्यते, प्रसिद्धतरार्थस्यैव प्रथमं स्मृतेः ।

न च द्वयार्थस्यापि यत्राप्रसिद्धेऽर्थे प्रयोगस्तत्र निहितार्थदोष इति वृद्धैरुक्तत्वादर्थद्वयविवक्षास्थलेऽपि निहितार्थस्य प्रयोगो न सम्भवतीति शङ्क्यम्, श्लेषयमकादौ निहितार्थस्य वृद्धैर्दोषाभावत्वेनोपपादितत्वात् । **'अन्धकक्षयकरः' 'राजा हरति'** इत्यादौ तथादर्शनात् ।

तस्मात् शब्दस्यार्थप्रतिपादनोपयोगितत्प्रत्यासत्तिरूपधर्मभेद एव वृत्तिभेदप्रयोजकोऽस्ति । धर्मभेदाभावे साक्षात्त्वव्यवहितत्वभेदो न वृत्तिभेदप्रयोजक इति । अभिधालक्षणयोश्च प्रतिपाद्यप्रत्यासत्तिभेदेनैव भेदः । एकस्य शक्त्या प्रतीतेरपरस्य शक्यसम्बन्धेन प्रतीतेः । अतः प्रतिपाद्यप्रत्यासत्तिभेद एव वृत्तिभेदप्रयोजकः, न तु साक्षात्त्वम् ।

साक्षाद्विशेषणे सति प्रसिद्धाऽप्रसिद्धार्थविषयकशब्दश्लेषस्थले द्वितीयार्थे प्रसिद्धार्थव्यवहितेऽप्रसिद्धेऽर्थे का वृत्तिः ? एवं लक्षितलक्षणास्थले द्विरेफादिपदे प्रथमं लक्षणया भ्रमरपदस्य वोधेऽनन्तरं तद्वोध्यमधुकरस्य वोध इति तत्र व्यवहितत्वात् लक्षणातिरिक्ता का वृत्तिः ? एवं व्यङ्ग्यस्थले (आर्थ्यां व्यञ्जनायाम्) यत्र व्यङ्ग्यार्थाद् व्यङ्ग्यार्थवोधः, तत्र प्रथमव्यङ्ग्यार्थेन द्वितीयस्य व्यवहितत्वाद् व्यञ्जनातिरिक्ता का वृत्तिः ? इति साक्षात्त्वविशेषणमव्यवस्थापादकमप्रयोजकञ्च । अतस्तद्विषयशक्तिग्रहमपेक्ष्य तत्प्रतिपादकत्वमभिधेत्येव लक्षणं युक्तम् । सा चाप्रकृतेऽप्यर्थे दुर्वारेति तदर्थं व्यक्त्यपेक्षा निष्फलैवेति ।

**स्वोक्तिं द्रढयितुं नैयायिकमतमुपन्यस्यति**

नैयायिकास्तु[१] शब्दस्य योऽर्थोऽतिशयप्रसिद्धस्तस्यार्थस्योपस्थितिः प्रकरणाद्यभावेऽपि जायते । अप्रसिद्धस्यार्थस्य प्रकरणादिसत्त्वेऽप्यनुपस्थितिरिति प्रकरणादिकं नाभिधानियामकम्, अपि तु लिङ्गविधया तात्पर्यग्राहकम् । अत एव हरिरस्तीति वाक्यश्रवणाद् हरिशब्दाद् अर्यमानिल-वायु-चन्द्रादयोऽर्थाः प्रतीयन्त एव, परं वक्तुः क्व तात्पर्यमिति नावगम्यते इति निगदन्ति । तेषां रीत्या प्रकरणादिना प्राकरणिकेऽर्थेऽभिधा नियम्यत इति वक्तुं न शक्यते । तस्मात् प्रस्तुतेऽप्रस्तुते चार्थेऽभिधैव वृत्तिः ।

अभिधयोपस्थितपदार्थेष्वाकाङ्क्षादिवशादन्वये समुल्लसति सति प्रस्तुताप्रस्तुतोभयविधवाक्यार्थबोध इति नाप्रस्तुतपदार्थप्रतीतये, न वा वाक्यार्थप्रतीतये व्यञ्जनावृत्तिरपेक्षिता ।

**मम्मटोक्तिमंशतः समर्थयति**

प्राचीनाः ( मम्मटादयः ) यदप्रस्तुतेऽर्थे शब्दशक्तिमूलव्यञ्जनामभिदधति, तत् प्रस्तुताप्रस्तुतयोरर्थयोः प्रतीयमाने उपमाऽलङ्कारे, न त्वप्रस्तुतेऽर्थेऽपि ।

**आच्छादितायतदिगम्बरमुच्चकैर्गामाक्रम्य च स्थितमुदग्रविशालशृङ्गम् ।**
**मूर्ध्निस्खलत्तुहिनदीधितकोटिमेनमुद्वीक्ष्य को भुवि न विस्मयते नगेशम्[२] ।।**

इत्यादौ तैरपि शब्दशक्तिमूलाऽलङ्कारध्वनिरेव प्रतिपादितत्वात् ।

'**उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्**'[३] इति विशेषणसाधारण्यमूलकसमासोक्त्यलङ्कारोदाहरणे रागादिशब्दानामप्रस्तुतेऽप्यर्थेऽभिधैव वृत्तिः श्लेषव्यवहारेण स्फुटमुक्तत्वाच्च ।

न चैवं शब्दशक्तिमूलवस्तुध्वनिर्लुप्त एव । यतो हि अलङ्काररहिते वस्तुमात्रेऽप्रस्तुतेऽर्थे एव वस्तुध्वनिसम्भवात् । तत्र च भवताऽभिधाऽङ्गीकारादिति शङ्क्यम्, अप्रस्तुतस्यार्थस्याभिधयावोध्येऽपि तन्मूलानभिधेयवस्तुव्यङ्ग्ये वस्तुध्वनिस्वीकारात् । यथा '**शनिरशनिश्च तमुच्चैर्निहन्ति यस्मै नरेन्द्र कुप्यसि त्वम्**' इत्यादावशनिशब्देन प्रस्तुतवज्ररूपार्थादन्यस्मिन्नप्रस्तुते शनिविरुद्धरूपेऽप्यर्थेऽभिधयैव वेद्ये '**विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत**' इति योऽर्थो प्रतीयते स व्यञ्जनावेद्य एवेत्यस्ति शब्दशक्तिमूलो वस्तुध्वनिः ।

**मम्मटोक्तिमंशतो निराकरोति**

यत्तु—

**भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।**
**मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ।।**

---

१. वृ० वा० प्र० परि० उद्धृतम् । २. शि० पा० व० चतुर्थ सं० १९ तमः श्लोकः । ३. पाणिनिकृतजाम्बवतीजयकाव्याद् ध्वन्यालोकादावुद्धृतम् ।

इत्यत्र मम्मटाचार्येणोक्तं यदत्र विषपदेन हालाहलं व्यङ्ग्यं, वाच्यस्य 'जलद एव भुजगः' इति रूपकस्य सिद्धिकृदिति[1] गुणीभूतव्यङ्ग्यमिति, तत् प्रौढिवादितामात्रम्। वस्तुतस्तत्राऽप्यभिधैव।

न चैवं शनिरशनिश्चेत्यादिपद्येऽशनिपदात् प्रस्तुताप्रस्तुतोभयार्थेऽभिधया वेद्ये सत्यनन्तरमनभिधेये 'विरुद्धौ द्वौ त्वदनुवर्तनार्थमेकं कार्यं कुरुत' इत्यर्थे व्यञ्जनास्वीकारेऽर्थशक्तिमूल एव वस्तुध्वनिः स्यात्, न तु शब्दशक्तिमूल इति न शङ्क्यम्, शब्दपर्यायपरिवृत्त्यसहत्वेन तस्य शब्दशक्त्युद्भवत्वादिति।

## अत्र पण्डितराजरीत्या प्राचीनमतोपपादनम्

पण्डितराजश्चात्र दीक्षितप्रभावितः प्रथमं प्राचीनमतं निरूप्य 'अन्ये त्वत्र प्रत्यवतिष्ठन्ते'[2] इत्यादिना दीक्षितमतमेवात्र विशदीकृत्य प्रौढ्या समर्थयामास।

तत्र प्राचीनमतं द्विधोपपादितम्, तद्यथा—नानार्थस्य शब्दस्य सर्वेष्वर्थेषु सङ्केतग्रहस्य तुल्यत्वाच्छब्दश्रवणानन्तरं प्रथमं सर्वेषामर्थानामुपस्थितिर्भवति, ततः शब्दस्यास्य कस्मिन्नर्थे तात्पर्यमिति सन्दिहानः श्रोता तात्पर्यनिर्णायकं प्रकरणादिकं पर्यालोच्य वक्तृतात्पर्यं निर्णयति। इत्थं जाते तात्पर्यनिर्णये पुनस्तात्पर्यज्ञानात्मकपदज्ञानजन्या तात्पर्यविषयीभूतैकार्थमात्रविषयकोपस्थितिः, ततोऽन्वयबोधः। तत्र यथा प्रथमं सकलार्थानामुपस्थितिर्जाता, तथा पुनः कथं नेति न शङ्क्यम्, प्रकरणादिज्ञानस्य प्रतिवन्धकत्वात् प्रकरणज्ञानाधीनतात्पर्यनिर्णयस्य प्रतिवन्धकत्वाद् वा, अन्यथा नानार्थोपस्थितौ नानार्थविषयकशाब्दबोधोऽपि स्यात्।

उक्तञ्चात्र हरिणा 'शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः'[3] इति। अत्र 'अनवच्छेदे' इत्यस्य तात्पर्यसन्देहे सति 'विशेषस्मृतिः' इत्यस्य चैकार्थमात्रविषयकोपस्थितिरित्यर्थः।

परमस्मिन् व्याख्याने तात्पर्यनिर्णयानन्तरं पुनरेकार्थमात्रविषयकोपस्थितिरुपपादिता, तस्यां चापरार्थोपस्थितिप्रतिवन्धकल्पना च कृतेति गौरवं मनसिकृत्य पुनरन्यथा व्याचख्यौ। नानार्थशब्दजन्यनानार्थविषयकशाब्दबोधवारणाय तात्पर्यनिर्णयस्य कारणत्वमवश्यं कल्पनीयम्। एवं प्रथमं नानार्थशब्दादनेकार्थोपस्थितावपि प्रकरणादिभिर्यत्र तात्पर्यनिर्णयः, तस्यैवान्वयबोधो जायते, नान्यस्येति।

इत्थमावृत्तस्य भोजनकाले परिहासार्थं शालकेन प्रयुक्तस्य 'सुरभिमांसं भक्षयति' इति वाक्यस्य यो द्वितीयोऽर्थो विदग्धमनोमुकुरे प्रतिविम्बते, स कया वृत्त्या साध्य ऋते व्यक्तेः। उक्तञ्चात्र मम्मटभट्टैः—

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम्[4] ॥ इति। १४

---

१. का०प्र० ५ म उ०। २. र०गं०द्वि०आ०। ३. वा०प०। ४—का०प्र०द्वि०उ०का० १९।

## दीक्षितरीत्या तन्निराकरणम्

इत्थं प्राचीनमतं द्विधा व्याख्याय दीक्षितरीत्यैव स्वमतमुपन्यस्यन्नाह—यदुक्तम् 'पुनरेकार्थमात्रविषयकोपस्थितिः शाब्दवोधायापेक्षिता' इति तदसारम् । नानार्थोपस्थितावपि प्रकरणादिनाऽवगततात्पर्येण विवक्षितार्थशाब्दवोधोपपत्तेः । संस्कारतदुद्वोधकयोः सत्त्वे स्मृतेः प्रतिवन्धस्योपपादनं सकलतन्त्रविरुद्धं च ।

न च नानार्थस्थले नानार्थविषयकोपस्थितावेवायं प्रतिवध्यप्रतिवन्धकभावः कल्प्यते, नान्यत्रेति वाच्यम्, अनुभवविरुद्धत्वाद् निष्फलत्वाच्च । तथा हि 'पयो रमणीयम्' इत्यादिवाक्यमाकर्णितवद्भिः प्रकरणज्ञैरप्रकरणज्ञा वोध्यन्ते, नूनमस्य पयःशब्दस्य दुग्धेऽर्थे वक्तुस्तात्पर्यम्, न तु जले । यदि प्रकरणादिकमप्राकरणिकमर्थं प्रतिवध्नीयात्, तदा जलरूपार्थस्यानुपस्थितत्वान्निषेधः कथं सङ्गच्छते इति न हृदयङ्गमः प्रतिवध्यप्रतिवन्धकभावः ।

यदप्युक्तम्—प्रकरणादिना तात्पर्यनिर्णयेन प्राकरणिकार्थस्य शाब्दवोधानन्तरं पुनरप्राकरणिकस्याप्यर्थस्य जायमानो वोधो व्यञ्जनाव्यापारसाध्य इति, तत्र पृच्छ्यते यत्—नानार्थस्थले सर्वत्रैव व्यञ्जनोल्लासः, उत क्वचिदेव ? तत्र नाद्यः, सर्वत्र व्यञ्जनोल्लासेऽभिधया प्रस्तुतस्य व्यञ्जनयाऽप्रस्तुतस्य च सर्वत्र वोधे प्रसक्ते तात्पर्यज्ञानकारणतायाः कल्पनमेव व्यर्थं स्यात् । न चाभिधया वोधे तात्पर्यज्ञानस्य कारणत्वम्, व्यञ्जनया वोधस्तु तात्पर्यज्ञानं विनाऽपि जायत इति, तत्राभिधया वोधवारणाय तात्पर्यज्ञानस्य हेतुत्वकल्पनं युक्तमिति वाच्यम्, सर्वत्राऽप्राकरणिकार्थवोधस्वीकारे तस्याभिधावोध्यत्वेऽपि दोषाभावात् ।

यच्चुच्यते—नानार्थशब्दात् सकलानामर्थानामुपस्थितावपि प्रकरणादिना यत्र तात्पर्यनिर्णयः, तस्यैवार्थस्यान्वयवोधः प्रथमं जायते, नान्यस्येति नियमरक्षणायाभिधाजन्यनानार्थकपदार्थविषयकशाब्दवोधे तदर्थतात्पर्यज्ञानं कारणमिष्यते, अन्यथा तात्पर्यविषयीभूतस्यार्थस्यैवातात्पर्यविषयीभूतस्याप्यर्थस्य प्रथमं भानं स्यात् । पश्चादप्राकरणिकार्थवोधोऽप्यनुभवसिद्धः । अतस्तात्पर्यनिर्णयकार्यताऽवच्छेदककुक्षौ शक्तिजन्यत्वं निवेशनीयम् । एवं व्यञ्जनाजन्याप्राकरणिकार्थवोधे वाधा नास्तीति चेत्, न **'सोऽव्यादिष्टभुजङ्गहारवलयस्त्वां सर्वदो माधवः'** इत्यादिश्लेषकाव्य इव नानार्थस्थलेऽपि प्राकरणिकाप्राकरणिकयोर्वोधे वाधकाभावात् ।

न च सोऽव्यादित्यत्रार्थद्वयेऽपि प्रकरणसाम्यात् तात्पर्यज्ञानमस्तीति युगपद् द्वयोरर्थयोर्वोधो जायते । सुरभिमांसमित्यादौ सुरभिशब्दस्य भोजनरूपप्रकरणेन सुगन्धिरूपार्थे एव तात्पर्यम् । अतोऽत्र न युगपदर्थद्वयवोधोपपत्तिरिति वाच्यम् । नानार्थस्थले सर्वत्र व्यञ्जनोल्लासस्य स्वीकारे तात्पर्यनिर्णयस्य शाब्दवोधहेतुतैवासिद्धा । अतो युगपदर्थद्वयवोधोऽनुपपन्न इति कथनस्यानुचितत्वात् ।

न चैवं तात्पर्यज्ञानस्य निरुपयोगित्वमिति वाच्यम्, नानार्थकस्य शब्दस्यार्थविशेषे प्रामाण्यनिर्णयाय तात्पर्यज्ञानस्योपयोगात् ।

इत्थं नानार्थशब्दजशाब्दबुद्धौ तात्पर्यज्ञानस्य कारणतैव शिथिलीभूता। अतोऽप्रस्तुतार्थबोधोऽपि शक्त्यैवेति तत्सम्पादनाय व्यञ्जनास्वीकारोऽनुचित एव। न च नानार्थस्थले क्वचिदेव व्यञ्जनोल्लास इति वाच्यम्, तत् क्वाचित्कत्वनियामक-हेतोरभावात्।

न च व्यङ्ग्यार्थविषयककवितात्पर्यस्य अनेन पदेन वाक्येन वाव्यङ्ग्यार्थबोधो जायताम् इत्याकारकस्य वक्तृतात्पर्यस्य ज्ञानमेव हेतुरिति वाच्यम्, व्यञ्जनाजन्य-बोधे तात्पर्यज्ञानकारणतायास्त्वयाऽनङ्गीकारात्। तथापि फलबलाद् व्यञ्जनाजन्य-बोधे तात्पर्यज्ञानमङ्गीक्रियत इति चेत्, न, व्यतिरेकव्यभिचारात्।

तथा हि—'प्रससार शनैर्वायुर्विनाशे तन्वि ते तदा'[1] इत्यादौ कवितात्पर्या-भावेऽपि अपानवायुनिःसरणनायिकामरणरूपार्थप्रतीतिर्व्यञ्जनया सर्वानुभवसिद्धा। अत एवात्राश्लीलत्वदोषः।

ननु फलबलाच्छ्रोतुः शक्तिविशेषश्चमत्कारिण्येवाऽर्थे व्यञ्जनामुल्लासयति, नाचमत्कारिणीति सिद्धं व्यञ्जनोल्लासस्य क्वाचित्कत्वमिति चेत्, तर्हि श्रोतुः शक्तिविशेषो नियन्त्रितां शक्तिमेवोल्लासयतु, नानार्थस्थले व्यक्तिकल्पनानौचित्यात्।

स्वीकृतेऽपि व्यञ्जनोल्लासस्य क्वाचित्कत्वे नानार्थस्थलेऽप्राकरणिकार्थ-बोधस्य व्यञ्जनया प्रतिपादनमयुक्तम्, यतो हि—'उल्लास्य कालकरवालमहाम्बु-वाहम्' इत्यादिनानार्थस्थले येन प्रतिपत्त्रा द्वितीयेऽर्थे शक्तिर्न ज्ञाता, पूर्वं ज्ञाता, पश्चाद् विस्मृता वा तस्य प्रतिपत्तुः सर्वथैव व्यञ्जनया द्वितीयार्थबोधो न जायते, परं तव मते तस्य द्वितीयार्थबोधापत्तिर्व्यञ्जनया दुर्वारा।

न च नानार्थशब्दस्य व्यञ्जनयाऽप्राकरणिकार्थबोधं प्रति तच्छब्दस्य तदर्थ-गतशक्तिज्ञानं कारणमिति वाच्यम्, 'निःशेषच्युतचन्दनं स्तनतटम्' इत्यादावधम-पदस्य रमणरूपेऽर्थे शक्तिग्रहाभावाद् रमणरूपाऽर्थाऽभिव्यक्तेरभावात्। सति वा अधमपदस्य रमणे शक्तिग्रहे शक्त्यैव रमणप्रतीतौ तत्र सर्वाभिमतस्य व्यञ्जना-वृत्तिकल्पनस्य वैयर्थ्यापत्तेश्च।

न च नानार्थव्यञ्जनस्थले सुरभिमांसं भक्षयतीत्यादावेवैवंविधकार्यकारण-भावः, न तु निःशेषेत्यादावेकार्थव्यञ्जकस्थले। तेन तत्र तच्छब्दस्य तदर्थगत-शक्तिज्ञानरूपकारणाभावेऽपि व्यञ्जनोल्लासे क्षत्यभावः।

न च नानार्थस्थले व्यक्त्युल्लासहेतुभूतशक्तिग्रहस्य स्वीकारे तेनैव द्वितीयार्थ-बोधोऽपि स्यादिति वाच्यम्, संयोगादिभिः शक्तेर्नियन्त्रितत्वेन शक्तिग्रहस्योपयोगा-भावात्, व्यक्तिकल्पनौचित्यादिति वाच्यम्। नूतनकार्यकारणभावकल्पने गौरवात्, नियन्त्रणस्य पूर्वमेव दूषितत्वेन तद्धेतोरेवेति न्यायविषयत्वाच्च। (द्वितीयार्थहेतुभूत-व्यञ्जनोल्लासकारणेन शक्तिग्रहेणैव द्वितीयार्थबोधो भवतु व्यक्त्युल्लासकल्पनाया व्यर्थत्वाच्चेति भावः)।

ननु 'तद्वत्ताज्ञानं प्रति तदभाववत्तानिश्चयः प्रतिबन्धकः' इति सर्वसम्मतः सिद्धान्तः। अत एव 'वह्निना सिञ्चति' इति वाक्यात् सेको वह्निकरणकत्ववानिति

१. सा० द० स० प०।

बोधो न जायते । एवं च यत्राप्राकरणिकोऽर्थो न बाधितः, तत्राभिधाबोध्य एव स्यात् । यत्र तु बाधितः, यथा—**'जैमिनीयमलं धत्ते रसनायामयं द्विजः'** इत्यादौ तु कथं शक्त्या बोधः स्याद्, बाधनिश्चयेन प्रतिबद्धत्वात् ।

व्यञ्जनया तु बाधितस्याप्यर्थस्य बोधो भवति, अतस्तदर्थं व्यञ्जनाऽभ्युपेयैवेति चेद् मैवम्—**'गामवतीर्णा सत्यं सरस्वतीयं पतञ्जलिव्याजात्'** इत्यस्य पद्यांशस्य वाच्यार्थ एव बाधित इति तदन्वयबोधोपपादनाय अनाहार्य्यत्वस्येव शाब्दान्यत्वस्यापि बाधनिश्चयप्रतिबध्यताऽवच्छेदककोटौ निवेशाद् यथा बाधितस्यैकार्थस्थलीयान्वयबोध उपपाद्यते, तथा बाधितस्य नानार्थस्थलीयाप्रस्तुतार्थस्य वाच्यत्वस्वीकारेऽप्यन्वयबोधः समुपपादयितुं शक्यः ।

अन्यथा—**'गामवतीर्णा सत्यं सरस्वतीयं पतञ्जलिव्याजात्'** इत्यत्र कैतवापह्नुताविव **'सौधाग्रौ नगरस्यास्य मिलन्त्यर्केण मौलयः'** इत्यत्र सम्बन्धातिशयोक्ताविव सर्वेष्वलङ्कारेषु वाच्यार्थानां प्रायशो बाधिततया तदन्वयबोधायापि व्यञ्जना समाश्रयणीया स्यात् । न च केनाऽपि समाश्रीयत इति । तस्माद् नानार्थस्याप्राकरणिकेऽर्थे व्यञ्जनेति प्राचां सिद्धान्तः शिथिल एव ।

## पण्डितराजस्याभिप्रायः

इत्थं पण्डितराजः प्राचीनाभिमतां शब्दशक्त्युद्भवां व्यञ्जनां निराकृत्य स्वाभिमतं प्रकाशयन् सङ्गृह्णाति—

**योगरूढस्य शब्दस्य योगे रूढ्या नियन्त्रिते ।**
**धियं योगस्पृशोऽर्थस्य या सूते व्यञ्जनैव सा[1] ॥**

योगरूढिस्थले व्यञ्जनां स्वीकरोत्युदाहरति च—

**अबलानां श्रियं हृत्वा वारिवाहैः सहानिशम् ।**
**तिष्ठन्ति चपला यत्र स कालः समुपागतः[2] ॥ इति ।**

अस्याभिधेयोऽर्थः—यत्र काले रमणीनां सौन्दर्यमपहृत्य विद्युतो मेघैः सहानिशं तिष्ठन्ति, स वर्षाकालः समुपागत इति ।

अत्र यस्मिन् काले दुर्बलानां ( सुरते तृप्तिकरणेऽसमर्थानाम् ) धनमपहृत्य पुंश्चल्यो जलवाहकैः पुरुषैः सह रमन्ते, स प्रावृट्काल उपस्थित इति द्वितीयोऽप्यर्थः सहृदयैरनुभूयते ।

अत्र द्वितीयोऽर्थोऽबला-वारिवाह-चपलाशब्दैरभिधया बोधयितुं न शक्यते, रूढिर्योगापहारिणीति नियमाद् रूढ्यर्थस्यैव प्रतीतेः । द्वितीयार्थप्रतीत्यभावे चमत्काराभावात् पद्यस्यास्य काव्यत्वमेव न स्यात् । केवलयोगशक्त्या द्वितीयोऽर्थो बोध्यत इत्यपि न शङ्क्यम् योगरूढिस्थले रूढ्यर्थस्यैव प्रतीतेः । चपलाशब्दस्य योगशक्त्याऽपि पुंश्चलीरूपाऽर्थस्याऽनुपलम्भाच्च । अत एवंविधस्थले शब्दशक्त्युद्भवव्यञ्जनास्वीकार आवश्यक इति ।

---

१. र० गं० द्वि० आ० नानार्थ नि० । २. र० गं० द्वि० आ० नानार्थनि० ।

## समीक्षा

अत्र पण्डितराजेन 'व्यञ्जनयाऽप्राकरणिकार्थबोधं प्रति तच्छब्दस्य तदर्थगतशक्तिज्ञानं कारणमिति कार्यकारणभावनिराकरणाय यदुक्तम्, '**निःशेषच्युत**' इत्यादावधमपदस्य रमणे शक्तिग्रहाभावाद् रमणव्यक्त्यनापत्तेरिति तदयुक्तम्, नानार्थस्थले येन पुंसाऽप्रस्तुतेऽर्थेऽप्यभिधा ज्ञाता, तस्यैव प्रस्तुतेऽर्थेऽभिधाया नियन्त्रणादप्रस्तुतस्य व्यञ्जनया बोधात्। अत एव शाब्दीव्यञ्जनाया अभिधामूलकत्वं मम्मटेनोक्तम्—'**अभिधामूलं त्वाह**[1]' इत्यादिना अन्यैरपि ध्वनिसम्प्रदायाचार्यैस्तथा स्वीकृतम्। निःशेषेत्यादि तु आर्थ्या व्यञ्जनाया उदाहरणम्, तत्र व्यङ्ग्यार्थेऽभिधाज्ञानस्यापेक्षितत्वात्।

अपि च यत् पृष्टं भवता, यद् नानार्थस्थले सर्वत्रैव व्यञ्जनोल्लासः, उत क्वचिदेव ? तद् मयाऽपि पृच्छ्यते यद् योगरूढिस्थले सर्वत्रैव व्यञ्जनोल्लासः, उत क्वचिदेव ? सर्वत्रैवेति चेद् रूढिर्योगापहारिणीति नियमस्यैव व्यर्थत्वापत्तेः। पङ्कजाक्षीत्यादौ पङ्कजपदस्य योगार्थानवभासाच्च। क्वचिदेवेति चेद् नियामक किम् ? चमत्कार एव नियामक इति चेत्, प्राचीनमतेऽपि तथा वक्तुं शक्यत्वात, तन्निरासप्रयासस्यैव व्यर्थत्वादिति।

इत्थं पर्यालोचनेन ज्ञायते यत् पण्डितराजो दीक्षितमतेनात्र सुतरां प्रभावितः, तद्रीत्या प्राचीनमतं निराकृत्यापि प्राचीनेषु श्रद्धावशात् तदभिमतं शब्दशक्त्युद्भवध्वनिं योगरूढिस्थले समर्थयति। अत एवोक्तम्—एवं स्थिते नानार्थस्थलेऽप्युपमायाः प्राकरणिकाप्राकरणिकार्थगतायाः प्रतिपत्तयेऽवश्यं वाच्यया व्यञ्जनयैवाप्राकरणिकस्याप्यर्थस्य प्रतिपत्तावलं क्लिष्टकल्पनयेत्याशयेन प्राचीनैरुक्तं नानार्थव्यञ्जकत्वमपि न दुष्यतीति[2]।

## काव्यदर्पणकारतम्

राजचूडामणिदीक्षितश्च दीक्षितमतमक्षरशो विलिख्य निराचकार। तद्यथा—नानार्थपदवाच्यैकार्थसंसर्गार्थान्तरवाचकनानार्थपदसमभिव्याहाररूपशब्दान्तरसन्निधिरप्राकरणिकेऽप्यर्थेऽभिधां नियच्छतीत्यप्राकरणिकोऽप्यर्थोऽभिधयैव वेद्य इति यदुक्तं दीक्षितेन तदयुक्तम्, यतो हि नियतार्थपदसमभिव्याहार एव शब्दान्तरसन्निधिः, न तूक्तरूप इति तत्र शब्दान्तरसन्निधिरेव नास्ति। अस्तु वा भवदभिमतरूप एव शब्दान्तरसन्निधिः, तथापि प्रस्तुताप्रस्तुतार्थद्वयसाधारणः स कथमप्रस्तुतेऽर्थेऽभिधां नियंस्यति। प्रकरणेन च प्रस्तुतेऽर्थे एवाभिधाया नियमनान्नाभिधयाऽप्रस्तुतार्थप्रतीतिसम्भवः।

न च 'असावुदयमारूढः' इत्यादावर्थद्वयप्रतीतेरनुभवसिद्धतयाऽर्थद्वयानुकूलानेकार्थपदसमभिव्याहाररूपशब्दान्तरसन्निधिरेव तत्राभिधयार्थप्रतिपादने

---

१. का० प्र० द्वि० उ०। २. र० गं० द्वि० आ० नानार्थनिरू०।

प्रयोजक इति वाच्यम्, अभिधायाः प्रस्तुतार्थे एव प्रकरणेन नियन्त्रितत्वात्, तस्य शब्दान्तरसन्निधेर्व्यञ्जनासहकारितयैव प्रयोजकत्वस्वीकृतेः।

नन्वेवं यत्र '**अन्धकद्विरदध्वंसी देयात् पञ्चाननः श्रियम्**'[1] इत्यादौ द्विरदपदेन प्रतीतस्य गजस्य विरोधेन पञ्चाननपदस्य सिंहरूपेऽप्रस्तुतेऽर्थेऽप्यभिधानियस्यते, तत्र का गतिः ? तत्राप्यभिधानियामकान्तराऽपेक्षया प्रकरणस्य बलवत्त्वेन प्रकरण-विरोधे सति नियामकान्तरेणाभिधाया नियमनाऽसम्भवात्।

अत एव यमलार्जुनवृक्षभङ्गप्रकरणे—'**कृष्णार्जुनालोकनजातविस्मयाः**' इत्यत्रार्जुनपदस्य पृथापुत्रेण सह पदार्थस्मृतिप्रयोजकयोः प्रसिद्धिप्राचुर्यसाहचर्य्ययोः सत्त्वेऽपि प्रकरणाद् वृक्षविशेषस्यैव स्मृतिर्जायते।

अत्र प्रकरणेन प्रस्तुतेऽर्थे नियन्त्रितायामभिधायां व्यञ्जनयापि कथमप्रस्तुतार्थस्मृतिरिति न शङ्क्या, प्रकरणेन केवलाभिधैव नियम्यते, न व्यञ्जनाऽपि। अतो व्यञ्जनयाऽप्रस्तुतार्थस्मृतौ बाधकाभावात्।

न च प्रकरणस्याभिधानियामकत्वकल्पनं नानार्थशब्दस्य कस्मिन्नर्थे तात्पर्यमिति सन्देहे सति विशेषस्मृतिव्यवस्थार्थं नादृष्टार्थम्। यद्यर्थविशेषोपस्थितौ सत्यां पुनर्व्यञ्जनयाऽर्थान्तरोपस्थितिः स्यात्, तदा नियामकत्वकल्पनमेव व्यर्थमिति वाच्यम्। यत्रैकस्यैवार्थस्य बोधाय नानार्थकः शब्दः प्रयुक्तः, यथा सैन्धवमानयेत्यादिः, तत्र प्रकरणेन प्रस्तुतेऽर्थेऽभिधाया नियमनादर्थान्तरस्य प्रतिबन्धकत्वकल्पनेन सफलत्वात्। यत्राऽर्थान्तरेऽपि तात्पर्यम्, तत्र सामान्यतोऽभिधानियामकत्वेन क्लृप्तेन प्रकरणेनाभिधाया प्रस्तुतेऽर्थे नियन्त्रणे कृतेऽपि पुनरनुभवपथमवतरन्त्या अर्थान्तरप्रतीतेर्व्यञ्जनां विनाऽसम्भवात्, तत्कल्पनाया आवश्यकत्वात्।

यच्चोक्तम्—शब्दान्तरसन्निध्यादेर्विशेषस्मृतिहेतुत्वाऽनङ्गीकारे '**सैन्धवमानय**' इत्येकार्थपरनानार्थस्थले व्यञ्जनयाऽपि नार्थान्तरप्रतीतिः। '**असावुदयमारूढः**' इत्यनेकार्थपरनानार्थस्थले तु व्यञ्जनयाऽर्थान्तरप्रतीतिरिति व्यवस्था न स्यात्, अविशेषात्।

अतः एकार्थपरनानार्थस्थले शब्दान्तरसन्निध्यादेरभावान्नार्थान्तरप्रतीतिरनेकार्थपरनानार्थस्थले तु शब्दान्तरसन्निध्यादेः सत्त्वेनार्थान्तरप्रतीतिरिति शब्दान्तरसन्निध्यादीनां व्यञ्जनाया नियामकता व्यक्तिवादिभिरप्यास्थेया। तद् वरमभिधानियामकत्वकल्पनमेव तेषामिति तद्, न।

एकार्थपरनानार्थस्थले प्रकरणस्याभिधानियामकता क्लृप्ताऽतोऽनेकार्थपरनानार्थस्थलेऽपि प्रकरणमभिधामवश्यं नियंस्यतीति कल्पनं युक्तम्, परं शब्दान्तरसन्निध्यादिर्व्यञ्जनां सह करोतीति कल्पनाऽप्रामाणिकी। एवमश्लीलस्थले व्यञ्जनयैवाश्लीलार्थप्रतीतिसम्भवे प्रकरणस्याभिधानियामकत्वे सङ्कोचस्य कल्पनमयुक्तम्।

यदप्युक्तम् '**तद्विषयकशक्तिग्रहमपेक्ष्य तत्प्रतिपादनमभिधा**', सा चाप्रस्तुतार्थे प्रतिपादनेऽप्यस्त्येवेति तदपि न, यतो हि तद्विषयकशक्तिग्रहस्य तत्प्रतिपादने

---

१. का० द० द्वि० उ०। २. का० द० द्वि० उ० उद्धृतम्।

किं साक्षादपेक्षा, उत परम्परया ? आहोस्वित् साक्षात् परम्परोदासीनतयाऽपेक्षामात्रम् ? तत्र नाद्यः, तद्विषयकशक्तिग्रहस्याप्रस्तुतार्थप्रतिपादने साक्षादपेक्षाऽभावात् । न च तद्विषयकशक्तिग्रहस्यापेक्षाया अभावेऽगृहीतशक्तिकस्यापि पुंसो व्यञ्जनयाऽर्थान्तरप्रतीतिः स्यादिति वाच्यम्, प्रकरणेनाभिधाया नियन्त्रणस्थले एवार्थान्तरस्मृतौ व्यञ्जनाया उन्मेषात् । यस्यार्थान्तरे शक्तिग्रहो नास्ति, तस्यार्थान्तरस्मृतेरेवाभावेन तत्र प्रकरणस्याभिधानियामकत्वाप्रसक्त्या व्यञ्जनाया अनुन्मेषात् ।

न द्वितीयः—घटादिपदस्य घटाद्यर्थप्रतिपादने तद्विषयकशक्तिग्रहस्य साक्षादेवापेक्षितत्वात् ।

नापि तृतीयः—छत्रिणो यान्तीत्यत्र लक्षणावृत्त्या छत्र्यच्छत्रिसाधारणतया छत्रिप्रतिपादनेऽप्यभिधाप्रसङ्गात् ।

न च तद्विषयकशक्तिग्रहमपेक्ष्य शक्यतावच्छेदकप्रकारेण तत्प्रतिपादनमभिधा । छत्रिणो यान्तीत्यत्र छत्र्यच्छत्र्युभयसाधारणे नैकसार्थगन्तृत्वेनैव लक्षणया छत्रिप्रतीतोः, न तु छत्रित्वेनेति नाभिधाप्रसङ्ग इति वाच्यम्—प्राचीनानां मते गङ्गायां घोष इत्यत्र गङ्गापदेन गङ्गात्वेनैव तीरप्रतीतेः स्वीकारादत्रापि छत्रित्वेनैव छत्रिप्रतीतेः ।

यदि चैकसार्थगन्तृत्वेनैव छत्रिप्रतीतिः स्वीक्रियते, तथाप्यवच्छेदकत्वप्रकारत्वयोर्बहुपदार्थघटितत्वेन शक्यताऽवच्छेदकप्रकारेणेति विशेषणापेक्षया 'साक्षात्त्वविशेषणस्यैव' लघुत्वात् ।

यदि च छत्रिणो यान्तीत्यत्राभिधया छत्रिप्रतीतिः, लक्षणया त्वच्छत्रिमात्रप्रतीतिरिति जहल्लक्षणा । अजहल्लक्षणा तु नास्त्येवेति मतम्, तदा 'सैन्धवमानय' इत्याद्येकार्थपरनानार्थस्थले लाघवेन नानार्थपदत्वावच्छेदेनैव प्रकरणादेः प्रकृतार्थेऽभिधामात्रनियमनप्रयोजकत्वकल्पनात्, अप्रकृतार्थे व्यञ्जनाया एवावश्यंवाच्यत्वेन व्यञ्जनायामतिव्याप्तिनिरासाय 'तद्विषयकशक्तिग्रहं साक्षादपेक्ष्य तत्प्रतिपादनमभिधा इत्यवश्यंवाच्यत्वात् । तद्विषयकशक्तिग्रहस्य साक्षादपेक्ष्यत्वं च--तदर्थस्मृत्यनुकूलसिद्ध्यर्थमनपेक्ष्यत्वे सति तदर्थस्मृत्यर्थमपेक्ष्यत्वम् ।

ततश्च 'छत्रिणो यान्ति' इत्यत्र लक्षणया छत्र्यच्छत्रिस्मृत्यनुकूलच्छत्रिमात्रस्मृतिसिद्ध्यर्थमेव, तद्विषयकशक्तिग्रहस्यापेक्षितत्वाद् नाभिधा ।

अनेकार्थपरनानार्थस्थलेऽप्यप्रस्तुतार्थविषयकशक्तिग्रहस्याप्रस्तुतार्थस्मृतिप्रसक्त्या प्रस्तुतार्थे प्रकरणेनाभिधानियमन एवोपयोगित्वेन तदर्थस्मृतिहेतुव्यञ्जनोन्मेषानुकूलाभिधानियमनसिद्ध्यर्थमेवापेक्ष्यतया न साक्षादपेक्ष्यत्वमिति न तत्राप्यभिधावकाशः । एवं साक्षात्त्वविशेषणेऽपि 'यो गङ्गासमदीधरत्' इत्यत्र श्रीकृष्णः पक्षे अगम् (पर्वतम्) गाम् (पृथिवीं) इति पदभङ्गक्लेशेन गोशब्दस्य भूमिरूपेऽर्थे प्रचुरप्रसिद्धेरभावाद् विलम्बेनार्थप्रतीतावपि, तत्र तद्विषयकशक्तिग्रहस्य तदर्थस्मृत्यर्थमपेक्षितत्वाद् नाभिधाया अभावः । तथा च प्रकृताप्रकृतोभयपरेऽप्यप्रकृते-

प्रसिद्धिप्राचुर्यात् झटित्यर्थप्रतीतावपि न प्रकृतार्थे व्यञ्जनापत्तिः। तत्रापि तद्विषयकशक्तिग्रहस्य तदर्थस्मृत्यर्थमेवापेक्षितत्वात्।

वस्तुतो यस्य शब्दस्य प्रकृतार्थे न प्रचुरा प्रसिद्धिः, तस्य शब्दस्य प्रयोगे निहितार्थदोषो भवति। अत एतादृशः शब्दः काव्येषु न प्रयोक्तव्यः। यद्यपि श्लेषयमकादिषु न निहितार्थदोषः, तथाप्यप्रस्तुतार्थे प्रसिद्धिरहितस्य पदस्य प्रयोग एव। अत एव प्रस्तुतार्थे यस्य शब्दस्य न प्रसिद्धिः, तस्य प्रयोगे यमकादिष्वपि क्लिष्टत्वदोषः सर्वजनप्रसिद्धः।

यदप्युक्तं प्राचीनैः प्रस्तुताप्रस्तुतार्थयोः प्रतीयमाने उपमाद्यलङ्कारेऽवश्यं व्यञ्जना आश्रयणीयेति कृत्वा, तत्र शब्दशक्तिमूलव्यञ्जना स्वीकृता, न त्वप्रस्तुतार्थेऽपि व्यञ्जनाया अस्तित्वप्रतिपादनायेति, तदपि न युक्तम्। **'भ्रमिमरतिमलसहृदयताम्'** इत्यादिपद्ये विषशब्देन हालाहलं व्यङ्ग्यं जलदस्य भुजगत्वरूपणस्य वाच्यस्य सिद्धिं करोतीति काव्यप्रकाशे[1] कण्ठत एवोक्तेर-प्रस्तुतेऽर्थेऽपि व्यञ्जनास्वीकारात्। **'उपोढरागेण विलोलतारकम्'** इत्यादि-समासोक्तौ श्लेषव्यवहारोऽपि रागादिशब्दानामनेकार्थकत्वाभिप्रायेण न त्वप्रस्तुतार्थेऽप्यभिधेत्यभिप्रायेण।

न चैवं शनिरशनिश्चेत्यत्राशनिशब्दस्य प्रस्तुतोऽर्थो वज्रः, तस्मादन्योऽ-प्रस्तुतोऽर्थः शनिविरुद्धस्तस्य व्यञ्जनया प्रतीतिस्वीकारे तस्यैव शब्दशक्त्युद्भव-वस्तुध्वनेरुदाहरणत्वेन **'विरुद्धौ द्वौ त्वदनुवर्तनार्थमेकं कार्यं कुरुत'** इति प्रशंसनीयस्य प्रभावातिशयप्रतीतिपर्यन्तमनुधावनं प्राचीनानां व्यर्थं स्यादिति चेत्, न, तस्याऽपि व्यङ्ग्यस्यार्थपर्यलोचनालभ्यत्वेऽपि प्रस्तुताऽप्रस्तुतार्थसाधारणशब्द-सापेक्षतया शब्दशक्त्युद्भवत्वं नार्थशक्तिमूलकत्वमिति प्रतिपादनाभिप्रायेण तत्पर्यन्तानुधावनस्य युक्तत्वादिति। इत्थमनेनानेकशः क्लिष्टकल्पनया दीक्षितमतं निराकृतं यत्तत् प्राचीनानां समर्थनायैव प्रतिभाति।

### अत्र ध्वनिकारमतम्

अत्र ध्वनिसम्प्रदायप्रवर्तकध्वनिकारिकाकारस्यालोककारस्य मतमुपादीयते। स च शब्दशक्त्युद्भवध्वनिं निरूपयन्नाह—

> आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते।
> यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः[2]॥

आनन्दवर्धनाचार्यश्च व्याचख्यौ—यस्मादलङ्कारो न वस्तुमात्रं यस्मिन् काव्ये शब्दशक्त्या प्रकाशते, स शब्दशक्त्युद्भवो ध्वनिरित्यस्माकं विवक्षितम्। वस्तुद्वये च शब्दशक्त्या प्रकाशमाने श्लेष इति।

एवमलङ्कारो न वस्तुमात्रमिति कथनेन वस्तुरूपार्थद्वये प्रतिभासमाने श्लेषनिरूपणेन च ज्ञायते यत् तावप्रस्तुतार्थेऽप्यभिधामेव स्वीकुरुत इति। अपि च—

---

१. ध्वन्यालोके द्वि० उ० २१ तमा का०। २. तत्रैव।

अमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम्[१] ॥

इत्यत्र विषशब्दस्य जलहालाहलरूपार्थौ वाच्यावेव । यतो ह्युक्तमानन्दवर्धनाचार्येण—'अत्र रूपकच्छायानुग्राही श्लेषो वाच्यतयैवावभासते[२]' इति ।

अत्राभिनवगुप्तपादाचार्यमतम्—

लोचनेऽपि व्याख्यातं यत् 'भुजगशब्दार्थपर्यालोचनबलादेव विषशब्दो जलमभिधायाऽपि न विरन्तुमुत्सहते, अपि तु द्वितीयमर्थं हालाहललक्षणमाह-तदभिधानेन विनाऽभिधाया एवासमाप्तत्वात्' इति ।

इत्थमानन्दवर्धनाभिनवगुप्तप्रभृत्याचार्याणां मतेऽप्रस्तुतोऽर्थो वाच्य एवेति । एभिः प्रभावित एवाप्पयदीक्षितोऽप्रस्तुतेऽर्थेऽभिधामाहेति युक्तमेव । अत्राभिनवगुप्तपादाचार्यश्चतुर्णां मतानामुपादानं [३]कृतवन्तस्तद्यथा—

येन पुंसा यस्य शब्दस्यार्थान्तरेऽपि पूर्वमभिधागृहीतं तस्यैव पुंसस्तस्मादेवशब्दात् संयोगादिना प्राकरणिकेऽर्थे नियन्त्रितायामभिधायां प्राकरणिकार्थबोधानन्तरमप्राकरणिकार्थबोधो व्यञ्जनव्यापारादेव जायते, इति प्रथमम् ।

सा शब्दस्यार्थान्तरप्रतिपादिकाऽप्यभिधैव । परञ्चार्थसामर्थ्यसहकारितामवलम्ब्यार्थान्तरं बोधयति, अतः सहकारिभेदात् सा व्यञ्जनव्यापाररूपोच्यते, इति द्वितीयम् ।

शब्दश्लेषे शब्दभेदोऽस्त्येव । अर्थश्लेषेऽपि 'शक्तिभेदाच्छब्दभेदः' इति दर्शने द्वितीयः शब्दस्तत्रानीयते । स च द्वितीयः शब्दो यत्र द्वावर्थौ प्राकरणिकौ तत्र त्वभिधयाऽऽनीयते । यथा—'क' इतो धावति, किं गुणविशिष्टश्चेति द्वयोः प्रश्नयोरुत्तरप्रदानायोक्तम्—'श्वेतो धावति' इति वाक्यघटकं श्वेतपदम् । यत्र चैकोऽर्थः प्राकरणिकोऽर्थोऽप्राकरणिकः, तत्र प्राकरणिकेऽर्थेऽभिधाया नियमनादप्राकरणिकार्थबोधनाय द्वितीयः शब्दो व्यञ्जनव्यापारादेवानीयते । तत्राप्रस्तुतोऽर्थो ध्वननव्यापारानीतद्वितीयशब्दबलात् प्रतिपन्नोऽपि ध्वननव्यापारमूलत्वाद् व्यङ्ग्य एवेति तृतीयम् ।

अनेकार्थस्य शब्दस्य प्रकरणज्ञानाधीनतात्पर्यज्ञानेन प्राकरणिकेऽर्थेऽभिधाया नियन्त्रणादप्राकरणिकार्थस्य बोधे तात्पर्यज्ञानं प्रतिबन्धकमस्ति । तस्य प्रतिबन्धकस्य द्वितीयव्याख्यानोक्तार्थसामर्थ्येन निवृत्तिः क्रियते । अतोऽप्रस्तुतार्थबोधेनाप्यभिधैव क्षमा । अभिधयाबोधनाच्च द्वितीयोऽप्यर्थो वाच्य एवेति जाते, द्वितीयार्थे शब्दस्यासम्बद्धार्थाभिधायित्ववारणाय यो द्वयोरर्थयोःसा दृश्याख्यसम्बन्धोऽभेदारोपो वा प्रतीयते स शब्दादेव । वाचकशब्दाभावेऽपीति ध्वननव्यापारादेव । अतोऽलङ्कारध्वनिरेव शब्दशक्तिमूलो न वस्तुध्वनिरिति तुरीयम् ।

१. ध्व० लो० द्वि० उ० २३७ पृ० । २. तत्रैव २३८ पृ० । ३. लोचने २४१-२४३ पृ० (ध्व० लो० लोचनबालप्रियादिव्यञ्जनासहिते)

अत्रानन्दवर्धनाभिनवगुप्ताप्पयदीक्षितप्रभृतयश्चतुर्थमतानुयायिनो लक्ष्यन्ते । पञ्चत्रिंशद्विधध्वनिभेदेषु शब्दशक्त्युद्भवस्यालङ्काररूपस्यैकविधस्यैव गणितत्वात्[1]। अन्ये च मम्मट-रुय्यक-जयरथ-विद्याधर जयदेव-विश्वनाथ-जगन्नाथवैद्यनाथ-राजचूडामणिदीक्षितप्रभृतयः प्रथममतानुयायिनो द्वितीयेऽर्थे व्यञ्जनां स्वीकुर्वन्ति ।

परमप्पयदीक्षितो मम्मटप्रभावितोऽप्यस्ति, अतः शब्दशक्त्युद्भववस्तुध्वनिमपि स्वीकरोति, परं नानार्थस्थले द्वितीयेऽर्थे व्यञ्जनां नाङ्गीकरोति । मम्मटविरोधपरिहाराय मम्मटाभिप्रायं क्वचित् स्वमतानुकूलं प्रकाशयति, क्वचित्प्रौढवादितामुपपादयति । कथयति चायं विशेषः वृद्धैः प्रस्फुटं न प्रतिपादित इति । इति वृत्तिवार्तिकस्य प्रथमपरिच्छेदस्य विषयविवेचनम् ।

## द्वितीयपरिच्छेदस्य विषयविवेचनम्—

द्वितीये परिच्छेदे लक्षणावृत्तेः सप्तभेदं निरूपणं वर्तते । तत्र लक्षणालक्षणम्—'**मुख्यार्थसम्बन्धेन शब्दस्य प्रतिपादकत्वम्**' इति ।

## गौण्यालक्षणायामन्तर्भावः—

सादृश्यसम्बन्धेनार्थप्रतिपादिका गौण्यपि लक्षणायाः प्रभेद एवेति 'न' पृथग् वृत्तिः । तत् सदृशेऽपि तन्निरूपितसादृश्याधिकरणत्वरूपपरम्परासम्बन्धसत्त्वात् । साक्षात् सम्बन्धे विशिष्टबुद्धियोग्यसम्बन्धे सत्येव लक्षणेति नियमाभावात् । '**उपकृतं बहु तत्र किमुच्यते**' इत्यादौ तन्निरूपितविरोधाधिकरणत्वरूपपरम्परासम्बन्धेन लक्षणासिद्धेः । घटरूपप्रत्यक्षे संयुक्तसमवायस्य विशिष्टबुद्ध्ययोग्यस्यापि परम्परासम्बन्धस्य स्वीकारात् । अतः संयोगे सति दण्डी पुरुष इतिवत् सादृश्ये सति सिंहवान् देवदत्त इति विशिष्टबुद्धेरदर्शनात् सादृश्यं न सम्बन्ध इति वादी निरस्तः ।

## लक्षणाभेदाः—

सा च लक्षणा द्विविधा—(१) गौणी (२) शुद्धा च ।

पुनः प्रत्येकं द्विविधा, निरूढलक्षणा फललक्षणाभेदात् । निरूढा लक्षणा रूढितुल्या भवति । फललक्षणा च विवक्षितार्थान्तरं द्योतयति ।

तत्र गौण्या निरूढाया उदाहरणम्—'**लावण्यसागरभुवि प्रणयं विशेषात्**' इत्यत्र लवणत्ववाचिनो लावण्यशब्दस्य हृदयङ्गमत्वरूपसादृश्यसम्बन्धेन सुषमाविशेषे निरूढा लक्षणा । चित्रगजादावपि तथैव । इयं सादृश्यसम्बन्धमूलकत्वाद् गौणी ।

शुद्धा निरूढा यथा—'**क्वणद्द्विरेफावलिनीलकङ्कणम्**' इत्यत्र द्विरेफशब्दः द्वौ रेफौ यस्येति व्युत्पत्त्या भ्रमरपदे वृत्तिः, तद्वाच्ये मधुकरे रूढिलक्षणा । एवं त्वगादिशब्दानां त्वगिन्द्रिये शुद्धैव निरूढालक्षणा ।

---

१. लोचने (ध्व० लो० द्वि० उ० २१ तमकारिकाया व्याख्याने) ।

फललक्षणासप्तविधा—(१) जहल्लक्षणा, (२) अजहल्लक्षणा, (३) जहदजहल्लक्षणा, (४) गौणी सारोपा, (५) गौणी साध्यवसाना, (६) शुद्धा सारोपा, (७) शुद्धा साध्यवसाना चेति।

**एतेषामुदाहरणानि—**

तत्र जहल्लक्षणायाः—'**वल्कावृता धृतजटाः सुरदीर्घिकायां कल्पद्रुमाः कति गिरीश ! तपश्चरन्ति**'[1] इत्यत्र सुरदीर्घिकायामित्यस्य कल्पद्रुमाधिकरणयोग्ये तटे सामीप्यात्तटे लक्षणा। मुख्यार्थस्य प्रवाहस्य कल्पद्रुमाधिकरणत्वेनान्वयाभावात् स्वार्थपरित्यागाद् जहल्लक्षणा तटस्यातिशयितपावनत्वद्योतनं फलम्। एवं गङ्गायां घोष इत्यत्रापि। व्यतिरेकलक्षणाऽपि जहल्लक्षणैव। '**उपकृतं बहु तत्र किमुच्यते**' इत्यादौ ज्ञातापकारिण्युपकृतादिपदार्थानामन्वयाभावात्, तेषां पदानां स्वार्थविरुद्धेऽपकारेऽर्थेलक्षणा। त्वयाऽपकारे क्रियमाणेऽप्यहमेवं प्रियमेव वच्मीति स्वसाधुत्वद्योतनं फलम्।

**अजहल्लक्षणायाः**—कुन्ताः प्रविशन्ति। अत्र कुन्तपदस्य कुन्तधारिपुरुषे लक्षणा। पुरुषेण सह कुन्तस्यापि प्रवेशक्रियायामन्वयात् 'अजहल्लक्षणा' निर्दयप्रहर्तृत्वादिद्योतनं फलम्।

वनस्यैकदेशे पुष्पिते पुष्पितं वनमिति प्रयोगे वनपदस्य स्वार्थैकदेशत्यागेन स्वार्थैकदेशे वृत्तेश्च जहदजहल्लक्षणा। पुष्पितभूयस्त्वं फलम्।

**गौणसारोपायाः**—'नाथ त्वदीयमकलङ्कमिमं मुखेन्दुभिः' इत्यत्रेन्दुशब्दस्य मुखे लावण्यादिसादृश्यसम्बन्धेन सारोपा लक्षणा। ताद्रूप्यप्रतीतिः फलम्।

**गौणसाध्यवसानायाः**—नाभेरभूत्तव चतुर्भुज ! नान्तरिक्षम्, इत्यत्रान्तरिक्षपदस्य भगवदवलग्ने (मध्ये) सूक्ष्मत्वसादृश्याद् गौणसाध्यवसाना। सर्वथैवाभेदप्रतीतिः फलम्।

सारोपलक्षणायां विषयिणा पृथङ्निर्दिष्टस्य विषयस्य विषयिरूपोपरक्तताप्रतीतिस्ताद्रूप्यप्रतीतिः। साध्यवसानायां विषयस्य विषयिणा सर्वथैवाभेदप्रतीतिः। विषयविषयिणोर्द्वयोरपि निर्देशे आरोपः। विषयिमात्रस्य विषयलाक्षणिकतया निर्देशेऽध्यवसाय इति।

**शुद्धसारोपलक्षणायाः**—'आपादमाचिकुरभारमशेषमङ्गमानन्दसारमरविन्ददृशामसीम'[2] इत्यत्र भगवदङ्गेष्वानन्दकारित्वेनानन्दपदस्य सारोपा लक्षणा। आनन्दकरणे इतरवैलक्षण्यद्योतनं फलम्। विषयनिगरणेन 'आनन्दोऽयम्' इति **प्रयोगे साध्यवसाना। आनन्दाव्यभिचारिद्योतनं फलम्।**

---

१. वृ. वा. द्वि. प.। २. वृ. वा. द्वि. प.।

**गौणीविषये विशेषः—**

गौण्या मुखं कमलमित्यादौ जहल्लक्षणा स्फुटैव । गोर्वाहीकोभयविषये 'गाव एते समानीयन्ताम्' इत्यत्राजहल्लक्षणाऽपि । अतो गौण्याश्चतुर्विधत्वात् 'कथं द्विविधत्वम् ? उच्यते-यत्र सादृश्यसम्बन्धेन लक्षणा तत्रैव गौणी। गोशब्दस्य गवि सादृश्याभावात् । अतः 'गाव एते समानीयन्ताम्' इत्यत्राभिधा-लक्षणाभ्यां बोधः । यथा 'गङ्गायां जलं घोषश्च तिष्ठति' इत्यत्र 'कुन्ताः प्रविशन्ति' इत्यादौ कुन्तकुन्तधारिणोरेकदेश्येकदेशभावरूपसम्बन्धसत्त्वात् शुद्धा-ज्जहल्लक्षणाविशेषणवाचिनो विशिष्टे सम्भवेति । तस्माद् लक्षणा सप्तविधैव ।

अत्र काव्यदर्पणकृन्मतम्—अत्र राजचूडामणिदीक्षितो दीक्षितमतं निराकुर्वन्नाह— 'कुन्ताः प्रविशन्ति' इत्यादावपि कुन्तांशस्य शक्त्यैवोपस्थितिसम्भवात् तत्र लक्षणा न स्यात् । किन्तु पुरुषांशे लक्षणाकल्पनीया स्यात् । तत्र अन्वयप्रतियोग्यर्थो-पस्थापनार्थं शक्त्या अत्यागादेवाजहल्लक्षणेति व्यवहारः । ततश्च 'चन्द्रौ पश्य' इत्यत्रापि शक्त्यत्यागेन सादृश्यसम्बन्धेन मुखे लक्षणा कल्पनादजहल्लक्षणा गौणसाध्यवसानाप्यङ्गीकार्येति ।

**अत्र विशेषः**

शुद्धायां साध्यवसायलक्षणाभेदोपपादनं व्यर्थम् । तस्य जहल्लक्षणातो भेदाभावात् । उभयत्र परार्थं स्वसमर्पणस्य सत्त्वात् ।

न च शुद्धसारोपायां कार्यकारणभावादिसम्बन्धेन वृत्तिः जहल्लक्षणायां संयोगादिसम्बन्धेनेति भेदः, वैचित्र्यान्तराभावेऽपि सम्बन्धभेदेन लक्षणाभेदोपपादनेऽ-परेषां सम्बन्धानामप्यनेकविधत्वाद् लक्षणाऽनेकविधा स्यात् (सप्तविधेति नियमस्य भङ्गापत्तेः) ।

'राजकीयः पुरुषो राजा' इत्यत्र स्वस्वामिभावः । 'इन्द्रार्था स्थूणा इन्द्रः' इत्यत्र तादर्थ्यलक्षणः । अतक्षाऽयं तक्षेत्यत्र तात्कर्म्यलक्षणः । 'अग्रहस्ते हस्तः' इत्यत्रावयवावयविभावेत्यादि भेदात् । **अलङ्कारसुधानिधौ**—'आश्रयाश्रयिभाव-सम्बन्धस्याप्युपपादितत्वाच्च ।

**साध्यवसायजहल्लक्षणयोरभेदः—**

साध्यवसायलक्षणायामभेदाभिव्यक्तिर्भवति जहल्लक्षणायां तु न । 'अयं राजा' इत्यत्र राजाऽभेदाभिव्यक्तिपूर्वकमेवानुल्लङ्घ्यशासनत्वप्रतीतिः फलम् । अतो व्यङ्ग्यभेदाद् भेदोऽस्त्वित्यपि वक्तुं न पार्यते, जहल्लक्षणायां 'गङ्गायां घोषः' इत्यत्रापि प्रवाहाभेदाभिव्यक्तिपूर्वकमेव तटेऽतिशयशैत्यादेः प्रतीतेः । अतः साध्य-वसायलक्षणाया जहल्लक्षणातो न फलकृतो न वा अन्यकृतो भेदः सम्भवतीति न तत् पृथगुदाहार्यम् ।

अत्र **काव्यदर्पणकृत्**—साध्यवसानायां विषयनिगरणाद् भेदमुपपादयति । विषयनिगरणं च विषयिविषयवाचकपदद्वयोपादाने यत्र विषयस्य विषयित्वेन

प्रतीतिः, तत्र विषयस्य विषयिणात्ममात्रपरिशेषीकरणम्। इदं विषयनिगरणं 'गङ्गायां घोषः' इत्यत्र नास्त्येव। तत्र 'गङ्गातीरे' इति विषयविषयिवाचकपदद्वयोपादाने तीरस्य गङ्गात्वेन प्रतीत्यभावादिति। जहदजहल्लक्षणामालङ्कारिकेषु आशाधरभट्ट-राजचूडामणिदीक्षितप्रभृतयः स्वीकुर्वन्ति, परमन्ये जहल्लक्षणायामेवान्तर्भावयन्ति (वेदान्तिनोऽपि स्वीकुर्वन्ति)।

### सारोपलक्षणायां विशेषः—

'मुखेन्दुः' इत्यादौ 'इन्द्वादि' पदस्य मुखादौ मुखत्वेन रूपेण लक्षणायां सत्यां तत्र मुखपदस्याप्युपात्तत्वेन तस्मादपि मुखत्वप्रकारकोपस्थितौ पुनरुक्तिदोषापत्तिः। 'इन्दुपदं' स्वसमवेतलावण्यादिगुणं लक्षयित्वा, तं च प्रवृत्तिनिमित्तीकृत्य मुखं बोधयेदित्यपि न, अन्यसमवेतगुणस्यान्यत्र प्रवृत्तिनिमित्तत्वासम्भवात्। मुखवृत्तिलावण्यादिगुणान् द्वारीकृत्येन्दुपदं मुखं लक्षयेदित्यपि न, मुख्यार्थसम्बन्धं विना गुणद्वारेण लक्षणाया अयोगात्। अतः 'मुखचन्द्रोभयानुगतलावण्यादिसाधारणधर्माश्रयत्वेन' मुखं लक्ष्यते। उक्तञ्च भट्टपादैः—'**लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता**'[1] इति। इत्थं प्राचीन-(मम्मटादि) रीत्योपपाद्य दीक्षितो ब्रूते।

### रूपके लक्षणाया निराकरणम्—

सारोपायामुपमानोपमेयोभयावृत्तिसाधारणधर्ममुखेन लक्षणास्वीकारेऽपि यत्र साधारणो धर्मः शब्दत उपात्तः, तत्र पुनरुक्तिदोषो दुर्वारः स्यात्। यथा—

**वाराभिरामपरिणाहलसत् सिताभ्रं तापिच्छमेचकमुरः शरदन्तरिक्षम्।**
**प्राप्यैव देव तव कौस्तुभपूर्णचन्द्रः पूर्णां बिभर्ति पुरुषोत्तमकान्तिरेखाम्**[2] ॥

इत्यादावुरसोऽन्तरिक्षस्य च परिणाहित्वमेचकत्वादिरूपसाधारणो धर्मः शब्दतः पृथगुपात्तः, अतोऽत्र पुनरुक्तिदोषो दुर्वारः। यत्र साधारणो धर्मः पृथगुपात्तस्तत्रोपात्तधर्मातिरिक्तधर्ममुखेन लक्षणास्वीकारोऽपि न युक्तः, अत्र मेचकत्वाद्यतिरिक्तसाधारणधर्मस्याप्रतीतावपि वाक्यस्य पूर्णविश्रान्तेः। कवेस्तत्रैव तात्पर्याच्च।

उरः शरदन्तरिक्षमिवेति विग्रहेऽत्रोपमितसमासादुपमाऽलङ्कारो न रूपकमिति न शङ्क्यम्, साधारणधर्मस्याप्रयोगे सत्येव '**उपमितं व्याघ्रादिभिः सामान्याप्रयोगे**' (पा० सू० २-१-५६) इति सूत्रेण समासविधानात्। अत्र च तत्प्रयोगात्। अतोऽत्र उर एव शरदन्तरिक्षमिति '**मयूरव्यंसकादयश्च**' (पा० सू० २-१-७२) इति सूत्रेण समासे रूपकमेव। रूपके गौणसारोपलक्षणाऽपरिहार्य्या। सा चोपमानपदे। उपमानपदस्योपमेयतावच्छेदकरूपेण लक्षणायामुपमेयपदादपि तस्य प्रतीतौ पौनरुक्त्यम्। उपमानतावच्छेदकरूपेण स्वीकारेऽन्यधर्मस्यान्यत्राप्रतीतेरसम्भवदोषः। साधारणधर्ममुखेन स्वीकारे यत्र साधर्म्यं शब्दोपात्तं तत्र पुनरुक्तिः। अतः

१. श्लो० वा० का० धि०। २. वृ० वा० द्वि० प०।

सादृश्यमुखेन लक्षणास्वीकार्या । अर्थादुपमानवाचकपदस्योपमानप्रतियोगिकसादृश्यविशिष्टोऽर्थः । सादृश्यवाचकस्य यथेवादेरत्राप्रयोगात् पुनरुक्तिप्रसक्तेरभावात् ।

## रूपके सादृश्यलक्षणायामुपमात्वापत्तिः

एवं सत्युपमानवाचकस्य शरदन्तरिक्षपदस्य लक्षणया स्वप्रतियोगिकसादृश्येऽर्थे सति सादृश्यस्य शब्दोपात्तत्वेनोपमाप्रसङ्गात् । उपमारूपकयोरेतदेवान्तरं यदुपमायामुपमानोपमेययोः सादृश्यप्रतीतिः । रूपके च तयोस्तादात्म्यप्रतीतिः । यद्यत्रापि सादृश्यमेव प्रतीयेत, तदोपमैव स्यात् । एवं सारोपलक्षणायां रूपकमेव, नोपमेति विभागोऽनुपपन्नः स्यात् ।

सादृश्यं यत्र वाच्यं स्यात्, तत्रैवोपमा भवति, यत्र लक्ष्यं सादृश्यं तत्र नेति प्रतिपादनमप्ययुक्तमेव, 'कमलसुहृन्मुखम्' इत्यादौ सुहृदादिपदाद् लक्षणयैव सादृश्यप्रतीतौ सर्वैरुपमाऽङ्गीकारात् ।

अपि च—'पादाम्बुजं भवतु नो विजयाय मञ्जुमञ्जीरशिञ्जितमनोहरमम्बिकायाः[1]' इति पद्यघटकपादाम्बुजपदे उपमितसमासे उपमाया विशेषणसमासे रूपकरूपकस्य च सम्भवेनानवधारणे प्रसक्ते तन्निर्णयाय पादाम्बुजमित्यत्र मञ्जुमञ्जीरशिञ्जितमनोहरत्वस्य विशेषणतया योगो निबद्धः । मञ्जुमञ्जीरशिञ्जनस्य पादयोरेव योगसम्भवात्, कमले च तस्य सम्बन्धाभावादत्र पूर्वपदार्थप्रधानोपमितसमासः, उपमास्वीक्रियते । प्रधानमेव पदार्थः स्वतन्त्रतया पदार्थान्तरेणान्वेति । विशेषणसमासेक्रृतेऽम्बुजस्योत्तरपदार्थस्य प्राधान्यं स्यात् । (न तु पादयोः) तत्र च मञ्जुमञ्जीरशिञ्जनस्यानुपपत्तिरेवात्रोपमाया निर्णायिका । एवम्—**'यस्यानिशं दिविषदश्चरणारविन्दमुत्तंसयन्त्यमितभक्तिभरावनम्राः'** इत्यत्र चरणारविन्दपदे रूपकस्य निर्णायकमुत्तंसयन्तीति क्रियापदम् । उत्तंसनं चारविन्दकार्यम्, अतोऽरविन्दस्यैवोत्तरपदार्थस्य प्राधान्यादत्र विशेषणसमासे रूपकं निश्चिन्वन्ति शास्त्रपरिचिताः सहृदयाः ।

रूपकस्थलेऽरविन्दादिपदेऽरुणतादिसामान्यधर्मेण तन्निरूपितसादृश्यमुखेन वा लक्षणास्वीकारे चरणारविन्दमित्यत्र विशेषणसमासेक्रृतेऽपि उत्तरपदस्यारविन्दशब्दस्यारविन्दनिरूपितसादृश्यमिति लक्ष्यार्थस्य गुणरूपत्वात्, गुणस्य च प्राधान्यासम्भवादुपमितसमास इव पूर्वपदार्थस्य चरणस्यैव (सादृश्यविशिष्टस्य) प्राधान्यापत्तेस्तस्य चोत्तंसनानुगुण्याभावः । गुणजात्योर्जातिः प्राधान्यनिश्चयात् । नीलमुत्पलमित्यादौ नैल्यं गुण उत्पलत्वं जातिः, तयोर्जातिरेव प्राधान्यदर्शनात् । तस्माद् रूपकस्थले साधारणधर्ममुखेन तन्निरूपितसादृश्यमुखेन वा लक्षणा व्यर्थैवेति रूपके लक्षणायां तादूप्यप्रतीतिः फलमित्यपि न युक्तम् । मुखेन्दुरित्यत्र साधर्म्येण लक्षणायां **'कान्तिमत् मुखम्'** इति सादृश्यमुखेन लक्षणायां **'चन्द्रसदृशमुखम्'** इति वाक्यादपि तादूप्यप्रतीतिप्रसक्तेः ।

१. वृ० वा० द्वि० प० उद्धृतम् । २. तत्रैव ।

लक्षणास्थले यथा **'गङ्गायां घोषः'** इत्यत्र वाच्यार्थलक्ष्यार्थयोः स्रोतस्तीरयोरभेदाध्यवसायः, तथैव मुखचन्द्रयोरपि, एकशब्दबोध्ययोः शब्दशक्तिमूलव्यञ्जनव्यापारेण ताद्रूप्याध्यवसायो भवति। वाच्यस्थले च भिन्नशब्दोपात्तत्वान्न भवतीत्यपि न युक्तम्।

एवं स्वीकारेऽपि चन्द्रपदोपस्थाप्ययोः **'चन्द्रकान्तिमतोः'** चन्द्रतत्सदृशयोरेव वा ताद्रूप्यप्रतिपत्तिसम्भवेऽपि **'वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते'** इत्यादावनुभवसाक्षिकस्य मुखचन्द्रयोस्ताद्रूप्यस्य प्रतीतेरसम्भवात्। यद्यपि 'चन्द्रसदृशम्' 'कान्तिमत्' वा मुखमेव, तथापि मुखत्वविशिष्टे मुखे चन्द्रताद्रूप्याप्रत्ययादाक्षेपानुपपत्तेः।

एवं रूपकेषु समासरहितेषु **'मुखं कमलम्'** इति वाक्येष्वपि सर्वत्र विषयविषयिवाचकपदयोः सामानाधिकरण्ये सति विषयिणः (उपमानस्य) स्वसदृशे स्ववृत्तिगुणवति वा लक्षणेत्यपि न युक्तम्। रूपकोपमयोर्भेदानिष्पत्तेः।

## रूपके सादृश्यलक्षणास्वीकारे चक्रकापत्तिः—

**विद्वन्मानसहंस वैरिकमलासङ्कोचदीप्तद्युते !**
**दुर्गामार्गणनीललोहित समित्स्वीकारवैश्वानर !**
**सत्यप्रीतिविधानदक्ष ! विजयप्राग्भावभीमप्रभो !**
**साम्राज्यं वरवीर ! वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥**

इति पद्ये रूपकं सकलसहृदयसम्मतम्। परमत्र लक्षणास्वीकारे हंसादिशब्दानां वर्णनीये राजनि मुखकमलयोरिव सादृश्यमप्रसिद्धम्, अतो लक्षणायाः प्रसाराय सादृश्यं कल्पनीयम्। सादृश्यं च साधर्म्यप्रयोज्यम्, अतः साधर्म्यनिष्पत्तये मानसपदे श्लेषः स्वीकार्यः। तेन मानसशब्दस्य मानसं (हृदयम्) मानसं सरश्चार्थः; अनयोरेकपदोपस्थाप्यतयाऽभेदाध्यवसायः। एवं हंसभूपयोर्मानसवासित्वरूपसाधर्म्यसिद्धौ सत्यां हंसादिपदानां तत्सदृशे लक्षणा। श्लेषोत्थापकं चात्र रूपकम्। रूपके च लक्षणाऽपेक्षिता। एवं लक्षणासादृश्यसापेक्षा, सादृश्यं च श्लेषसापेक्षम्, श्लेषश्च रूपकसापेक्षम्, रूपकं च लक्षणासापेक्षमिति चक्रकापत्तिः। अतो लक्षणावसरे सादृश्यानिष्पत्तेः कथमत्र लक्षणा ?

## अन्योन्याश्रयोपपादनम्—

न च रूपकात् प्रागेव श्लेषेणार्थद्वयोपस्थितौ, तयोरेकपदोपस्थाप्यत्वप्रयुक्ताभेदाध्यवसायेन साधर्म्यसिद्धौ लक्षणासम्भव इति शङ्क्यम्। अत्र मानसपदस्यार्थद्वयं कवेर्विवक्षितमित्यत्र रूपकमेव गमकम्। रूपकं विनाऽर्थद्वये गमकाभावेन श्लेषोत्थानाभावात्। इत्थं रूपकं श्लेषसापेक्षम्, श्लेषश्च रूपकसापेक्षमित्यन्योन्याश्रयः।

अपि च नानार्थस्थले प्राचीनाः (मम्मटादयः) प्रकरणेनाभिधा नियन्त्रिता भवतीति स्वीकुर्वन्ति। अतो रूपकात् पूर्वं प्रकरणसम्बन्धं विना मानसशब्दस्य सरोरूपार्थाभिधानं श्लेषेणायुक्तम्।

**चक्रवर्तिमतम्—**

पूर्वतः सिद्धं रूपकं यदि श्लेषं ज्ञापयति, तदा रूपकमन्यथा श्लेष इति रूपकश्लेषयोर्विभागव्यवस्थां कृतवता चक्रवर्तिनाऽप्युक्तम्—

**रूपकं पूर्वसंसिद्धं श्लेषं तज्ज्ञापयेद् यदि।**
**तदा रूपकमेव स्यादन्यथा श्लेष इष्यते[1]॥ इति**

अतो रूपकात् पूर्वमत्र श्लेषादर्थद्वयप्रतिपादनमसम्भवमेव।

**लक्षणां विनैवाभेदान्वयः—**

इत्थं दीक्षितः स्वाभिप्रायं प्रकटयन्नूचे यत्—'विद्वन्मानसहंस' इत्यादौ हंसादिपदानां राजनि लक्षणा नाङ्गीकार्या, सामानाधिकरण्येन वाक्यार्थविधयैवाभेदप्रतीतेः। 'विद्वन् मानसहंस' इति वाक्यमेव यदा भूपहंसयोरभेदं प्रतिपादयति, तदा को नाम तमभेदं निवारयितुमिष्टे। अत्यन्तमसतोऽप्यर्थस्य शब्दः प्रतीतिं कारयत्येव[2]। न च बाधनिश्चयः प्रतिबन्धकः स्यात्, तस्याशाब्दस्थले प्रवृत्तेः।

अतो विषयविषयिणोः सामानाधिकरण्येनाभेदप्रतीतावप्यालङ्कारिकसम्मततादूप्यप्रतीतिर्लक्षणां विना कथं स्यादिति विचिकित्सा न कर्तव्या, तयोः सर्वत्र तादूप्यप्रत्यये मानाभावात्। अन्यथा—'**उर्ध्वं विरिञ्चिभवनात्तवनाभिपद्मात्**[3]' इत्यादौ तादूप्यप्रतीतावभेदप्रतीतिभङ्गापत्तेः। तत्रैवकारसाक्षात्पदाभ्यां प्रयुक्ताभ्यामभेदस्यैव स्फुटं प्रतीतेः।

न चैवं 'विद्वन् मानसहंस' इत्यादौ विषयविषयिणोरभेदस्वीकारेऽतिशयोक्तिः स्यात्, विषयविषयिणोस्तादूप्यप्रतीतौ रूपकम्, तयोरभेदप्रतिपत्तावतिशयोक्तिरिति व्यवस्थितेः। अस्या व्यवस्थाया अनङ्गीकारात्। अन्यथा—

**हृत्पङ्कजानि भजतां प्रतिबोधयन्ती संसारसागरमपि प्रविशोषयन्ती।**
**ज्योत्स्ना त्वदङ्घ्रिनखचन्द्रसमुद्गतेयमन्यादृशीमभयदां प्रकृतिं बिभर्ति[4]॥**

इत्यत्र ज्योत्स्नेति विषयिपदमात्रनिर्देशः, तेन विषयो नखकान्तिरूपो निगीर्णः, तथाप्यत्र प्रसिद्धज्योत्स्नायास्तादूप्यमात्रस्य प्रतीतिः, नाभेदस्य। यतो हि प्रसिद्धज्योत्स्ना कुमुदानि विकासयति न पङ्कजानि न वा जलं शोषयति। नखसमुत्थज्योत्स्नातूभयं करोति, अतोऽभेदो न विवक्षितः। तादूप्यमेव विवक्षितम्। परमत्रातिशयोक्तिरेव न रूपकम्।

---

१. वृ. वा. द्वि. प. उद्धृतम्। २. वृ. वा. प्र. प.। ३. अत्यन्तासत्यपि ह्यर्थे शब्दः ज्ञानं करोति हि—इति हरिकारिकोक्तेः। ४. वृ. वा. द्वि. प.।

**रूपकातिशयोक्त्योर्भेदः—**

अतो विषयविषयिपदसामानाधिकरण्ये रूपकम्, विषयिपदमात्रनिर्देशेऽतिशयोक्तिरिति नियम आदर्तव्यः। न तु ताद्रूप्ये रूपकमभेदेऽतिशयोक्तिरिति नियमः। एवं 'विद्वन् मानसहंस' इत्यादावभेदप्रतिपत्तौ सत्यामपि रूपकं सम्भवतीति न काचन क्षतिः।

परं रूपकातिशयोक्त्योरेवं भेदस्वीकारे शब्दवैचित्र्यमात्रकृतो भेदो निष्पन्नः। एवमनयोरर्थालङ्कारत्वं न स्यात्, अतस्ताद्रूप्ये रूपकमभेदेऽतिशयोक्तिरित्येव नियमः स्वीकार्य इत्युच्यते प्राचीनैः, तदा 'विद्वन्मानसहंस' इत्यत्राऽभेदप्रतीतेरतिशयोक्तिर्विषयविषयिसामानाधिकरण्येऽपि स्वीकार्या। **'ज्योत्स्ना त्वदङ्घ्रिनखचन्द्रसमुद्गतेयम्'** इत्यादौ विषयिमात्रनिर्देशेऽपि प्राचीनाभिमतामतिशयोक्तिमपहाय रूपकमेव स्वीकर्तव्यम्। न च स्वीक्रियते। तस्माद् मदुक्त एव नियम आदरणीयः। एतादृशस्थले समभिव्याहारादेवाभेदप्रतीतिः, लक्षणाप्रयासस्तदर्थं व्यर्थः।

परमेवं सर्वत्र विषयविषयिवाचकपदसामानाधिकरण्यस्थले समभिव्याहारादेवाभेदप्रतीतौ सारोपलक्षणाया विषयापहारः स्यात्, इति शङ्कायां दीक्षितो निःशङ्कं वदति, भवतु विषयापहारो न काप्यनुपपत्तिः, प्रत्युतेष्टापत्तिरिति।

**अत्र रसगङ्गाधरकारमतम्—**

अत्र पण्डितेन्द्रो जगन्नाथः पूर्वं दीक्षितमतं सम्यगुपपाद्य स्वमतमाह[1]—विषयविषयिणोः सामानाधिकरण्ये समभिव्याहारबलाद् नामार्थयोरभेदान्वयेनैवाभेदोपपत्तौ रूपके लक्षणा व्यर्थैवेति यदुच्यते, तत्रोच्यते—

साधारणधर्मस्याप्रतीतिं विना यथोपमा न निष्पद्यते, तथैव रूपकमपि न स्फुरतीति सर्वेषामनुभवः। अत एव **'भारतं नाकमण्डलम्'**, **'नगरं विधुमण्डलम्'** इत्यादि वाक्यश्रवणानन्तरमभेदान्वयबोधे सत्यपि रूपकालङ्कारस्य तावन्न निष्पत्तिः, यावत् **'सुपर्वालङ्कृतम्'** **'सकलकलम्'** इत्यादिसाधर्म्यबोधकपदानि विशेषणतया न श्रूयन्ते।

**'मुखं चन्द्रः'** इत्यादिप्रसिद्धरूपकोदाहरणे साधर्म्यस्य प्रसिद्धतया नियमतस्तत्र साधर्म्यवाचकपदस्यापेक्षा न वर्तते। अप्रसिद्धस्थले तु रूपकनिष्पत्तये साधर्म्यं नियमतोऽपेक्षितम्। अतः साधर्म्यरूपं सादृश्यं यदि लक्षणया न ज्ञातं स्यात्, तदा तत्र रूपकमपि न पर्यवसितं स्यात्। चमत्कारोऽपि न स्यात्। अतस्तत्र प्राचीनैरुक्ता लक्षणा युक्तैव।

पदार्थयोरभेदज्ञाने तज्जन्यचमत्कारे वा साधर्म्यज्ञानं प्रयोजकम्, अतः साधारणधर्माभाने सत्याहार्याभेदबुद्धिरपि न स्यात्, इति न शङ्क्यम्। उक्तं हि—

---

१. रसगङ्गाधरे द्वि० आ० ल० नि०।

यद्यनुष्णो भवेद् वह्निर्यद्यशीतं भवेज्जलम् ।
मन्ये दृढव्रतो रामस्तदा स्यादप्यसत्यवाक्[1] ।।

इत्यादौ यद्यनुष्णाभिन्नो वह्निः स्यात्, यद्यशीताभिन्नं जलं स्यादित्यादिरीत्या साधारणधर्मस्याभानेऽपि 'अनुष्णवह्न्योरशीतजलयोः' अभेदप्रतीतिस्वीकारात् । उपमानोपमेयभाव एवाहार्याभेदबुद्धौ साधर्म्यज्ञानं प्रयोजकम्, नान्यत्रेति कल्पनादपि न निस्तारः, अस्यां कल्पनायां मानाभावात् ।

'मुखं यदि चन्द्रः स्यात्, तदा भूम्यवस्थितं न स्यात्' इत्युपमानोपमेयभावस्थले साधारणधर्मवाचकपदाभावेऽप्यभेदप्रतीतेः ।

न च **प्राचीनरीत्या** रूपके यद्युपमानवाचकपदस्य स्वसदृशे लक्षणा स्वीक्रियते, तदा **'सिंहेन सदृशो नायं किन्तु सिंहो नराधिपः'** इत्यत्र द्वितीयसिंहशब्दस्यापि लक्षणया सिंहसदृश एवार्थः । एवं पूर्ववाक्येन सिंहसादृश्यं निषिध्यापरवाक्येन पुनस्तस्यैव प्रतिपादनमसङ्गतं स्यादिति रूपके लक्षणास्वीकारे दोषः । **मदीयरीत्या** तु पूर्ववाक्येन सादृश्यं निषिध्योत्तरवाक्येनाभेदः प्रतिपाद्यत इति नासङ्गतिरिति वाच्यम्, रूपके ताद्रूप्यप्रतिपत्तेः स्वीकारात् । **प्राचीनमतेऽप्यसङ्गतेरभावात्** ।

तथा हि—सादृश्यं द्विविधम्—(१) नैयायिकाभिमतम्, (२) मीमांसकाभिमतं च ।

तत्र नैयायिकाभिमतं भेदघटितम्, मीमांसकाभिमतं भेदाघटितम् । रूपके भेदाघटितं सादृश्यं विवक्षितम् । एवमत्र 'सिंहेन सदृशो नायम्' इत्यनेन भेदघटितसादृश्यस्य निषेधः । 'सिंहो नराधिपः' इति रूपके सिंहशब्दस्य तत्सदृशे लक्षणायामपि भेदाघटितं सादृश्यं विधेयमिति नासङ्गतिः ।

यत्तु दीक्षितेनोक्तं यद् रूपके लक्षणां विनैवाहार्य्याभेदप्रतीतिः, अत एव 'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्' इत्यत्र राजा नारायण इवेति विग्रहे उपमितसमासे पूर्वपदार्थस्य राज्ञ उपमेयस्य प्राधान्यादुपमायाः प्रतीतौ लक्ष्मीकर्तृकराजकर्मकमालिङ्गनं विरुद्धं स्यात्, न हि काचन कुलीनाऽङ्गना स्वपतिसदृशमन्यमालिङ्गति । अतोऽत्र रूपकम् । रूपकेऽपि राजा नारायण एवेति विग्रहे विशेषणसमासे उत्तरपदार्थस्य प्राधान्येऽपि यदि नारायणशब्दस्य नारायणसदृशेऽर्थे लक्षणा, तदाऽपि स एव दोषः । अतोऽत्र लक्षणां विनैवाभेदप्रतीतिर्युक्ता ।

एवं **'पादाम्बुजं भवतु नो विजयाय मञ्जुमञ्जीरशिञ्जितमनोहरमम्बिकायाः'** इत्यत्र पादयोरम्बुजाभेदप्रतिपत्तौ मञ्जुमञ्जीरशिञ्जितमनोहरत्वोपपादनमनुपपन्नं स्यात्, नह्यम्बुजे मञ्जुमञ्जीरसिञ्जनयोगः । अतोऽत्रोपमितसमासे पूर्वपदार्थस्य प्राधान्यात् पादयोर्मञ्जीरशिञ्जनसम्बन्धोपपत्तेरुपमा युक्ता । **प्राचीनानां मम्मटादीनामप्यत्रैवाभिप्राय** इति । तत्तु न समीचीनम् । यतो हि—'राजनारायणम्' इत्यत्र विशेषणसमासे नारायणस्योत्तरपदार्थस्य प्राधान्याद् नारायणसदृशस्य राज्ञो नारायणत्वेनैव प्रतीतौ लक्ष्मीकर्तृकमालिङ्गनमुपपन्नम् । पादाम्बुजमित्यत्र

१. र. ग. द्वि. आ. ल. नि. ।

रूपकस्वीकारे प्रधानीभूतोत्तरपदार्थस्याम्बुजस्य तत्सदृशे लक्षणयाऽम्बुजसदृशस्याप्यम्बुजत्वेनैव प्रतीतेर्मञ्जीरशिञ्जनमनुपपन्नम्, अतस्तत्रोपमितसमास इति न काचित् क्षतिः ।

न च 'पादाम्बुजम्' इत्यत्रोपमितसमासेऽप्यम्बुजपदस्य लक्षणयाऽम्बुजसदृशेऽर्थेऽम्बुजाम्बुजसदृशयोरेकपदेनोपस्थाप्यत्वादभेदाध्यवसायेन (एकपदोपस्थाप्यार्थद्वयेऽभेदाध्यवसानमिति नियमः) ताद्रूप्येऽप्यम्बुजताद्रूप्यवति सदृशपदार्थे पादेऽप्यम्बुजत्वमेव प्रतीयते, न पादत्वम् ।

यथा 'वक्त्रे चन्द्रमसि स्थिते किमपरः शीतांशुरुज्जृम्भते'[1] इत्यत्र वक्त्रे चन्द्रत्वप्रतिपत्तिरुपपादितेति शङ्क्यम्, उपमितसमासे भेदघटितसादृश्यस्यालङ्कारिकैः स्वीकारात् । 'सादृश्यमुपमाभेदे' इति मम्मटाचार्योक्तेः[2] । 'मुखं चन्द्रः' इत्यत्र चन्द्रशब्दस्य चन्द्रसदृशे लक्षणया सादृश्यमत्र शब्दत उपात्तम्, अतोऽत्रोपमा स्यादिति न शङ्क्यम्, भेदाघटितसादृश्यस्य रूपकालङ्कारविषयत्वात् । भेदघटितसादृश्यं प्रतिपादयितुं 'मुखं चन्द्रः' इति शब्दस्य प्रयोगो विरुद्धः । ताद्रूप्यप्रतिपादनेच्छयैवात्र लाक्षणिकशब्दप्रयोगः । प्रयोजनमभिसन्धायैव रूढिव्यतिरिक्तया लक्षणयाऽर्थं प्रतिपादयन्ति मनीषिणः । भेदस्ताद्रूप्यं च मिथो विरुद्धम्, अतः समकालमेव तयोर्बोद्धबुद्धिविषयित्वाऽसम्भवात् ।

अथ 'पुरुषव्याघ्रः' इत्युपमितसमासे व्याघ्रशब्दस्य व्याघ्रसदृशे लक्षणा शाब्दिकादृते सर्वैः स्वीक्रियते । अन्यथा समासे सादृश्यप्रतीतिर्न स्यात्, सादृश्यवाचकशब्दाभावात् । यद्यपि 'पुरुषो व्याघ्र इव' इति विग्रहवाक्ये इवशब्दः सादृश्यवाचकोऽस्ति, तथापि तस्य समासे सम्बन्धो नास्ति । समासेऽपि इवशब्दस्य सम्बन्धस्वीकारे तत्राऽपि इवशब्दः श्रूयेत; न च श्रूयते । समासे सादृश्यप्रतीतिर्नास्तीति वक्तुं न पार्यते, 'पुरुषो व्याघ्र इव' इति विवरणदर्शनात् । विवरणविव्रीयमाणयोः समानार्थकत्वमिति नियमात् । अतोऽत्र व्याघ्रपदस्य व्याघ्रसदृशे लक्षणाऽङ्गीकर्तव्या । तस्याश्च ताद्रूप्यप्रतीतिः फलम् । ताद्रूप्यप्रतिपत्तौ च रूपकापत्तेः । कथं द्विलुप्ता लुप्तोपमाऽत्र प्राचीनैरुपपादिता सङ्गतेति शङ्काप्यत्र नोचिता ।

**वैयाकरणानां** मतेऽत्र लक्षणाऽभावात् । समासे समुदायशक्त्यैव व्याघ्रनिरूपितभेदघटितसादृश्यविशिष्टः पुरुष इत्यर्थः प्रतीयते । नात्रोपमानवाचकपदस्य लक्षणा । अन्येषां (नैयायिकादीनां) मतेऽत्रोत्तरपदस्य भेदघटितसादृश्यविशिष्टे रूढिलक्षणा स्वीकारात् । ताद्रूप्यप्रतीतिश्च प्रयोजनवत्यां भवतीति नात्र रूपकम् । अपि तु उपमैव ।

अत्र व्याघ्रशब्दस्यैव लक्षणया सादृश्यप्रतिपादकत्वाद् उपमानाद्यकरम्बितसादृश्यस्य तद्विशिष्टस्य वा प्रतिपादकशब्दाभावाद् वाचकलुप्तात्वं ताद्रूप्यस्या- (स्ववृत्तिशौर्यादिगुणसमानगुणवत्त्वस्य) प्रतीतेर्धर्मलुप्तात्वमिति द्विलुप्तात्वमपि युक्तमेव ।

---

१. र० गं० आ० ल० नि० । २. का० प्र० द० उ० ।

यश्च 'विद्वन्मानसहंस' इत्यत्रान्योन्याश्रयदोष उद्भावितः, सोऽप्ययुक्त एव। यतो हि काव्ये सर्वेऽर्थाः कल्पनाप्रसूताः। कल्पनया च युगपदेव सर्वं सम्पाद्यते इति न दोषः। लोकेऽपि शिल्पिनः परस्पराश्रितशिलेष्टकादिभिर्गृहादीनि निर्मान्त्येवेति परस्पराश्रितत्वेऽपि दोषाभावात्।

यदप्युक्तं रूपके सदृशलक्षणायाः फलं ताद्रूप्यप्रतीतिर्भवितुं नार्हति, तत्सदृश इति शब्दादपि सादृश्यप्रतीत्यनन्तरं ताद्रूप्यप्रतीत्यापत्तिरिति। तदपि युक्तम्— तत्सदृश इति शब्दादभिधयैव सादृश्यबोधो जायते न लक्षणया। लक्षणाया एव फलं ताद्रूप्यप्रतीतिरितिप्राचां सिद्धान्तात्।

महाभाष्येऽपि **"पुंयोगादाख्यायाम्"** (पा० सू० ४।१।४८) इति सूत्रे ताद्रूप्यसम्प्रत्यय उपपादितः। 'ताद्रूप्यमारोप्यते न तु मुख्यमित्युक्तेः' इति। नवीनमतस्वीकारे सर्वमिदमाकुलीभूतं स्यादिति।

**अत्र काव्यदर्पणकृन्मतम्—**

राजचूडामणिदीक्षितोऽपि दीक्षितमतमनूद्य निरास्थत। तस्यायं भावः— यद्यपि मुखं चन्द्र इत्यत्र चन्द्रपदात् चन्द्रसदृशस्यैव लक्षणया बोधः, तथाप्युपमातो रूपकस्यायं भेदः, यद्रूपके उपमानवाचकपदेनैव सादृश्यप्रतिपादनम्। उपमायां चोपमानवाचकपदादन्येन पदेनेवादिना सादृश्यं प्रतिपाद्यत इति।

'पद्माक्षि' इत्यादौ लुप्तोपमोदाहरणे तूपमानवाचकपदेनैव लक्षणया सादृश्यं प्रतिपाद्यते, न त्वन्येनेति कथं तत्र लुप्तोपमेति नैव शङ्क्यम्। 'दधि पश्य' इत्यत्र यथा लुप्ताविभक्तिरेव कर्मत्वप्रत्यायिका, तथा 'सप्तम्युपमानपूर्वपदस्य' इत्यादि-समासशास्त्रबलेन लुप्तस्यैवादेरेव सादृश्यप्रत्यायकत्वमिति नोपमानवाचकपद्मादि-पदात् तत्र सादृश्यप्रतीतिरिति।

यत्किञ्चिद् भेदमादायालङ्कारभेदोपपादनमयुक्तमित्यपि न। प्रस्तुता-प्रस्तुतयोरेकधर्मान्वये दीपकालङ्कारः। प्रस्तुतयोरेवैकधर्मान्वये तुल्ययोगिता स्वीकारेण यत्किञ्चिद् भेदमादायाप्यलङ्कारभेदोपपादनं युक्तमेव।

अपि च **'चन्द्र इव मुखं मुखमिव चन्द्रः'** इत्यत्र तृतीयसदृशव्यवच्छेदरूपं फलभेदमनुसन्धायोपमेयोपमाऽलङ्कारः पृथक् स्वीक्रियते सहृदयैः, न तूपमाप्रतीपयोः संसृष्टिः। तथैवार्थप्रतिपादनाय मुख्यं शब्दं विहाय लाक्षणिकः प्रयोगः किमर्थं इति शङ्काया निरासाय सदृशलक्षणायास्ताद्रूप्यप्रतिपत्तिः फलं स्वीक्रियते। एवं फलभेदसत्त्वादलङ्कारभेदे न विरोधः। 'चरणारविन्दमुत्तंसयन्ति' इत्यत्र यो दोष उपपादितो दीक्षितेन सोऽपि न युक्तः। यतो हि चरणेऽपि सादृश्यलक्षणया अरविन्दताद्रूप्यप्रतीत्योत्तंसनरूपकार्यसिद्धेः, रूपकव्यवस्थोपपत्तेः।

यच्च **दीक्षितेन** 'विद्वन्मानसहंस' इत्यत्र लक्षणा स्वीकारेऽन्योन्याश्रयदोष उद्भावितः, तथा 'मुखं चन्द्रः', 'राजा हंसः' इत्यादौ प्रायः क्वापि लक्षणा

---

१. म० भा० च० अ० प्र० पा० ४८ तमसूत्रे। २. का० द० द्वि० उ० ६५-६७ पृष्ठं यावत्।

नाङ्गीकार्या। सर्वत्र मुखादिवृत्तिचन्द्रादितादूरूप्यस्य सामानाधिकरण्यवलेन वाक्यार्थविषयैव प्रतीतेः, लक्षणां विनैव तादूरूप्यप्रतिपत्तौ लक्षणाऽफलैवेति यदुक्तम्, तत्रोच्यते—न हि प्रसिद्धसादृश्यमत्र लक्ष्यम्, किन्तु सादृश्यमात्रं लक्ष्यम्। सहृदयः श्रोता 'विद्वन्मानसहंस' इत्यादिवाक्यं श्रुत्वा, आप्तेन वक्त्रा भूपहंसयोः सामानाधिकरण्येन प्रयोगः सादृश्यविवक्षयैव कृत इति प्रथमं निश्चिनोति। पश्चादत्र वक्त्रा विवक्षितं सादृश्यमन्विष्यन् श्लेषेणाभिव्यक्तेन मानस-मानससरसोरभेदाध्यवसायेन मानसवासित्वरूपं साधर्म्यं (सादृश्यं) निश्चिनोति। इत्थं विचारणायां न काऽप्यनुपपत्तिः परिस्फुरति। 'मुखं चन्द्रः' इत्यादि वाक्यं वक्त्रा सादृश्यविवक्षयैव प्रयुक्तम्। अतश्चन्द्रसादृश्यं वक्तृतात्पर्यीभूतं लक्षणां विना कथं प्रतीतिपथमवतरेद् इति, अवश्यं लक्षणोपास्येति।

वस्तुतस्तु 'मुखं चन्द्रः' इत्यत्र मुखे चन्द्रतादूरूप्यप्रतीतिः सकलसहृदयानुभवसिद्धा। अतश्चन्द्रपदस्य चन्द्रतादूरूप्ये एव लक्षणा स्वीकर्तव्या। सादृश्यप्रतीतिस्तु तस्याः फलम्। अत एव रूपकादावुपमाव्यङ्ग्यरूपेणावस्थितेति साम्प्रदायिका निगदन्ति।

अस्मिन् पक्षे 'अन्यवृत्तिधर्मस्यान्यस्मिन्नभावात् चन्द्रतादूरूप्यस्यापि मुखगतत्वाभावेन चन्द्रतादूरूप्यं प्रवृत्तिनिमित्तीकृत्य चन्द्रपदस्य मुखे प्रवृत्तिरयुक्तेति चेत्, सत्यम्; चन्द्रपदस्य लक्षणया चन्द्रतादूरूप्ये लक्षिते सामानाधिकरण्यबलाद् मुखे तत्तादूरूप्यस्य प्रतीतावविरोधात्।

लक्षणां विनैव सामानाधिकरण्यबलेन तादूरूप्यप्रतीतिर्न शङ्क्या, अनुभवसिद्धायाश्चन्द्रतादूरूप्यप्रकारिकायाः प्रतीतेर्लक्षणां विनाऽनिर्वाहात्। नीलमुत्पलम्' इत्यादौ सामानाधिकरण्येनाभेदप्रतीतावपि तादूरूप्यप्रतीतेरभावात्। विषयविषयिणोः सामानाधिकरण्येन निर्देशे सर्वत्र तादूरूप्यमेव विवक्षितम्। अभेदप्रतीतिस्तु विषयिवाचकमात्रपदोपादानादेव सिद्धा, यथातिशयोक्तौ। अभेदप्रत्यायनाय विषयविषयिणोर्द्वयोरुपादानं व्यर्थं स्यात्, केवलाद् विषयिणः प्रत्यायनात्।

यद्यपि 'साक्षाच्चन्द्र एवेदं मुखम्' इत्यत्र विषयविषयिवाचकपदद्वयोपादानेऽप्येवकारसाक्षात्पदाभ्यां चन्द्राभेदस्यैव प्रतीतिर्भवति, तथापि एवंविधस्थले (यत्र 'साक्षात्पदम्' 'एवपदम्' उपात्तं तत्र) अभेदप्रतीतावपि सामान्यतः पदद्वयोपादानस्थले तादूरूप्यप्रतीतेरेवानुभवसिद्धत्वादिति।

## नागेशमतम्—

अत्र नागेशो दीक्षितमतमेव समर्थयाञ्चक्रे[1]। तद्यथा—'नास्ति लक्षणा' इति प्रतीकमादाय मास्तु (रूपके) लक्षणा। नामार्थयोरभेदान्वय एवास्तु। न चाभेदान्वयस्य मुखं न चन्द्र इत्याकारकबाधनिश्चयः प्रतिबन्धकः स्यात्, सादृश्य-

१. र. ग. ध. द्वि. आनने लक्षणा निरूपणे रूपके लक्षणेति प्राचीनमतसमर्थनावसरे गुरुमर्मप्रकाशे।

ज्ञानरूपदोषस्योत्तेजकत्वात् । सादृश्यज्ञानं च ययोः सादृश्यं प्रसिद्धं तत्र साधारणधर्मानुपादानेऽपि 'एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयति' इति न्यायाद् जायते। साधर्म्यस्मृतौ सादृश्यज्ञानरूपदोषसहकारेण शब्दादभेदप्रतीतिः। यथा शङ्खो न पीत इति निश्चयेऽपि काचकामलादिदोषेण शङ्खे पीतत्वं प्रतीयते। यत्रेवादिशब्दानामुपादानं तत्रेवादिना भेदघटितसादृश्यस्यैवोपपादनाद् नाभेदप्रतीतिरिति।

**समीक्षा–**

इत्थं **राजचूडामणिर्दीक्षितमतं** निराकृत्यापि निराकर्तुं न शशाक। तथा हि मुखं चन्द्र इत्यत्र चन्द्रपदस्य चन्द्रसदृशे लक्षणायां सादृश्यस्य शब्दोपात्तत्वेनात्रोपमा स्यात्, इति दीक्षितकृतस्याक्षेपस्य 'उपमानवाचकपदादन्येन पदेन सादृश्यप्रतिपादने एवोपमाङ्गीकारादिति समाधिमाह। परमप्पय्यदीक्षितेनाक्षिप्ते 'पादाम्बुजानि' इत्यत्र कः समाधिः ? तत्र तूपमानवाचकपदेनैव सादृश्यप्रतिपादनम्, अतः कथमुपमा ? इति शङ्कां तत्समाधानं च दूरतः परित्यज्य पद्माक्षि इत्यत्र बहुव्रीहिस्थले 'पद्मे इव अक्षिणी यस्याः सा' इति विग्रहे **'सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च'** इति वार्तिकेन समासे इवेत्यस्य लोपे च लुप्तस्येवादेः सादृश्यवाचकत्वं नोपमानवाचकपदस्येति समादधे।

अपि च सामान्यतः विषयविषयिवाचकपदद्वयोपादाने ताद्रूप्यप्रतीतिमेव स्वीचक्रे नाभेदम्, अनुभवबलात्। परं **'तत्त्वं सत्वं कथय भगवन्! को हतस्तत्र पूर्वम्'** इत्यत्र राजनि नारायणाभेदप्रतिपत्तिमन्तरा 'सत्त्वं तत्त्वं कथय' इत्युक्तेः का गतिः ? अतो रूपके ताद्रूप्यमेवातिशयोक्तावभेद एव प्रतीयत इति न समीचीनं भाति। अतोऽप्पयदीक्षितेन रूपकातिशयोक्त्योर्यो भेद उपपादितः— 'विषयविषयिपदसामानाधिकरण्ये रूपकम्, विषयिपदमात्रनिर्देशेऽतिशयोक्तिः' इति स एवादरणीयः।

पण्डितराजोऽपि अत्र दीक्षितमतं **'नव्यास्तु'**[1] इति बहुवचनान्तपदेन सबहुमानमन्ववादीत्। रूपकशाब्दबोधमीमांसाऽपि नव्यमतेन प्राचीनमतेन च पृथक् पृथक् प्रास्तौत्। **'अभेदस्तावद्विशेषणस्य संसर्गः'**[2] इत्यादिना दीक्षितमतमनुसरदित्येव। अग्रे चाह स्म 'तदिदं रूपकं विषयविषयिणोः सामानाधिकरण्ये अपदार्थतया संसर्गः'[3]। यथा—'बुद्धिदीर्घकला' इत्यादौ।

इत्थं दीक्षितमतमपि प्रौढया समर्थयामास **पण्डितेन्द्रः**, तथापि **प्राचीनानां** मतमपि 'निर्दुष्टमुपपत्तिमत्' इति समर्थनाय तथा प्रयासस्तेषु बहुमानतयेति। (राजचूडामणिदीक्षितोऽपि प्राचीनमतेष्वत्यादरादेव दीक्षितमतं निराकुर्वन् प्रतिभाति। क्लिष्टकल्पनाऽपि तत्र वर्तत एव)। पादाम्बुजमित्यत्रोपमासिद्धये रूढिलक्षणा 'मुखचन्द्रः' इत्यत्र प्रयोजनवतीत्यत्र का वाचो युक्तिः ?

---

१. र. ग. द्वि. आ. ल. नि.। २. र. ग. रूपकालङ्कारे। ३. र. ग. द्वि. आ. रूपकालङ्कारे।

उपमानोपमेयस्थले अभेदबुद्धौ साधारणधर्मज्ञानं प्रयोजकमिति नव्यमतस्य निराकरणाय पूर्वम्—'यदेकत्र साधारणो धर्मः प्रसिद्धतया नियमतः स्वबोधक-श्रुतिं नापेक्षते[१]' इत्युपपाद्यापि 'साधारणधर्मस्यानुपस्थितिदशायामपि मुखं यदि चन्द्रः स्यात् तदा भूम्यवस्थितं न स्यात् इत्यादौ तादृशप्रतीत्युपगमाच्च[२]' इति यद् वदति पण्डितराजः, तत्प्राचीनमतस्य यथाकथञ्चित् समर्थनायैवेति सहृदयैर्विचार-णीयम्। वस्तुतः प्रतिभाशालिनो विद्वांसः सर्वं समर्थयितुं समर्था इति समर्थयन्ति अत्र प्राचीनमतम्। युक्तञ्च प्रतिभाति सर्वैरालङ्कारिकैरनुसृतं च, तथापि दीक्षित-स्योद्भावनं स्वोपज्ञं विदुषां हृदयं हरतीति नात्र संशीतिलेशः।

अत एव विद्वद्वरो नव्यवैयाकरणमूर्धन्यो नागेशो गुरुमर्मप्रकाशे मास्तु लक्षणे[३]त्यादिनोपमानवाचकपदानां स्वसाश्ये लक्षणाया निषेधमकृतद्।

यत्त्वाधुनिकः कश्चन टीकाकारो नागेशमतं निराकुर्वन्नाह—'सादृश्यज्ञानस्य दोषता न क्वापि प्रसिद्धा[४]' इति। सदृशलक्षणाकल्पनाऽपेक्षया सादृश्यज्ञानस्यो-त्तेजकत्वकल्पने लाघवमपि नास्त्येवेति च, तदतितुच्छम्—चाकचिक्यादिदोषेणैव शुक्तौ रजतभ्रम इति सर्वसम्मतः पन्था। तत्र सादृश्यमेव मूलमिति मीमांसि-तव्यम्। अपि च साधर्म्यज्ञानं सदृशलक्षणायामप्यपेक्षितम्, लाक्षणिकबोधानन्तरं पुनर्व्यञ्जनयाऽभेदप्रतीतिः। सादृश्यज्ञानस्योत्तेजकत्वकल्पने नामार्थयोरेवाभेदा-न्वये लक्षणातन्मूलव्यञ्जनयोरनावश्यकत्वात्, स्फुटं लाघवमिति विचार्यम्।

अपि च '**सिंहेन सदृशो नायं किन्तु सिंहो नराधिपः**' इत्यत्र सर्वेषां नराधिपे सिंहाभेदप्रतीतिरेवानुभवसिद्धा। सा च श्रोतुः शब्दश्रवणानन्तरं मुख्यार्थबाधादि-प्रतिसन्धानमन्तरेणैवेति कथं तत्र लक्षणाया अवकाशः? बाधनिश्चययस्य प्रतिबन्धकता तु शाब्दान्यस्थल एव सर्वैः स्वीकारात्। 'वह्निना सिञ्चति' इत्यत्र योग्यताविरहात् शाब्दबोधाऽभावं वदन्ति **नैयायिकाः**। वस्तुतस्तत्र शाब्द-बोधो भवत्येव। अत एवाद्रवेण वह्निना कथं सेकं वदतीत्युपहासो जायते; योग्यताभावात् प्रामाणिकबोधाभावाद् वाक्यमप्रमाणमिति।

एवं सर्वत्र नामार्थयोरभेदान्वयस्वीकारे आहार्य्यारोपेऽपि बाधनिश्चयस्या-प्रतिबन्धकत्वात् तत्रारोपित एवाभेदो न तु मुख्यः।

अत एव '**तादूरूप्यमारोप्यते न तु मुख्यम्**[५]' इति महाभाष्यानुकूलमेव दीक्षितमतम्। तथापि प्राचीनानां मतस्वीकारेऽपि दोषाभावात्तथा समर्थितं परमनव्यैः।

### ग्रन्थस्य पूर्णताविचारः—

अत्र केचन संशेरते यदयं ग्रन्थोऽपूर्णः। यतो हि व्यञ्जनानिरूपणमत्र न कृतम्। निर्णयसागरमुद्रणालयतः १९४० तमे खिस्ताब्दे मुद्रितेऽस्मिन् पुस्तके

१. र. ग. द्वि. आ. ल. नि.। २. तत्रैवाग्रे। ३. र. ग. द्वि. आ. ल. नि. गु. म. प्र.। ४. श्रीमदनमोहनझा र. गं. द्वि. आ. चन्द्रिकायां १७७ पृष्ठे।
५. व्या. म. मा. ४-१-४८ सूत्रे।

द्वितीयपरिच्छेदान्ते 'समाप्तश्चायं समुपलभ्यमानो ग्रन्थः' इति मुद्रितं वर्तते। अनन्तरं लघुकोष्ठके 'अस्मिन् वृत्तिवार्तिके व्यञ्जनानिर्णयस्य प्रारम्भप्रतिज्ञातस्यापि सकलादर्शेष्वदर्शनात्' इत्याद्युट्टङ्कितं वर्तते। तेन ज्ञायते यदयं प्रकाशको ग्रन्थमिममपूर्णं मनुते।

परमापाततः प्रतीयतां नामात्रापूर्णता। तत्त्वदृष्ट्या विवेचने क्रियमाणेऽयं ग्रन्थः सर्वतोभावेन परिपूर्ण इत्यत्र नास्ति संशीतिलेशः। यतो ह्युपक्रमे तिसृणां वृत्तीनां प्रतिपादनं न प्रतिज्ञातम्, अपि तु तासु वृद्धैः क्वचित् क्वचिदस्फुटीकृतान् विशेषान् स्फुटीकर्तुं प्रतिज्ञातम्, तदत्र परिपूर्णम्।

न चात्र व्यञ्जनाविषये काचन विशेषता नोपपादिता; अतोऽपूर्णताऽस्येति वाच्यम्, नानार्थस्थलेऽप्रस्तुतेऽर्थे प्राचीनैर्निरूपिताया व्यञ्जनाया निराकरणात्, अभिधाया उपपादनाद् विशेषस्य स्फुटीकरणात्।

अनेन निरूपणेनाभिधाव्यञ्जनाविषयको विशेष उपपादितः। लक्षणाविषयकविशेषश्च सारोपलक्षणा विषये समुद्भावित एव। व्यञ्जनाविषयेऽस्फुटविशेषान्तराभावाद् वृद्धैः साङ्गोपाङ्गप्रतिपादितत्वाच्च नूतनकल्पनायाः प्रसारासम्भवात् पृथक् प्रकरणे सा न निरूपितेति।

## मातृकाविषये निर्देशः—

सम्पिपादयिषुरहं वृत्तिवार्तिकमन्विष्यन् बहुप्रयतमानोऽपि विश्वनाथ[1]पुस्तकालयतोऽनवाप्य सरस्वतीभवनग्रन्थालयतः ४०५४८ सङ्ख्याकां मातृकां प्रापम्। सा मातृका 'क' पुस्तकपदेनात्र व्यवहृता। ततः प्रतिलिपिं विधाय पाठभेदज्ञानाय ४०८०१ ४१०५४।४१३६१ इति सङ्ख्याकास्तिस्रः मातृकास्तत एव गृहीताः, ता अत्र क्रमशः 'ख-ग-घ' पुस्तकपदेन व्यवहृताः सन्ति। अशुद्धयस्तु सर्वासु मातृकासु लेखकप्रमादात् सन्त्येवेति तत्र तत्र निर्दिष्टपाठभेदावलोकनेनैव प्रत्यक्षीभविष्यति। परं प्रयत्नतः संशोध्य पाठभेदस्थले च विमृश्य झटित्यव्यर्थबोधक्षमः प्रकरणोपयोगी युक्त एव पाठो निर्धारितः।

परं प्रकाशितेषु पुस्तकेष्वयमेव पाठोऽस्ति न वेति जिज्ञासाशान्तये जीर्णं पं० श्रीशिवदत्तशर्मणा काशीनाथशर्मणा च संशोधितं 'निर्णयसागरमुद्रणयन्त्रालये' मुद्रयित्वा १८४० खिस्ताब्दे प्रकाशितमेकं पुस्तकं भारतीविद्याभवनतो लब्धम्। तत्पुस्तकमत्र 'ङ' पुस्तकपदेन व्यवहृतम्। तत्रापि यादृशः पाठो मया निर्धारितः, तथैव प्रायशस्तत्रापि निर्धारितः। यत्र भेदस्तत्राशुद्ध एव प्रतिभाति।

एवं पञ्चमपृष्ठे 'मन्ये निजस्खलनदोषेत्यादिपद्ये' देवीगिराम् इति पदात् पृथक् सरस्वतीवाचकपदस्याप्रयोगेऽपि 'पृथक् सरस्वतीवाचकपदप्रयोगः' इत्यङ्कितं वर्तते। तत्र न पृथक् सरस्वतीत्यादि पाठो युक्तः, स एव निर्धारितोऽत्र। एवं नवमपृष्ठे (ङ० पु०) 'आदिशब्देनाभिनयोपदेशो गृह्यते' इति पाठो वर्तते, वस्तुत-

---

१ काश्यां ललिताघट्टस्थाद् गोयनकाविद्यालयीयात्।

स्तत्र 'अभिनयापदेशौ' इति पाठो युक्तः। अपदेशश्च विवक्षितार्थस्य शृङ्गग्राहिकया निर्देशः। यथा—'इतः स दैत्यः प्राप्तश्रीः' इत्यत्र बुद्धिस्थपरामर्शकस्य सर्वनाम्न इदम् शब्दात् निष्पन्नस्य 'इतः' पदस्याभिधा हृदयनिहितहस्तादिना वक्तरि नियम्यते। उपदेशश्च प्रत्यक्षमाख्यानमिति नात्र घटते। प्रदीपकारादिभिरादि-पदेनापदेशस्यैव गृहीतत्वात्। अत्र 'अपदेशः' इत्येव पाठ आदृतः। अन्यासु मातृकासु तथैवोपलब्धेश्च। एवं तत्रैव 'परारिसन्दर्शितः' इति पद्ये 'परुत्पराभूतः' इत्यादि पाठः (ङ० पु०) यदर्थोऽत्र न घटते। अतः 'परुत्' इति पाठ आदृतः। एवं द्वादशपृष्ठे (ङ० पु०) प्राकरणिकेऽर्थे प्राकरणिकवदिति पाठः। विवक्षितश्चात्रार्थो 'यथा प्राकरणिकेऽर्थे प्रकरणमभिधानियामकम्, तथैव परस्परान्वययोग्यार्थवाचक-शब्दसमभिव्याहाररूपशब्दान्तरसन्निधिरपीति। अतः प्राकरणिके प्रकरणवदित्येव पाठो युक्तः।

एवं त्रयोदशपृष्ठे 'अभिमतक्षेत्रगामिनीम्' इति पाठः ङ० पुस्तके परं क्षेत्रंक-गामिनीमिति पाठ आदृतः। एकशब्दघटितपाठेनैवानभिमतक्षेत्रगामित्वनिषेधः फलतीति। एवं तस्मिन्नेव पृष्ठे 'तत्रागृहीतशक्तिकस्याभिधया किं न प्रतीयते' इति (ङ० पु०) पाठः। विवक्षितश्चार्थो यत् 'नानार्थशब्दस्याप्राकरणिकोऽर्थ-स्तत्राज्ञातशक्तिकस्यापि प्रतीयते किम्?' इति परं पाठो वर्तते 'किं न प्रतीयते' इति तत्र नकारोऽधिक इति। एवं पञ्चदशपृष्ठे शक्तिमूलव्यञ्जनेति पाठः (ङ० पु०) युक्तश्च शब्दशक्तिमूलेति। एवं २२ तमपृष्ठे 'आनन्दव्यभिचारद्योतनं फलम्' इति पाठः, शुद्धश्च 'आनन्दाव्यभि' इति। इत्थं तस्मिन्नेव पृष्ठे 'येन मुखेऽपि गौणी-वृत्तिः स्यात्' इति पाठोऽतीव भ्रमात्मकः। अपेक्षितश्च मुख्येऽपीति। अयंभावः—गौण्यामपि जहदजल्लक्षणाभेदयोः सम्भवात् कथं गौणी द्विविधैव। 'मुखं कमलम्' इत्यादौ जहल्लक्षणायाः, गोवाहीकोभयविषये 'गाव एते समानीयन्ताम्' इत्यादाव-जहल्लक्षणायाः स्फुटत्वात्, इति शङ्कायां दीक्षितो वदति यत्-मुख्यार्थसादृश्येन लक्षणा गौणी। न च तत्रैव सादृश्यमस्ति। येन मुख्येऽपि गौणीवृत्तिः स्यात् इति। अर्थात्—'गाव एते समानीयन्ताम्' इत्यत्र गोपदस्य मुख्यार्थे गवि गौणलक्षणा नास्ति, स्वस्मिन् स्वसादृश्याभावात्। 'मुखेऽपि' इति पाठस्वीकारे कोऽर्थो घटते? न च 'मुखं कमलम्' इत्याद्यर्थं स्यात्, इति वाच्यम्, तत्र कमलपदे एव लक्षणासत्त्वाद् मुखे तदभावादिति 'मुखेऽपि' इति पाठोऽशुद्ध एव प्रतिभाति।

इत्थं २४ तम पृष्ठे 'तथासति तत्र साधारणधर्मस्यापि पदान्तरेणोपादानं तत्र' इत्यत्र तथासति यत्रेत्यादिपाठो युक्तः। तत्रैव 'उपात्तमेचकत्वादिव्यतिरिक्तेति' पाठो वर्तते, समुचितश्च मेचकत्वाद्यतिरिक्तेति पाठः। २७ तमपृष्ठे अभिधानस्ये-वासम्भवादिति पाठोऽस्ति, अभिधानस्यैवेति युक्तः। २८ तमपृष्ठे च 'प्रसिद्ध-पद्मपदाभेदेति' पाठो वर्तते। परमपदेन चाभेदो विवक्षितः, अतः 'परमपदाभेदः' इति पाठो युक्तः। इत्थं सम्यग् विविच्य पाठोऽत्र निर्धारित इति सुधियां ग्रन्था-वलोकनेनैव स्फुटी भविष्यतीति।

## उपसंहृतिः

अस्य वृत्तिवार्तिकस्य तृतीयं संस्करणं पं० श्रीशिवदत्तशर्मणा, श्रीकाशीनाथशर्मणा च संशोधितम्। श्रीनारायणरामाचार्यकाव्यतीर्थेन संस्कृतम् १८६२ शकाब्दे १९४० खिस्ताब्दे मुम्बय्यां निर्णयसागरमुद्रणयन्त्रालये मुद्रापयित्वा प्रकाशितमासीत्। परमिदानीमतीव दुर्लभं जातम्। वहुषोऽन्वेषणेनापि नोपलभ्यते, विक्रेतारः कथयन्ति समाप्ति गतम् इति।

एवं महत्त्वपूर्णस्यास्य ग्रन्थस्यानुपलब्धिः केषां विदुषां न क्षोभाय। यद्यपीदानीमिदं परीक्षायां कस्याञ्चिन्निर्धारितं नास्ति, तथाऽपि रसगङ्गाधरेऽस्य कुत्रचिन्निराकरणं कुत्रचिदुपपादनं चाध्यापयतां विदुषां पिपठिषूणां छात्राणां गवेषकाणां च मूलज्ञाने स्वाभाविकी जिज्ञासोदेति, इति नात्र संशीतिः।

अतोऽस्य सम्पादने कतिपयैः प्रेरितोऽहं भूमिकायां प्रतिपाद्यविषयविवेचने दीक्षितमतं तत्र मूलम् पण्डितराजराजचूडामणिदीक्षिताभ्यां कृतं तत्खण्डनं ससमीक्षमन्यैश्च विषयैरुपबृंहितं सम्पाद्य स्वल्पेनैव मूल्येन सर्वेभ्य उपलब्धं स्यात्, मत्कृतेऽपि 'अन्यन्न चेदस्तु तदस्तु पुण्यम्' इति कृत्वा लघुग्रन्थमालायां प्रकाश्य स्वाभाविकगुणग्राहिणां विद्वद्वराणां मुदे प्रस्तौमीति।

विजयदशमी
वि० सं० २०३४
[ दि० २१।१०।१९७७ ई० ]

विदुषां कृपाभाजनः,
वायुनन्दनपाण्डेयः
प्राध्यापकः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

# विषयानुक्रमणी

## द्वितीयपरिच्छेदस्य विषयानुक्रमणी



— —

श्रीमदप्पय्यदीक्षितविरचितं

# वृत्तिवार्तिकम्

[ द्वितीयपरिच्छेदान्तम् ]

❀ ❀ ❀

विश्वं प्रकाशयन्ती व्यापारैर्लक्षणाऽभिधाध्वननैः ।
नयनैरिव हरमूर्तिविबुधोपास्या सरस्वती जयति ।।१।।

वृत्तयः काव्यसरणावलङ्कारप्रबन्धृभिः[1] ।
अभिधालक्षणाव्यक्तिरिति तिस्रो निरूपिताः ।।२।।

तत्र क्वचित् क्वचिद् वृद्धैर्विशेषानस्फुटीकृतान् ।
निष्टङ्कयितु[2]मस्माभिः क्रियते वृत्तिवार्तिकम् ।।३।।

तत्र—

'शक्त्या प्रतिपादकत्वमभिधा' (सू० १) । सा त्रिधा[3]—रूढिर्योगो योगरूढिश्च ।

अखण्डशक्तिमात्रेणैकार्थप्रतिपादकत्वं रूढिः (सू० २) ।

तन्मात्रेण प्रतिपादकत्वं [4]चावयवार्थाऽप्रतिभासात्[5] । तत्प्रतिभासेऽपि तस्य प्रतिपाद्ये बाधाद् वा[6] । यथा—

यत्ते पदाम्बुरुहमम्बुरुहासनेड्यं धन्याः प्रपद्य सकृदीश भवन्ति मुक्ताः ।
नित्यं तदेव भजतामतिमुक्तलक्ष्मीर्युक्तं व देव मणिनूपुरमौक्तिकानाम् ।।
(उ० १)

अत्र मणिनूपुरा[7]दिशब्दानामवयवार्थाऽप्रतिभासः[8] । अतिमुक्तशब्दस्यावयवार्थप्रतिभासेऽपि वासन्तीलक्षणे प्रतिपाद्ये तस्य बाध इत्येषा[9] रूढिः । यद्यप्यतिमुक्तलक्ष्मीर्वासन्तीमुकुलशोभैव मुक्तातिशायिनीसम्पदित्यभेदाध्यवसायार्थमतिमुक्तशब्दस्यावयवार्थोऽपि विवक्षितः,तथापि तस्य वासन्तीगतत्वेनाप्रतिपादनात् तत्र रूढिरेव । एतदव्याप्तिवारणेनैव लक्षणेऽप्येकपदमर्थवत् ।

---

१. ङ पुस्तके बन्धृभिः इति । २. घ पुस्तके—निष्कर्षयितुमिति पाठः । ३. घ त्रिविधा । ख पुस्तके सा चेति पाठः । ४. घ पुस्तके वेति पाठः । ५. ख ग घ पुस्तके साद्वेति पाठः । ६. वेति द्विधेति ख पुस्तके । ७. आदि इति नास्तिक पुस्तके । ८. ख ग पुस्तके नावयवार्थप्रतिभास इति; ९. ङ पुस्तके पामिति ।

अवयवशक्तिमात्रसापेक्षं [1]पदस्यैकार्थप्रतिपादकत्वं योगः । (सू० ३)

यथा—

उद्ध्वं विरञ्चिभवनात् तव नाभिपद्माद्
रोमावलीपदजुषस्तमसः परस्ता(न्)त्[2] ।
मुक्तौघमण्डितमुरस्थलमुन्मयूखं
पश्यामि देव परमं पदमेव साक्षात् ।। (उ० २)

अत्र 'विरञ्चिभवन[3]-नाभिपद्म-रोमावलीत्यादिशब्दानां प्रयोगः[4] । अवयवशक्तिमात्रेण प्रतिपादकत्वमपि समुदायार्थाऽप्रतिभासाद्वा तत्प्रतिभासेऽपि तस्याऽवयवशक्तिप्रतिपाद्येऽनन्वयाद्वेति द्वेधा । तत्राद्यमुदाहृतम् । द्वितीयं यथा—

अस्तु त्रयीमयतनुस्तव लम्बनालीरत्नैस्तथापि परिभूयत एव भानुः ।
सोढः सतां वत निशान्तमुपागतानामेवं तिरस्कृतिकृदीश्वरकः सुवृत्तः ।।
(उ० ३)

अत्र निशान्तशब्दस्य निकेतनरूपसमुदायार्थप्रतिभासेऽपि निशान्तं त्रियामावसानमुपगतानां सतां नक्षत्राणां तिरस्कृतिकृदन्तर्हिति[5]कृदेव गृहप्राप्तानां सत्पुरुषाणां पराभवकृदित्यभेदाऽध्यवसायार्थं तस्य विवक्षितत्वे[6]ऽपि त्रियामाऽवसाने योग एव ।

अवयवसमुदायोभयशक्तिसापेक्षमेकार्थप्रतिपादकत्वं योगरूढिः । (सू० ४)

यथा—

पक्षद्वयक्रशिमपोषविभाव्यमान[7]चान्द्रायणव्रतनिषेवण एव नित्यम् ।
कुर्वन् प्रदक्षिणमुपेन्द्र सुरालयं ते लिप्सुर्मुखाब्जरुचिमेष तपस्यतीन्दुः ।।
(उ० ४)

अत्र सुरालयशब्दस्य 'सुराणामालयः' इत्यवयवशक्त्या समुदायशक्त्या च कनकाचले योगरूढिः ।

न चास्य शब्दस्य कनकाचले रूढिरेव केवलाऽस्तु, मा भूद् योगरूढिः । उदाहृतश्लोके तपश्चर्योत्प्रेक्षायाः प्रदक्षिणीक्रियमाणस्य कनकाचलस्यावयवशक्त्युपस्थाप्यदेवालयाऽभेदाध्यवसायेनाऽपि निर्वाहादिति वाच्यम्, तत्रैवावयवार्थसम्भवेऽन्याभेदाऽध्यवसायरूपपरमुखनिरीक्षणायोगात् । तत्रैव यौगिकार्थप्रतिभासस्य सर्वसाक्षिक[8]त्वाच्च ।

न चैवं सति देवागारसाधारणक्लृप्तावयवशक्तिमात्रेण कनकाचले[9]ऽपि प्रवृत्त्युपपत्तेर्न तत्र समुदायशक्तिः कल्पनीयेत्यपि शङ्क्यम्, 'रत्नसानुः सुरालयः'

१. ख पुस्तके शब्दस्येति पाठः । २. ख ग पुस्तकयोः पुरस्तादिति पाठः । ३. क पुस्तके भवनं पद्मं इति पाठः । ४. ख ग घ पुस्तके योग इति पाठः । ५. ग पुस्तके अन्तर्द्धीति पाठः, क पुस्तके तत्वेति पाठः । ६. क पुस्तके तेऽपि इति पाठः । ७. क पुस्तके विभाव्यमानं इति पाठः । ८. क पुस्तके साक्षित्वेति घ पुस्तके सार्वत्रिकेति पाठः । ९. क पुस्तके अपीति नास्ति ।

इत्याद्यभिधानकोशस्मृतिपरम्परया विशिष्य तस्य तत्र समुदायशक्तेरपि सिद्धेः। अन्यथा देवतागार इव तत्र विशिष्यानुशासनानपेक्षणेन तद् वैयर्थ्यापत्तेः।

अत एवैतादृशपदे सति पुनः समुदायार्थवाचकपदप्रयोगे पुनरुक्तदोषोल्लासः। यथा —

भद्राय भवतु भवतां भगवान् भजमानदैन्य[1]तिमिररविः।
दिवसारम्भविकस्वरनीरजनलिनाभिरामतरनयनः ॥ (उ० ५)

यत्र योगरूढिमतोऽपि पदस्यावयवार्थशक्तिमूलप्रतीयमानार्थगर्भीकारेण[2] तत्रैव विश्रान्तिः, तत्र समुदायार्थवाचकपदान्तरप्रयोगेऽपि न पुनरुक्तदोषोल्लासो यथा—

उदयन्मृगाङ्करुचिकन्दलकोमलानामुन्निद्रशोणनलिनोदरसोदराणाम्।
प्राप्तुं तवाधररुचामवलोकनेन नालं सहस्रनयनः स वृषाऽपि तृप्तिम् ॥६॥

अत्र 'सहस्रनयन'शब्दस्यावयवार्थशक्त्याऽवलोकनप्रकर्षसम्भवप्रतीतेस्तत्रैव तस्य विश्रान्तिरिति पुनरिन्द्रवाचिपदप्रयोगः। यथा वा—

तव प्रसादात् कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥

अत्र 'पिनाकपाणि'शब्दस्य[3] शिवनाम्नोऽवयवा[4]र्थशक्त्या तदायुधसारत्वप्रतीतेस्तत्रैव तस्य विश्रान्तिरिति पुनर्हरपदप्रयोगः।

ननु कुसुमायुधोऽपीत्य[5]त्रावयवार्थशक्त्या तदा[6]सुधाऽसारत्वप्रतीतावपि कामवाचिपदा[7]न्तरं नोपात्तमिति चेन्न, तत्राप्युत्तमपुरुषाक्षिप्ता[8]ऽहंपदस्य विशेष्यवाचिनः सत्त्वादिति साहित्यचिन्तामणिकारः।

वस्तुतस्तु नायं नियमः। यदवयवार्थशक्तिमूलप्रतीयमानार्थविवक्षायां समुदायार्थवाचिपदान्तरं प्रयोक्तव्यमिति, किन्त्वयमपि प्रकारोऽस्तीत्युदाहृतम्। तदप्रयोगे[9] यथा—

मन्ये निजस्खलनदोषमवर्जनीयमन्यस्य मूर्ध्नि विनिवेश्य बहिर्बुभूषुः।
आश्रित्य देव रसनानि महाकवीनां देवीगिरामपि तव स्तवमातनोति ॥ (७)

अत्र वागीश्वरीपदावयवार्थशक्त्या प्रतीयमानस्य विद्याविषये स्खालित्या-[10]पवादमितरवत् सरस्वती न सहत इत्यर्थस्य[11] वाच्यस्यो[12]पस्कारकतया विवक्षितत्वेऽपि वाचामधि[13]देवताऽपि यत्र भगवतः स्तोत्रे न पर्याप्तं सामर्थ्यं बिभर्ति

---

१. ग पुस्तके दैत्येति पाठः ग पुस्तके गर्भीकारेणेति पाठः। २. क पुस्तके इन्द्रियवाचीति पाठः। ३. क पुस्तके पदस्येति पाठः। ४. क पुस्तके अवयवेति पाठः। ५. क पुस्तके पीत्वयवेति पाठः। ६. क पुस्तके तदिति नास्ति। ७. क पुस्तके पदमिति पाठः। ८. ख पुस्तके ध्याहृतेति पाठः। ९. क पुस्तके गो इति पाठः। १०. स्त्रस्वलित्येति पाठः ग पुस्तके। ख पुस्तके स्खलितत्वेति पाठः। ११. ग पुस्तके इत्यस्येति पाठः। १२. क पुस्तके वाच्योपस्कारतयेति पाठः। १३. क पुस्तके मधीति नास्ति।

तत्र कथमन्येऽधिकुर्युरित्यर्थापत्त्यलङ्कारध्वननसत्त्वेऽपि, न पृथक् सरस्वतीवाचकपदप्रयोगः।

एकावलीकृताऽपि विशेष्यस्य साभिप्रायत्वं परिकुरा[1]लङ्कारलक्षणमभिधाय—

नरसिंह महीपाल ! कीर्तिस्त्रिपथगा तव।
न कस्य भवति श्लाघ्या पुनाना भुवनत्रयम् ॥ (एका०)

इति तदुदाहरणे भुवनत्रयपवित्रीकरणोपपत्त्यभिप्रायगर्भं त्रिपथगापदं विशेष्यमेव प्रयुञ्जानेन तत्प्रयोगानियमो दर्शितः। तस्माद् योगरूढिमतः पदस्य यौगिकार्थशक्तिमूलप्रतीयमानार्थगर्भीकारे[2]समुदायाऽर्थवाचिपद[3] प्रयोगाऽप्रयोगाभ्यां द्वैविध्यमेवादृतम्[4], न पुनस्तत्प्रयोगनियमः। क्वचिद् योगरूढिमतः पदस्य विषयविशेषेऽवयवार्थाऽनन्वयात् समुदायार्थमात्रे विश्रान्तिः। यथा—

उल्लासयत्युदरवन्धनिवद्धदिव्यशोगाश्मरश्मिकलिकावलिरच्युतैषा ।
आगाम्यनेकशतकल्पविधातृगर्भं नाभ्युद्गताम्बुरुहकुड्मलपङ्क्तिशोभाम् ॥८॥

अत्राम्बुरुहपदस्य भगवन्नाभिपद्मेऽवयवार्थाऽनन्वयाद् रूढिरेव। क्वचित् समुदायार्थाऽनन्वयादवयवार्थमात्रेण[5] तस्य विश्रान्तिः। यथा—

कल्हारकैरवमुखेष्वपि पङ्कजेषु
लोकेशयत्कमलमेव तथा प्रसिद्धम्।
मन्येऽभिजातभवदास्यतुलाऽस्य नेति
मर्मप्रकाशनमिदं विधिनैव क्लृप्तम् ॥९॥

अत्र पङ्कजपदस्य कुमुदकल्हारादिषु समुदायार्थाऽनन्वयाद् योग एव।

नैयायिकास्तु—पङ्कजादिशब्दरूपैकपदोपादानरूपा[6]न्तरङ्गप्रत्यासत्त्या नाभिकमलकुमुदाद्यन्वयात् प्रागेव पङ्कजनिकर्तृत्ववैशिष्ट्येनोपस्थितस्य पद्मत्वस्य, पद्माश्रित[7]त्वेनोपस्थितस्य पङ्कजनिकर्तृत्वस्य च नाभिकमलकुमुदाद्यन्वये नाकाङ्क्षा। न चाविशिष्टस्य तदन्वयविषयिणी शाब्दधीरिति[8] तदन्वयार्थं स्वतन्त्रपद्मत्वपङ्कजनिकर्तृत्वोपस्थितये पङ्कजादिपदस्य लक्षणैवाभ्युपगन्तव्या, न तु[9] रूढिर्योगो वा।

न च प्रथमं योगरूढिभ्यां स्वार्थोपस्थाने पश्चान्नाभिकमलाद्यन्वयार्थं विरुद्धवृत्तिमूकीभावे सति[10] तदितरवृत्त्यैव स्वतन्त्रपद्मत्वाद्युपस्थितेराकाङ्क्षादिसम्भवान्न तदर्थमिह लक्षणा[11] इति वाच्यम्, केवलरूढ्यादिना स्वतन्त्रपद्मत्वाद्यु-

१. क पुस्तके परिकराङ्कुरेति। २. ख पुस्तके रेणेति पाठः। ३. ग घ पुस्तके पद इति नास्ति। ४. घ पुस्तके आदृतमिति नास्ति। ५. ङ पुस्तके मात्रे तत्रेति पाठः। ६. ख ग घ पुस्तके रूपयान्तरङ्गेति पाठः। ७. ङ पुस्तके श्रयत्वेनेति। ८. ख पुस्तके शाब्दीति पाठः। ९. घ पुस्तके चेति पाठः। १०. ग पुस्तके सतीति नास्ति। ११. क पुस्तके चेत्यधिकः पाठः।

पस्थित्यर्थं शब्दस्य पुनरनुसन्धानकल्पनागौरवापत्तेः। लक्षणापक्षे तु नायं दोषः, योगरूढ्या[1] पङ्कजनिकर्तृत्वसंवलितपद्मत्वरूपविशिष्टोपस्थितेर्विशेषणविशेष्यान्यतरोपस्थितिलक्षणद्वारत्वेन[2] द्वारे सति द्वारिणः पुनरनुपेक्षणात्।

न च शक्योपस्थितिर्लक्षणायामिव शक्योपस्थित्यन्तरेऽपि द्वारम्। येन रूढ्यादिना स्वतन्त्रपद्मत्वोपस्थितावपि पुनरनुसन्धानं न कल्प्येतेत्याहुः। इत्थमभिधा[3] निरूपिता।

सा चानेकशक्तिकस्य शब्दस्य संयोगाद्यैर्नियम्यते। तथा[4]हुः—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥ इति।

अर्थः = प्रयोजनम्। प्रकरणं = वक्तृश्रोतृबुद्धिस्थता। लिङ्गं = प्रयुक्तनानार्थपदवाच्यान्तरव्यावृत्तो धर्मः। शब्दस्यान्यस्य सन्निधिः = नानार्थपदैकवाच्यसंसर्ग्यर्थान्तरवाचिपदसमभिव्याहारः। सामर्थ्यं = कारणत्वम्। औचिती = अर्हता। व्यक्तिः = स्त्रीपुंनपुंसकम्[5]। शेषं प्रसिद्धम्।

तत्र शङ्खचक्रधरो हरिरित्यत्र शंखचक्रसंयोगेन हरिशब्दस्य भगवत्यभिधा नियम्यते। अशङ्खचक्रो हरिरित्यत्र तद्विप्रयोगेन। रामलक्ष्मणावित्यत्र रामपदस्य लक्ष्मणसाहचर्याद् रघुपुङ्गवे। छायातपावित्यत्र छायापदस्यातपेन[6] सहानवस्थानविरोधादनातपे। रामरावणयोरिवेत्यत्र रावणेन सह वध्यघातकभावविरोधाद् रामपदस्य[7] रामचन्द्रे।

यत्तु रामार्जुनपदयोर्वध्यघातकभावविरोधाद् भार्गवकार्तवीर्ययोरभिधा नियम्यते इत्युदाहरणमिति[8] तन्न, रामपदस्य भार्गवेऽभिधा नियमने सति तद्विरोधप्रतिसन्धानेनार्जुनपदस्य कार्तवीर्येऽभिधानियमनम्। तस्मिंश्च सति तद्विरोधप्रतिसन्धानेन रामपदस्येति परस्पराश्रयापत्तेः।

तस्मादन्यतरशब्दस्य[9] व्यवस्थितार्थत्व एव स्मृततद्विरोधप्रतिसन्धानान्नानार्थपदस्याभिधानियमनमिति प्रागुक्तमेवोदाहरणमनुसर्तव्यम्।

इदं तु शब्दान्तरसन्निधेरुदाहरणं भविष्यति।

---

१. ङ पुस्तके योगरूढ्येति नास्ति। २. क ख घ पुस्तके विशेष्यान्तरलक्षणा इति पाठः। घ पुस्तके णे द्वारत्वेनेति पाठः। ३. ङ पुस्तके त्रिविधेत्यधिकः पाठः। ४. ख पुस्तके यथाहुरिति पाठः। ५. क पुस्तके कत्वमिति पाठः। ६. ङ पुस्तके छायाशब्दस्यातपेन सह सहानवेत्यादिपाठः। ७. क पुस्तके रामपदस्येति नास्ति। ८. ङ पुस्तके इति इति नास्ति। ९. ङ पुस्तके पदस्येति पाठः।

हरिं मोक्षाय भजत इत्यत्र मोक्षरूपेणार्थेन हरिशब्दस्य भगवत्यभिधा नियम्यते।

'विवेश रामो [1]दुर्धर्षं तापसाश्रममण्डलम्' इत्यत्र रामपदस्य प्रकरणाद् रघुवीरे।

कुपितो भूभृदित्यत्र कोपलिङ्गेन पर्वतव्यावृत्तेन भूभृत्पदस्य[2] राजनि।

संयोगोदाहरणे प्रसिद्धिप्राचुर्यम्।

शङ्खादेरिन्द्रादावर्थान्तरेऽपि संयोगाविरोधात्। लिङ्गोदाहरणे तु[3] सर्वथाऽर्थान्तरव्यावृत्तिरिति भेदः।

निषधं पश्य भूभृतमित्यत्र जनपदविशेषसाधारणस्य निषधपदस्य पर्वतवाचिभूभृत्पदसन्निधानात् पर्वतविशेषेऽभिधा[4] नियम्यते। भूभृत्पदस्य च राजसाधारणस्य पर्वतविशेषवाचिनिषधपदसन्निधानात्[5] पर्वते।

न चान्योन्याश्रयः। न ह्यत्र समभिव्याहृतशब्देन तदर्थप्रतिपादनमभिधानियमनायापेक्ष्यते, किन्तु स्वार्थेन गृहीतसंसर्गेऽर्थे व्युत्पन्नो यः शब्दस्तत्समभिव्याहारमात्रम्।

यथा[6] सम्बन्धिदर्शनं[7] सम्बन्ध्यन्तरस्मरणायापेक्ष्यते, न तु तद्दर्शनानन्तरं तत्सम्बन्धस्मरणमपीति[8] नान्योन्याश्रयस्तथेहापि निषधभूभृत्पदयोरभिधानियमनाय गृहीत[9]स्वस्वार्थ[10]व्युत्पत्तिकभूभृन्निषधशब्दसमभिव्याहारमात्रमपेक्ष्यत इति तत्तदर्थप्रतिपादनस्यानपेक्षणान्नान्योन्याश्रयः।

नन्वेवं शङ्खचक्रधरो हरिरित्यादावपि शङ्खचक्रादिशब्दान्तरसन्निधिनैवाभिधानियमनं भविष्यतीति व्यर्थं पृथक्संयोगाद्युदाहरणमिति चेन्, मैवम्; तत्र शङ्खचक्रादिशब्दानां नियतार्थतया[11] श्रवणमात्रादर्थप्रतिपादकत्वेन तत्प्रतिपादितार्थसंयोगादिभिरभिधानियमनसम्भवात्। शब्दान्तरसन्निधिरपि तत्राऽस्तीति चेदस्तु, तथापि हरिशब्दाद्यभिधानियमनसमर्थे तदर्थसंयोगादिरूपसन्निहितसम्बन्धेनान्तरङ्गे शङ्खचक्रादावुपस्थिते तस्यापि[12] वाचकतयाऽव्यवहितसम्बन्धेन वहिरङ्गशब्दान्तरसन्निधे[13]र्नोदाहरणत्व[14]मर्हति।

अतो यत्र निषधं पश्य भूभृतमित्यादावुभयस्य[15] नानार्थतया न कस्याऽ-

---

१. क पुस्तके दुर्धषस्ता० इति पाठः। २. ङ पुस्तके भूभृदित्यस्येति पाठः। ३. क पुस्तके तु इति नास्ति। ४. ग ङ पुस्तकयोः अभिधेति पाठः नास्ति। ५. ङ पुस्तके सन्निधिनेति पाठः। ६. ख ग घ पुस्तकेषु यथेति पाठो नास्ति। ङ पुस्तके तथा च यथासम्बन्धिदर्शनात् सम्बन्ध्यन्तरस्मृतिस्थले गृहीतसम्बन्धस्य सम्बन्धिनो दर्शनमात्रमिति पाठान्तरम्। ७. ग घ पुस्तकयोः मात्रं हीत्यधिकः पाठः। ८. ग घ पुस्तकयोः यथेत्यधिकः। ९ घ पुस्तके स्वेति पाठो नास्ति। १०. ख घ पुस्तकयोः संसर्गकार्थेत्यधिकः। ११. क पुस्तके नियमनार्थतयेति पाठः। १२. क पुस्तके अपि इति नास्ति। ग ङ पुस्तके तत्राऽपीति पाठः। १३. ख ग घ पुस्तकेषु सन्निधिरिति पाठः। १४. क घ पुस्तकयोः त्वेति नास्ति। १५. ख पुस्तके उभयोरिति। क पुस्तके स्येति पाठो नास्ति।

त्यर्थस्य प्रथममुपस्थितिस्तत्रैव वहिरङ्गस्यापि तस्य नियामकत्वेनोदाहरणमिति न कश्चित् सङ्करः ।

यत्तु नियतार्थशब्दसामानाधिकरण्यं शब्दान्तरसन्निधिः, तेन च देवस्य त्रिपुरारातेरित्यत्र देवशब्दस्य शङ्करे नियमनं तत्र त्रिपुरारातिशब्दस्य नियतार्थत्वादिति । तदयुक्तम्, समभिव्याहृतशब्दस्य नियतार्थत्वे तत्प्रतिपादितलिङ्गादिनैव तन्नियमात्[१] ।

अन्यथा लिङ्गाद्युदाहरणेऽपि शब्दान्तरसन्निधेरेव नियामकत्वापत्तेः । न च सामानाधिकरण्ये शब्दान्तरसन्निधिर्वैयधिकरण्ये भूभृतः कोप इत्यादिरूपे[२] लिङ्गादिकमिति भेदकथनं युक्तम्[३], उभयत्र शब्दप्रतिपादित[४]लिङ्गादेरेव नियामकत्वेनास्य भेदकथनस्य परिभाषामात्रत्वात् ।

'व्यालो दानेन राजत' इत्यत्र व्यालदानपदयोरुभयोरप्यनियतार्थत्वेऽपि वैयधिकरण्येऽपि परस्परसमभिव्याहारेण दुष्टगजमदजलयोरभिधानियमनस्य सर्वानुभवसिद्धत्वेनाऽऽवश्यसङ्ग्राह्य[५]त्वात् ।

तदसङ्ग्रहेण लक्षणकथनस्यात्यन्तायुक्तत्वाच्च । तस्मादस्मदुक्तैव शब्दान्तरसन्निधेः प्रक्रियाऽऽदरणीया ।

'मधुना मत्तः कोकिलः' इत्यत्र कोकिलमदकारणत्वरूपेण सामर्थ्येन वसन्ते मधु[६]शब्दस्याभिधा नियम्यते ।

'भजत हरिं भवतापहर[७]मि'त्यत्र भवतापहरणौचित्येन हरिपदस्य लक्ष्मीरमणे ।

अर्थोदाहरणे चतुर्थ्या कार्यत्वनिर्देशः । सामर्थ्योदाहरणे तृतीयया कारणत्वनिर्देशः । [८]औचित्योदाहरणे तदुभयानिर्देशेऽपि योग्यतामात्रेण समभिव्याहारलभ्य कार्यकारणभावावगम इति भेदः । 'क्षीरार्णवे हरिः शेते' इत्यत्र देशेन 'प्रलये तिष्ठति हरिः' इत्यत्र कालेन च[९] गरुडध्वजे हरिपदस्याभिधानियम्यते ।

'मित्रो भाति इति पुंव्यक्त्या तपने । सुहृद्वाचिनो नपुंसकत्वात् । 'तिस्र एव साह्नस्योपसदोद्वादशाहीनस्ये'ति श्रुतावहीनपदस्य मध्योदात्तस्वरेणाहर्गणसाध्यसुत्याके[१०] द्वादशाहाख्यक्रतु[११]विशेषे, अह्नः ख क्रतावित्यनुशासनात् । हीनो न भवतीति नञ्समासे सत्यहीनपदस्याद्युदात्तत्वात् ।

---

१, ङ पुस्तके नियमनादिति । २. क घ पुस्तकयो रूपेति, ग पुस्तके रूपमिति पाठः । ३. ङ पुस्तके युक्तमितिनास्ति । ४. ख पुस्तके तस्येति पाठः । ५ क घ पुस्तकयोः ग्राह्यमिति पाठः । ६. क घ पुस्तकयोः मधु इति नास्ति । ७ ग घ ङ पुस्तकेषु तापखिन्ना इति पाठः । ८. ख पुस्तके औचित्युदाहरणे इति पाठः । ९. क पुस्तके चेति नास्ति । १०. क ग घ पुस्तकेषु गणे द्वादशाहाख्येति पाठः । ११. क ख पुस्तकयोः 'श्रुतिविशेषो' इति पाठः ।

आदिपदेना[1]भिनयापदेशौ गृह्येते । अभिनयो विवक्षितार्थाकृतिप्रदर्शको हस्तादिव्यापारः । अपदेशो[2] विवक्षितार्थस्य शृङ्गग्राहिकतया[3] निर्देशः ।

परारि[4]सन्दर्शितसन्निवेशौ परु[5]त्पराभूतसरोजकोशौ ।
इमावियन्तौ पुनरैषमस्ते[6] कुचौ कियन्तौ परतो[7] भवेताम् ।।१०।।

इत्यत्र तत्कालस्तनपरिमाणविशेष[8]प्रदर्शकहस्तव्यापारेणेयत्पदस्य परिणामविशेषे ।

इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ।। (कु० सं०)

इत्यत्रेत इति स्वात्मनिर्देशेन तस्य वक्तरि परमेष्ठिन्यभिधा नियम्यते ।

यत्र त्वनेकार्थशब्दस्याभिधानियामकमनेकत्राविशिष्टमर्थे, तत्र नान्यतरस्मिन्नभिधानियम्यते । यथा---

येन ध्वस्तमनोभवेन वलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।
यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामाऽमराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ।।

अत्र शिवकेशवयोर्द्वयोरपि[10] स्तुत्यतया प्रकरणमविशिष्टम् । अतो ध्वस्तमनोभवेन नाशितमन्मथेन, येन[11] वलिजित्कायो विष्णोर्विग्रहः पुरा[12]ऽस्त्रतां नीतः, यश्चोद्वृत्तशेषवासुकिप्रभृतिनागराजसम्पादितहारवलयकृत्यो[13] यश्च गङ्गामधारयत् । यस्य शिरः शशिमदाहुरमराः स्तुत्यं च नाम हर इत्याहुः, अन्धकासुरक्षयकरः स उमाधवःत्वां सर्वदा[14] पायात् । इति ।

अभवेन = निःसंसारेण येन अनः = शकटं ध्वस्तम्, येन च वलिजित् स्वस्य[15] कायः पुराऽमृतमथने स्त्रीत्वं नीतः । यश्चोद्वृत्तं भुजङ्गं कालियं हतवान् । रवे शब्दब्रह्मणि लयस्ताद्रूप्यापत्तिरस्येति रवलयः । उद्वृत्तान् भुजङ्गान् हतवदरवलयं[16] चक्रमस्येत्येकं[17] पदं वा । अगं गोवर्धनं गां वराहावतारे[18] भूमिं च योऽधारयत् । यस्य स्तुत्यं नाम शशिमच्छिरोहर इत्याहुः शशिनं मथ्नाति यो राहुः

---

१. ख ग घ ङ पुस्तकेषु शब्देनेति पाठः । २. ङ पुस्तके उपदेश इति पाठः । ३. ख ग ङ पुस्तकेषु ग्राहिकयेति पाठः । ४. घ पुस्तके पुरारीति पाठः । ५. ङ पुस्तके मरुदिति पाठः । ६. घ पुस्तके मास्ते पाठः । ७. क ख घ ङ पुस्तकेषु पुरत इति पाठः । ८. ग पुस्तके विशेष इति नास्ति प्रदर्शिक इति च । घ पुस्तके तत्कालस्तनयोरेव विशेषप्रदर्शकेति पाठः । ९. ख पुस्तके अनेकार्थस्येति । ग ङ पुस्तके च अनेकशक्तस्येति पाठः । १०. ङ पुस्तके द्वयोरिति नास्ति । ११. ख ग ङ पुस्तकेषु येनेति नास्ति । १२. ग घ ङ पुस्तकेषु पुरेऽब्वस्त्रेति पाठः । १३. घ पुस्तके कृतो इति पाठः । १४. ख ग घ पुस्तके सर्वदेति द्विः पठितः १५. ग पुस्तके स्वस्येति नास्ति । १६. ख ङ पुस्तकयोः आर इति । १७. ख पुस्तके यस्येति पाठः । १८. ङ पुस्तके वतारेणेति पाठः ।

तच्छिरोहर इति । अन्धकानां राज्ञां क्षयकरो निवासकृत् सर्वदो माधवस्त्वां पायादिति चार्थद्वयेऽप्यभिधैव व्यापारः ।

अत एवात्र श्लेषोऽलङ्कारः ।

ननु च[1] यत्रानेकत्र प्रकरणाद्यविशिष्टं तत्र भवत्वनेकत्राऽप्यभिधाव्यापारः । यत्र प्रकरणस्य क्वचिदर्थे व्यवस्थिते[2]ऽप्यप्राकरणिकं शक्यान्तरं प्रतीयते, तत्र का गतिः ? यथा—

असावुदयमारूढः कान्तिमान् रक्तमण्डलः ।
राजा हरति सर्वस्य[3] हृदयं मृदुभिः करैः ।।११।।

इति चन्द्रोदयवर्णनप्रस्तावे ।

अत्राप्राकरणिको भूपतिरभ्युदयादिविशिष्टः प्रतीयते । अत्र प्राञ्चः—तत्र शब्दशक्तिमूलो व्यञ्जनाव्यापार एव शरणम्, गत्यन्तराभावात् । नहि तस्य तत्राभिधा सम्भवति, तस्याः प्रकरणेन चन्द्रे[4] नियमितत्वात्[5] ।

नापि लक्षणा, मुख्यार्थबाधाद्यभावात् ।

न चाभिधाया इव व्यञ्जनव्यापा[6]रस्याऽपि प्रकरणेन नियन्त्रणे तेनाऽपि न तन्निर्वाह इति वाच्यम्, तस्य धर्मिग्राहकमानेन तदनियम्यतयैव सिद्धेः ।

अत एव काव्यान्तर्निविष्टस्य प्राकरणिक[7]किञ्चिदर्थनियताऽभिधाव्यापारस्यापि असभ्यपदा[8]र्थान्तरप्रत्यय[9]हेतोः पदस्य हेयत्वम् । अन्यथा तत्राऽभिधाया इव व्यञ्जनव्यापारस्याऽपि प्रकरणेन नियन्त्रणेऽसभ्यार्थान्तरप्रत्ययाऽसम्भवात्—'यस्याननं योनिरुदारवाचाम्' इत्यादावश्लीलदोषो न स्यात् । तस्मात् संयोगादिभिरभिधा शृङ्खलिता यत्र कुण्ठतामेति, अर्थान्तराऽवगमने व्यञ्जनमेव क्षमं तत्रेति ।

वयं तु ब्रूमः—'असावुदयमारूढः' इत्यादौ प्राकरणिकेऽर्थे प्रकरणवद-[10]प्राकरणिकेऽपि राज-कर-मण्डलादिशब्दानां परस्पराऽन्वययोग्यनृपतितद्[11]—ग्राह्यधन-देशादिवाचिनां समभिव्याहाररूप[12]मभिधानियामकमस्तीत्यर्थद्वयस्याऽपि प्राकरणिकत्व इव प्राकरणिकाप्राकरणिकरूपत्वेऽप्युभयत्राभिधैव व्यापारः ।

यथोक्तसमभिव्याहारस्यापि शब्दान्तरसन्निधिरूपत्वेन प्रकरणवदभिधानियामकत्वात् ।

---

१. घ पुस्तके चेति नास्ति । २. ङ पुस्तके 'अवस्थितत्वे' इति पाठः । ३. ख ग घ ङ पुस्तकेषु लोकस्येति पाठः । ४. ग ङ पुस्तकयोः चन्द्रे इति नास्ति । ५. ग ङ पुस्तकयोः नियन्त्रितत्वादिति । ६. ग ङ पुस्तकयोः व्यापार इति नास्ति । ७. घ पुस्तके कं इति । ८. घ पुस्तके पदान्तरेति । ९. क पुस्तके प्रवृत्तीति पाठः । १०. ङ पुस्तके प्राकरणिकवदिति पाठः । ११. क पुस्तके तदिति नास्ति । १२. क पुस्तके रूपेति नास्ति ।

यैस्तु शब्दान्तरसन्निधिरन्यथानिरुच्यते[1], तैरपि यथोक्तसमभिव्याहारेण नानार्थशब्देभ्योऽर्थप्रत्ययस्य सर्वसिद्धत्वेन तस्य तद्भेदेनाऽपि नियामकत्वमास्थेयमेव ।

वस्तुतोऽयमेव शब्दान्तरसन्निधिरित्य[2]प्युक्तम् । न चाप्राकरणिके उक्तरूपशब्दान्तरसन्निधिमात्रम् । प्राकरणिके तु तच्च प्रकरणं चेति नियामकाधिक्यात्तत्रैवाभिधा स्यादिति वाच्यम् । प्रकरणादीनामभिधानियामकत्वं हि नानार्थशब्दजन्यशक्यस्मृतौ तेषामन्यतमस्य[3] कारणत्वम् । यथोक्तम् 'शब्दार्थस्याऽनवच्छेदे विशेषस्मृति हेतव' इति ।

तथा च तेषु कस्यचिदपि समवधाने स्मृतिसामग्री पुष्कलैवेति किं तद्वाहुल्येन ?

यत्रैकमेव पदं नानार्थमप्राकरणिकेऽपि तात्पर्यवत् । यथा—

करोति कंसादिमहीभृतां वधाज्जनो मृगाणामिव यत्तवस्तवम् ।
हरे हिरण्याक्षपुरःसरासुरद्विपद्विषः प्रत्युत सा तिरस्क्रिया ।। (शि. व. १।२९)

इत्यत्र हरिपदम् । तत्राऽपि समभिव्याहृतद्विपपदप्रतीतगजविरोधादिकमप्राकरणिके सिंहेऽप्यभिधानियामकमस्त्येव । यत्र[4]तु 'यस्याननं योनि[5]'रित्यादावश्लीलेनैतादृशं नियामकम्, तत्राऽपि बुभुत्सितार्थव्यासक्तस्य [6]मनसस्तमुल्लङ्घ्याऽसभ्ये दुर्गन्धादौ प्रवृत्तिवत् प्रकरणनियन्त्रितस्यापि शब्दस्य तदुल्लङ्घ्य विषयस्वाभाव्यादश्लीले प्रवृत्तिरिति न क्वापि शक्ति[7]विषये व्यक्तिरङ्गीकरणीया ।

यदि चैवंविधानि नियामकानि नाद्रियेरंस्तदोदाहृतस्थलेषु व्यञ्जनव्यापारोऽपि [8]दुर्घटः । तथा हि प्रकरणादिकमुल्लङ्घ्य व्यञ्जनव्यापारेणापि अर्थान्तरप्रत्ययो न सर्वत्र वक्तुं शक्यते । प्रकरणादीनामभिधानियामकत्वकल्पन[9]स्यैव व्यर्थत्वापत्तेः । तद्धि नादृष्टार्थम्, किन्तु सैन्धवमानयेत्यादौ एकार्थमात्रपर[10]नानार्थशब्दस्थलेऽर्थविशेषस्मृतिव्यवस्थार्थं तत् ।

यदि तत्राऽपिव्यञ्जनव्यापारेणार्थान्तरप्रत्ययः स्यात्तदा कथमेषा सिद्धयेत् । नह्यभिमतानभिमतक्षेत्रसाधारणस्य जलाशयस्याभिमतक्षेत्रै[11]कगामिनीमेकां कुल्यां विधायानभिमतक्षेत्रगामिनः कुल्यान्तरस्याऽपि कल्पने जलस्याभिमतक्षेत्रैकगामित्वव्यवस्थाकृता भवति ।

---

१. घ पुस्तके निरूप्यते इति । २. घ पुस्तके अपि नास्ति । ३. ग घ ङ पुस्तकेषु स्येति नास्ति । ४. क ख पुस्तकयोः तु इति नास्ति । ५. ग घ ङ पुस्तकेषु रूदारवाचामित्यधिकः । ६. ग पुस्तके मनः इति पाठः । ७. क पुस्तके विषये इति नास्ति । ८. ग ङ पुस्तके च दुर्ग्रहणमिति पाठः । ९. क पुस्तके कल्पनेतिपाठो नास्ति । १०. घ पुस्तके परं इति पाठः । ११. ङ पुस्तके एक इति नास्ति ।

तथा च [1]यत्र कवयितुश्चमत्कारायाप्राकरणिकेऽप्यर्थे तात्पर्यं यत्र वाऽश्लीलदोषस्तत्रैव व्यञ्जनव्यापारोन्मेपो न सर्वत्रेति तद्व्यवस्थासिद्धये तत्र तत्र नियामकान्यस्मदुक्तान्यन्यादृशानि वाऽवश्यमादर्तव्यानि, तेषां चाभिधा नियामकत्वमेव वक्तुं शक्यमिति व्यर्थः, तत्र व्यक्तिकल्पनापरिश्रमो दुर्वारश्च। तत्र व्यक्तिवादिमतेऽप्यभिधा व्यापारः। तथाहि—

यदि शक्तिरभिधा, निर्विवादमस्त्येवाप्राकरणिकेऽपि सा। यदि च काव्यप्रकाशाद्युक्तरीत्या शक्यार्थप्रतिपादकत्वरूपः शब्दव्यापारः, सोऽप्यस्त्येव।

नहि तत्राप्राकरणिकशक्यप्रतिपत्तेः शब्दादन्यज्जनकम्। शक्तिग्रहमपेक्ष्य तत्प्रतिपादकत्वमभिधेति चेत्, [2]किमप्राकरणिकोऽर्थस्तत्रागृहीतशक्तिकस्या[3]ऽपि प्रतीयते ? येन सा न स्यात्।

ननु शक्त्या साक्षात् प्रतिपादकत्वमभिधा। साक्षादित्यविशेषणे मुख्यार्थशक्तिग्रहमपेक्ष्य तत्प्रतिपादन[4]व्यवधानेन तत् सम्बन्ध्यर्थान्तरप्रतिपादनरूपाया लक्षणाया [5]अप्यभिधात्वप्रसङ्गात्।

तथा च प्रागेवा[6]नुवर्तमानेन प्रकरणेन तत्प्रमेयोपस्थापनं[7] शीघ्रभावीति तद् व्यवधानेनार्थान्तरप्रतिपादनं नाऽभिधेति चेत्, न, तद्विषयशक्तिग्रहमपेक्ष्य तत्प्रतिपादनमभिधेति लक्षणं विनैव [8]साक्षात्त्वविशेषणमनतिप्रसङ्गात्।

तत्पदरूपेण पदभङ्गकृतपदान्तररूपेण वाऽर्थान्तरप्रतिपादनव्यवधान[9]राहित्यरूपसाक्षात्त्वविशेषणस्य गुरुत्वात्। तथा विशेषणे[10] 'येनध्वस्तमनोभवेन' इत्यादावस्फुटपदसन्धितया [11]'शशिमच्छिरोहरः' 'अन्धकक्षयकर' इत्यनयोरप्रयुक्तनिहतार्थत्वेनाप्रसिद्धतया[12] विलम्बेन प्रतिपत्तिरिति सर्वसिद्धत्वेन तत्राऽभिधाविषयेऽपि तदभावापत्तेः।

प्रकृताप्रकृतोभयपरे यत्राप्रकृते प्रसिद्धतरं प्रकृतेऽप्रसिद्धतरं पदं तत्र प्रसिद्धिप्राचुर्येणाप्रकृतार्थप्रतीतेरेव प्राथमिकत्वेनाप्रकृतेऽभिधा, प्रकृतेव्यक्तिरिति वैपरीत्यापत्तेश्च।

प्रकरणमुल्लङ्घ्याऽपि प्रसिद्धतरार्थस्यैव प्रथमं स्मृतेः।

---

१. क पुस्तके यत्रेति नास्ति। २. ग ङ पुस्तके च चेदत्रा प्रा० इति पाठः। ३. ग घ पुस्तकयो अभिधया किं प्रतीयते येन सा तत्रेति पाठः। घ पुस्तके किं तत्राप्राक० इति पाठः। ४. ग पुस्तके पादकं नेतिपाठः। ५. ग पुस्तके अपीति नास्ति। ६. क घ पुस्तकयोः नुमानेनेति पाठः। ग पुस्तके वार्थमनु वर्तमानेनेति पाठः। ७. घ पुस्तके योत्थापनमिति पाठः। ८. ग ङ पुस्तके च णं साधु-अनतिप्र० इति पाठः। ९. ग घ ङ पुस्तकेषु नाभावेति पाठः। १०. घ पुस्तके विशेषणे इति नास्ति। अत्र ङ पुस्तके 'येन ध्वस्तमनो भवेन' इत्यादौ धूर्जटिपक्षे-स्फुटपदसम्बन्धितया प्रसिद्धिप्राचुर्येण च झटित्यर्थप्रत्तिः। वैकुण्ठपक्षे इत्यधिकः पाठः। ११. ग पुस्तके सन्निधितयेति पाठः। १२. ग घ पुस्तकयोः चेत्यधिकः पाठः।

अत एव द्वयार्थमप्रसिद्धेऽर्थे प्रयुक्तं निहतार्थकमित्युक्तलक्षणस्य निहितार्थस्य काव्यदोषत्वमुपगम्यते ।

प्रसिद्धतराऽप्रकृतार्थप्रतीत्या, प्रकृतार्थप्रतीतिव्यवधानात् ।

न च निहितार्थस्य दोषत्वात्तत् प्रयोगोऽर्थद्वयविवक्षास्थलेऽपि काव्ये न सम्भवतीति वाच्यम्, श्लेषयमकादिषु तस्य वृद्धैर्दोषत्वस्यापोदितत्वात्[१] । 'अन्धकक्षयकरः,' 'राजा हरति लोकस्य,' 'राजाराजार्चिताङ्घ्रेरनुपचितकलो यस्य चूडामणित्वम्' इत्यादिदर्शनाच्च ।

तस्माच्छब्दस्यार्थप्रतिपादनोपयोगितत्प्रत्यासत्तिरूपधर्मभेद एव वृत्ति-[२]भेदप्रयोजको ननु तद् भेदाऽभावे[३] प्रतिपादनगतसाक्षात्त्वव्यवहितत्वभेदः[४] ।

शक्तिशक्यसम्बन्धरूपप्रतिपाद्यप्रत्यासत्तिभेदेनैवाऽभिधालक्षणयोर्भेददर्शनात् । तद्भेदाऽभावे च[५] प्रसिद्धाऽप्रसिद्धार्थगोचरशब्दश्लेषस्थले लक्षितलक्षणास्थले व्यङ्ग्यस्थले चाऽर्थद्वयप्रतीत्योः साक्षात्त्वव्यवहितत्वभेदे सत्यप्यभिधालक्षणा-व्यक्त्यतिरिक्तवृत्त्यदर्शनाच्चेत्यप्रयोजकस्याव्यवस्थापादकस्य च साक्षात्त्व-विशेषणस्यायोगात्तद्विषयशक्तिग्रहमपेक्ष्य तत्प्रतिपादकत्वमेवाऽभिधेत्यप्रकृतेऽप्यर्थेऽभिधाव्यापारो दुर्वारः ।

नैयायिकास्तु—प्रसिद्धिप्राचुर्ये सति प्रकरणादिशून्यस्याऽप्यर्थस्य स्मृतेः, [६]प्रसिद्ध्यभावे प्रकरणादिमतोऽप्यस्मृतेश्च प्रकरणादिकं नाऽभिधानियामकम् । शक्तिग्रहसंस्कारपाटवमात्र[७]नियम्यत्वात् तस्याः, किन्तु लिङ्गविधया तात्पर्य-ग्राहकम् ।

अत एव हरिरस्तीत्यनारभ्यवादश्रवणेऽपि हरिशब्दस्य "यमानिलेन्द्र-चन्द्रार्कादयो[८]ऽर्थाः" इत्यवधार्यत एव वक्तुः परं क्व[९] तात्पर्यमिति नावधार्यत इत्याहुः ।

तद् रीत्या तु न कथञ्चिदपि [१०]प्रकरणादिनाऽभिधानियमनं[११] शक्यशङ्कम् ।

तस्मात् प्रस्तुताप्रस्तुतोभयपरेऽपि प्रस्तुताप्रस्तुतयो[१२]रभिधैव वृत्तिः । तदुपस्थितेषु च पदार्थेष्वाकाङ्क्षादिसहकारिवशादुभयविधवाक्यार्थप्रत्ययः; इत्यप्रस्तुतविषये न पदार्थप्रतीतये नाऽपि वाक्यार्थप्रतीतये व्यक्तिरुपगन्तव्या । यत्तु प्राचामप्रस्तुते शब्दशक्तिमूलव्यञ्जनवृत्त्यभिधानं तदप्रस्तुतार्थप्रतीतिमूलके

१. घ पुस्तके दोषत्वापोदितेति पाठः । ङ पुस्तके च दोषत्वाभावस्योपपादितत्वादिति । २. घ पुस्तके भेद इति नास्ति । ३. ङ पु० भाव इति । ४. ङ पु० भेदे सत्यपि इति पाठः । ५. ग घ ङ पुस्तकेषु चेति नास्ति । ६. ग पुस्तके प्रसिद्धभाव्ये इति पाठः घ पुस्तके सिद्ध्यभावे इति । ७. क पुस्तके मात्रेति नास्ति । ८. ग घ पुस्तकयोः चन्द्रादयो इति पाठः । ९. घ पुस्तके तु इति पाठः । १०. ख पुस्तके प्रकरणाप्रकरणा-दिनेति पाठः । ११. घ पुस्तके नियमेन शक्यम् इति पाठः । १२. ग घ ङ पुस्तकेषु तोभयवाचार्थे इति पाठः ।

यथोदयमारूढ[1] इत्यादिविशेषणविशिष्टः पृथिवीपतिः स्वल्पैर्ग्राह्यधनैर्लोकस्य हृदयं रञ्जयति, एवं तथाभूतश्चन्द्रमाः मृदुलैः किरणैरित्यादिरूपेण प्रतीयमाने उपमाद्यर्थाऽलङ्कारे तदवश्यं भावदृढीकरणाभिप्रायेण। न तु तत्राऽपि वस्तुतो व्यञ्जनाव्यापाराऽस्तित्वाऽभिप्रायेण।

आच्छादितायतदिगम्बरमुच्चकैर्गामाक्रम्य च स्थितमुदग्रविशालश्रृङ्गम्।
मूर्ध्निस्खलत्तुहिनदीधितकोटिमेनमुद्वीक्ष्य को भुवि न विस्मयते गिरीशम्॥
(शि० व० ४।१९)

इत्यादिना शब्दशक्तिमूलस्यालङ्कारध्वनेरेवोदाहरणत्वेन तैरपि[2] लिखितत्वात्। 'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्'। इति श्लेषा[3]पादितविशेषणसाधारण्यनिमित्तसमासोक्त्यलङ्कारोदाहरणे रागादिशब्दानामप्रस्तुतेऽप्यभिधावृत्तेरेव श्लेषव्यवहारेण स्फुटीकरणाच्च।

न चात्र स्वतोऽप्रस्तुतयोरपि कामिनोः शशिवदनापादकत्वेनान्वयान्न[4] तत्र[5] तयोः सर्वथैव प्रकरणाऽसम्भव इति वाच्यम्। 'विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः' इति लक्षणानुरोधेनाप्रस्तुतप्रतिपत्ति[6]र्विशेषणसाम्याधीनत्वेनाप्रस्तुतस्य प्रकरणसम्बन्धाऽवगमात् प्रागेव तद्विशेषणेष्वभिधाया वाच्यत्वात्।

प्रस्तुतोपमानत्वादिना यथाकथञ्चिद् भाविप्रकरणसम्बन्धस्येहाऽपि सद्भावाच्च।

सर्वथाप्रस्तुताऽसम्बन्धस्याप्रस्तुतस्य क्वापि कविविवक्षा[7]गोचरत्वाभावात्।

नन्वेवं शब्दशक्तिमूलस्याऽलङ्कारध्वनेः 'आच्छादितायतदिगम्बर[8]मुच्चकैर्गाम्' इत्याद्युदादाहरणसत्त्वेऽपि तन्मूलो वस्तुध्वनिर्लुप्येत[9]--निरलङ्कारे प्रस्तुतार्थ एव वस्तुध्वनेरुदाहरणीयत्वात्, तत्र च त्वया[10]ऽभिधाङ्गीकारादिति चेत् न।

यत्राऽप्रस्तुतेऽर्थेऽभिधयैव प्रतिपाद्यमाने तन्मूलमनभिधेयं वस्तु प्रतीयते तत्र तदङ्गीकारादिति। यथा—

शनिरशनिश्च तमुच्चैर्निहन्ति, कुप्यसि नरेन्द्र यस्मै त्वम्। इति। अत्राशनिशब्देन प्रस्तुताद् वज्रादन्यस्मिन् समभिव्याहृत[11]-शनिविरुद्धरूपेऽप्यर्थे[12]-ऽभिधयैव प्रतिपाद्यमाने 'विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत' इत्युपश्लोक्यस्य प्रभावातिशयः प्रतीयते। इत्थमेव च प्राचीनैरपि शब्दशक्तिमूलो वस्तुध्वनिरुदाहृतः।

---

१. घ पुस्तके दयरूढ इति पाठः। २. घ पुस्तके विलिखतत्वादिति पाठः। ३. घ पुस्तके यदिरविशेषण इति पाठः। ४. ख ग घ पुस्तकेषु प्रस्तुतशशिनिशावच्छेदकत्वेनेति पाठः। ५. पुस्तके तत्रेति नास्ति। ६. ख ग घ पुस्तकेषु त्तेः इति पाठः। ७. ग पुस्तके वक्ष्यमाणाया इति पाठः। ८. ख ग घ ङ पुस्तकेषु उच्चकैर्गामिति पाठो नास्ति। ९. ग पुस्तके लुप्यते इति पाठः। १०. घ पुस्तके या इति पाठः। ११. घ पुस्तके शनि शब्दं समर्प्येत्यधिकः पाठः। १२. ग पुस्तके अपिः नास्ति।

ननु—

भ्रमिमरति[1]मलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम्।
मरणञ्च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम्॥

इत्यत्र [2]विषपदेननाऽप्रस्तुतं गरलं व्यङ्ग्यं वाच्यस्य 'जलद एव भुजगः' इति रूपकस्य सिद्धिकृदिति वाच्यसिद्ध्यङ्गं गुणीभूतव्यङ्ग्यमुदाहरता मन्मया[3] मम्मटाचार्येणाप्रस्तुते शक्येऽपि शब्दशक्तिमूलो वस्तुध्वनिरुक्तः। सत्यम्—

अप्रस्तुतार्थप्रतीतिमूलतया प्रतीयमानयोर्वस्त्वलङ्कारयोर्व्यक्त्यवश्यम्भाव-दाढर्चायाश्रितमप्रस्तुतार्थेऽपि व्यक्तिरिति प्रौढिवादमात्रमवलम्ब्य तत्प्रवृत्तमिति न तत्राऽभिनिवेशः कार्यः।

नन्वेवं प्रस्तुतार्थपर्यालोचनालभ्ययोरेव[4] वस्त्वलङ्कारयोर्व्यक्त्युपगमे तत्राऽर्थशक्तिमूलैव व्यक्तिर्भवेदिति पृथगर्थशक्तिमूलध्वनेः शब्दशक्तिमूलो न स्यादिति चेन्मैवम्।

तथात्वेऽपि प्रस्तुताऽप्रस्तुतोभयसाधारणशब्दस्यापेक्षिततया[5] प्रस्तुतमात्र[6]-परपर्यायशब्दान्तरपरिवृत्यसहिष्णुत्वेन ततस्तस्य पृथग् वक्तव्यत्व[7]व्यवस्थितेः।[8]

एवमन्येऽप्यप्रस्तुतशक्ये[9]ऽपि व्यक्त्यनुपगमे सम्भाविताः क्षुद्रोपद्रवा निरसनीयाः॥

इति श्रीमदप्पय्यदीक्षितविरचिते[10]
वृत्तिवार्तिके मुख्यवृत्तिनिर्णयो
नाम प्रथमः परिच्छेदः॥

---

१. ग पुस्तके अरवि इति पाठः। २. ग पुस्तके विषयभेदेनेति पाठः। ३. ग घ पुस्तकयोः मन्मथाचार्येणेति पाठः। ४. ख घ पुस्तकयोः अप्रस्तुतेति पाठः। ५. ङ पुस्तके सापेक्षतयेति पाठः। ६. ङ पुस्तके मात्रापरेति पाठः। ७. ङ पुस्तके वक्तव्यत्वेतिनास्ति। ८. घ पुस्तके सिद्धेरिति पाठः। ९. घ पुस्तके शक्यं व्यक्त्यनुपगमे इति पाठः। १०. क पुस्तके श्रीमदप्पय्यदीक्षिते विरचिते इति नास्ति।

# अथ लक्षणा निर्णीयते

सा च मुख्यार्थसम्बन्धेन शब्दस्य प्रतिपादकत्वम् । (सू० १)

तत्सादृश्येन प्रतिपादकत्वरूपा गौण्यपि लक्षणा प्रभेद एव । तत् सदृशेऽपि तन्निरूपितसादृश्याधिकरणत्वपरम्परा[१]सम्बन्धसत्त्वात् । न हि साक्षात् सम्बन्धे विशिष्टबुद्धियोग्यसम्बन्धे वा सत्येव लक्षणेति नियमः । चक्षुरादेर्घटनैल्यादिषु[२] संयुक्तसमवायादिवद् विशिष्टबुद्धयोग्यस्य परम्परासम्बन्धस्याऽपि प्रत्यासत्तित्वोपपत्तेः[३] । व्यतिरेकलक्षणास्थले [४]तन्निरूपितविरोधीकरणत्वादिपरम्परासम्बन्धमात्रेण तादृशेन लक्षणाक्लृप्तेश्च ।

एतेन सादृश्यं न सम्बन्ध इति गौणी लक्षणातो भिन्ना । विशिष्टधीयोग्यस्यैव सम्बन्धत्वात्[५] । संयोगे सति 'दण्डी देवदत्त' इतिवत् सत्यपि सादृश्ये 'सिंहवान् देवदत्त' इति विशिष्टबुद्धेरदर्शनादिति निरस्तम् ।

विशिष्टबुद्धयनियामकपरम्परासम्बन्धमात्रस्य प्रत्यासत्तित्वोपपत्तेस्तावता[६] लक्षणावक्लृप्तेश्च दर्शितत्वात् । तस्मात् सादृश्यगर्भतदन्यसम्बन्धनिमित्ततया गौणी शुद्धा चेति लक्षणाया एव द्वैविध्यम् ।

इयञ्च द्विविधाऽपि लक्षणा प्रत्येकं द्विविधा । निरूढलक्षणा फललक्षणा च । रूढितुल्यतया (निरूढा) निरूढलक्षणा । विवक्षितार्थान्तरद्योतनफला फललक्षणा ।

आद्या यथा—

लावण्यसागरभुवि प्रणयं विशेषाद् दुग्धाम्बुराशिदुहितुस्तव तर्कयामि ।
यत्तां बिभर्षि वपुषा निखिलैः प्रतीकैरन्यां तु केवलमधोक्षजवक्षसैव ॥

अत्र लावण्यशब्दस्य लवणत्ववाचिनो हृदयङ्गमत्वसादृश्यात् सुषमाविशेषे निरूढलक्षणा । एवमालेख्यगजादौ गजादिशब्दस्यापि[७] निरूढलक्षणाऽनुसन्धेया । इदं गौण्या उदाहरणम् । शुद्धा यथा—

क्वणद् द्विरेफावलिनीलकङ्कणं प्रसार्य शाखाभुजमाम्रवल्लरी[८] ।
कृतोपगूढाकलकण्ठकूजितैरनामयं पृच्छति दक्षिणानिलम् ॥

---

१. घ पुस्तके रूपेत्यधिकः पाठः । २ ग पुस्तके संयुक्तसंयुक्तेति पाठः । ३. घ पुस्तके सत्तित्वापत्तेरिवि पाठः । ४. ग पुस्तके तदिति नास्ति । ५. ख पुस्तके त्वेति नास्ति । ६. ग पुस्तके तन्निरूपितविरोधिकरण त्वादिना सेत्यधिकः पाठः । ७. ख पुस्तके रूढेति पाठः । ग पुस्तके रुढीति पाठः । ८. क पुस्तके 'मत्र वल्लरी' इति पाठः । ङ पुस्तके 'आम्रवल्लरीम्' इति पाठः ।

अत्र द्विरेफशब्दस्य द्वौ रेफौ विद्येते[1] यस्येति व्युत्पत्त्या भ्रमरशब्दवृत्तेस्तद्वाच्ये रूढिलक्षणा ।

एवं त्वगादिशब्दानां त्वगिन्द्रियादिष्वपि शुद्धारूढिलक्षणा द्रष्टव्या । [2]फललक्षणाजहल्लक्षणाऽजहल्लक्षणा, जहदजहल्लक्षणा, सारोपा, साध्यवसाना च । तत्राद्या त्रिविधा शुद्धैव । सारोपा साध्यवसाना च गौणी शुद्धा चेत्येवं सप्तविधा फललक्षणा[3] । जहल्लक्षणा यथा—

त्वत्पादपद्मसुषमानुकृतिक्षमाणि प्राप्तुं प्रवालपदभाञ्जि विभूषणानि ।
वल्कावृता धृतजटाः सुरदीर्घिकायां कल्पद्रुमाः कति [4]गिरीश तपश्चरन्ति ॥ (२)

अत्र सुरदीर्घिकापदस्य कल्पद्रुमाऽधिकरणत्वयोग्ये[5] तत्तीरे लक्षणा । मुख्यार्थस्य तदधिकरणत्वेनान्वयाभावाज्जहल्लक्षणा । कल्पद्रुमाणां तपश्चर्योत्प्रेक्षोपस्कारकं तीरस्यातिशयितपावनत्वद्योतनं फलम् ।

एवं 'गङ्गायां घोष' इति प्रसिद्धोदाहरणमप्यनुसन्धेयम् । तत्र गोस्वामिनः प्रीतये तीरस्याधिकशैत्यद्योतनं फलम् । [6]व्यतिरेकलक्षणाऽपि जहल्लक्षणा प्रभेदः एव । यथा—

उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदासखे सुखतमास्स्व ततः शरदां शतम् ।

अत्राऽपकारिण्यन्वयायोग्ये[7] उपकृतादिपदैः स्वार्थविरुद्धं लक्ष्यते । त्वयाऽपकारे क्रियमाणेऽपि मयैवं प्रियमेवोच्यत इति स्वसाधुत्वद्योतनम्[8] ।

अजहल्लक्षणा—कुन्ताः प्रविशन्ति—यष्टयश्चेति ।

अत्र भीतिपलायमानवाक्ये कुन्तपदस्य[9] तद्वत् सुपुरुषेषु लक्षणा । कुन्तादेरपि पुरुषसाहित्येन प्रवेशक्रियाऽन्वयादजहल्लक्षणा । तेषां निर्दय[10]प्रहर्तृत्वादि[11]द्योतनं फलम् । ग्रामैकदेशदाहादौ सति 'ग्रामो दग्धः' 'पुष्पितं वनमित्यादिप्रयोगे ग्रामादिपदस्य स्वार्थैकदेशपरित्यागेन तदेकदेश[12]वृत्तिर्जहदजहल्लक्षणा । दग्धभूयस्त्वादिद्योतनं फलम् । सारोपलक्षणा[13]—

नाथ ! त्वदीयमकलङ्कमिमं मुखेन्दुमापीय तृप्यति सदा वसुधा यतस्ते ।
तेनैव किं न[14]वसुधारसगोचरोऽभूदिन्दुः कलङ्कमलिनीकृतमध्यभागः ॥

---

१. ग घ ङ पुस्तकेषु विद्येते इति नास्ति । २. घ पुस्तके फललक्षणेति पाठो नास्ति । ३. घ पुस्तके फलेति पाठः नास्ति । ४. ग पुस्तके इति इति पाठः । ५. क पुस्तके नेत्यधिकः पाठः । ६. पुस्तके विरुद्धेति पाठः । ७ घ पुस्तके योग्यैरिति पाठः । ८. ग पुस्तके फलमिति घ पुस्तके प्रयोजनमित्यधिकः पाठः । ९. ग पुस्तके कुन्तादिपदस्येति पाठः । १०. घ पुस्तके प्रेति पाठो नास्ति । ११. ख पुस्तके आदिपदं नास्ति । १२. ख ग पुस्तकयोः देशेति पाठः । १३. ग ङ पुस्तके च सारोपा यथा इति पाठः । १४. तवेति पाठान्तरम् । ङ पुस्तके निर्दिष्टम् ।

अत्रेन्दुशब्दस्य मुखे लावण्यादिसादृश्याद् गौणसारोपलक्षणा। ताद्रूप्य-प्रतिपत्तिः फलम्।

एवं 'गौर्वाहीकः', 'मुखं कमलम्' इत्यादि व्यासेऽपि गौणसारोपलक्षणा[1]। गौणसाध्यवसाय[2]लक्षणा यथा—

नाभेरभूत्तव चतुर्भुज नान्तरिक्षं यन्नाभिरेव यदुनेतरियं ततोऽभूत्।
अन्योऽन्यसंश्रयपराहतिदूषितं यदाह श्रुतिस्तदविमृश्य किमर्थतत्त्वम्॥३॥

अत्राऽन्तरिक्षपदस्य भगवदवलग्ने सूक्ष्मत्वसादृश्यात् गौणसाध्यवसाय[3]लक्षणा। सर्वथैवाऽभेदप्रतिपत्तिः फलम्। विषयस्य[4] विषयिभेदानपह्नवेन तद्रूपोपरक्तता-प्रतीतिस्ताद्रूप्यप्रतिपत्तिः। विषयस्य विषयिणैवाभेदप्रतीतिः सर्वथैवाऽभेद-प्रतिपत्तिरिति सारोपसाध्यवसायलक्षणाफलयोर्भेदः।

विषयविषयिवाचकयोर्द्वयोरपि निर्देश आरोपः। विषयिपदमात्रस्य विषय-लाक्षणिकतया निर्देशोऽध्यवसाय इति आरोपाऽध्यवसानयोर्भेदः।

ननु सारोपलक्षणोदाहरणे मुखेन्दुरित्यादाविन्द्वादिपदस्य मुखादौ न मुखत्वादिना लक्षणा। मुखादिपदस्यापि सत्त्वेन पौनरुक्त्यापत्तेः। नापीन्दुगत-लावण्यादिगुणेन। अन्यगुणस्यान्यत्र प्रवृत्तिनिमित्तत्वायोगात्। नापि मुखगत[5]-लावण्यादिगुणेन। मुख्यार्थसम्बन्धरहितगुणमुखेन लक्षणाऽऽयोगात्। मैवम्—

मुखचन्द्रोभयानुगतलावण्यसामान्यादिमुखेन लक्षणोपगमे दोषद्वयस्याप्य-संस्पर्शात्। इदमेवाऽभिसन्धायोक्तं वृद्धैः—'लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणतेति'।

शुद्धसारोपलक्षणा यथा—

आपादमाचिकुरभारमशेषमङ्गमानन्दसारमरविन्ददृशामसीमम्[6]।
अन्तर्मम स्फुरतु सन्ततमन्तरात्मन्नम्भोजलोचन तव श्रितहस्तिशैलम्॥४॥

अत्र भगवदङ्गेष्वानन्दकारित्वेनानन्दपदस्य सारोपलक्षणा। आनन्दकरणे इतरवैलक्षण्य[7]द्योतनं फलम्। आनन्दकारिणिविषयनिगरणेनानन्दोऽयमिति प्रयोगे साध्यवसायलक्षणा। आनन्दाऽव्यभिचारद्योतनं फलम्। एवं शुद्धा पञ्चविधा गौणी द्विविधेति सप्तविधाफललक्षणा।

ननु गौण्यामपि जहदजहल्लक्षणाभेदौ सम्भवतः। मुखं कमलम्, गौर्वाहीक इत्यादौ जहल्लक्षणा तावत् स्फुटेव। अजहल्लक्षणाऽपि—'[8]गोवाहीकोभयविषये

१. ग घ ङ पुस्तकेषु द्रष्टव्या इति अधिकः पाठः। २. ग ङ पुस्तके सानेति पाठः। ३. क ख पुस्तके सानेति पाठः। ४. ग पुस्तके विषयस्येति पाठो न। ५. क पुस्तके गतेति नास्ति। ६. घ पुस्तके दशामसोममिति पाठः। ७. ख ग पुस्तकयोः स्येत्यधिकः पाठः। ८. ग घ पुस्तकयोर्गौर्वाहीको भ० इति पाठः।

गाव एते समानीयन्तामित्यादौ दृश्यते। अतः कथं द्विविधैव गौणी। उच्यते। मुख्यार्थसादृश्येन लक्षणा हि[1] गौणी। न च तत्रैव तत् सादृश्यमस्ति येन मुख्येऽपि गौणीवृत्तिः स्यात्। शुद्धात्वजहल्लक्षणा कुन्ताः प्रविशन्तीत्यादौ विशेषणवाचिनो[2] विशिष्टे वृत्तिः[3] सम्भवति, विशिष्टविशेषणयोरेकदेशैकदेशभावरूपसम्बन्धसत्त्वात्[4]। अतो 'गाव एते समानीयन्ताम्' इत्यादावभिधालक्षणाभ्यामेवार्थद्वयप्रतिपादनम्। 'गङ्गायां जलं[5] घोषश्च तिष्ठती'त्यत्रैवेति न गौण्यां जहदजहल्लक्षणाभेदसम्भवः। तस्मात् सप्तैव लक्षणा भेदा इति। इत्थमयं चिरन्तनैः प्रदर्शितो लक्षणा विभाग इति।

अत्रेदं प्रतिभाति—शुद्धासु साध्यवसायलक्षणाप्रभेदकथनमयुक्तम्। परार्थं स्वसमर्पणस्याविशेषेण तस्य जहल्लक्षणानतिरेकात्। नहि[6] तदविशेषेऽपि[7] सारोपलक्षणायां विषयवाचकसामानाधिकरण्यकृतवैचित्र्यवदिह वैचित्र्यान्तरमस्ति येन तद्वदेव जहल्लक्षणातः पृथगुदाह्रियेत।

ननु कार्यकारणभावसम्बन्धेन वृत्तिरित्यत एव ततः पृथक्त्वमस्तु। कार्यकारणभावातिरिक्तेन गङ्गातीरादिगतसंयोगादिसम्बन्धेन वृत्तौ जहल्लक्षणेत्यसङ्करोपपत्तेः। मैवम्, राजकीयः पुरुषोऽयं[8] राजा। इन्द्रार्था स्थूणा इन्द्रः। अतक्षाऽयं तक्षा। अग्रहस्तोऽयं हस्त इति स्वस्वामिभावतादर्थ्यतात्कर्म्याऽवयवावयविभावेष्वपि कार्यकारणभाव इव सारोपसाध्यवसायलक्षणयोराकरग्रन्थेषूदाहरणात्।

आश्रयाश्रयिभावसम्बन्धेऽप्यलङ्कारसुधानिधावुदाहरणाच्च। वैचित्र्यान्तराभावेऽपि[9] सम्बन्धभेदमात्रेण विधान्तरोपगमे सम्बन्धभेदान्तरमवलम्ब्याऽपि विधान्तरोपवर्णनस्य[10] प्रत्याख्यातुमशक्यतया सप्तविधत्व[11]नियमासामञ्जस्यप्रसङ्गाच्च।

ननु साध्यवसायलक्षणोदाहरणेष्वभेदाऽभिव्यक्तिरस्ति। 'अयमानन्दोऽयं राजेत्यादावानन्दराजाद्यभेदाभिव्यक्तिपूर्वकमेवानन्दाव्यभिचारित्वानुल्लङ्घ्यशासनात्वादि फलप्रतीतेः।

अतो व्यङ्ग्यवैचित्र्येण भेदोऽस्त्विति चेत् न। जहल्लक्षणोदाहरणेऽपि तीरे प्रवाहाभेदाऽभिव्यक्तिपूर्वकमेव तत्र तद्गतातिशयितशैत्यपावनत्वादिफलप्रतीतेः। तीरे प्रवाहतादात्म्यप्रतीत्यभावे[12]ऽपि तत्र प्रवाहगतातिशयितशैत्यादेः[13] प्रत्ययाऽ-

---

१. ख ङ पुस्तके च हीति नास्ति। २. घ पुस्तके नेति पाठः। ३. ग ङपुस्तके वृत्तिरिति नास्ति। ४. घ पुस्तके संबन्धत्वादिति पाठः। ५. गङ्गायां घोषो मलश्चेति घ पुस्तके पाठः। ६. ग पुस्तके एतर्हि इति पाठः। ७. ग पुस्तके अपि इति नास्ति। ८. ग पुस्तके अयमिति नास्ति। ९. घ पुस्तके अपीति नास्ति। १०. ग अपीत्यधिकः। ११. क पुस्तकेत्वेति नास्ति। १२. ग ङ पुस्तके च अपि इति नास्ति। घ पुस्तके भावेनात्रेति पाठः। १३. ख पुस्तके पावनत्वादिफलप्रतीतेरिति पाठः। ग पुस्तके पावनत्वाः इति पाठः।

सम्भवात्। नहि तीरे गङ्गासम्बन्धप्रयुक्तं तद्गतस्वाभाविकशैत्यादिद्योतनमेव लक्षणाफलम्। येन गङ्गासम्बन्धितीरत्वेन लक्षणयैव तल्लभ्यत इति नाऽभेदाऽभिव्यक्तिरङ्गीक्रियते। सत्यपि मुख्ये गङ्गातीरादिपदे स्वायत्ते च शब्दप्रयोगे मुख्यप्रयोगादपि[1] लभ्यस्य लक्षणाफलत्वायोगात्।

काव्यसरणौ लक्षणायां काव्यशोभाऽतिशयाधायकतया प्रवाहगताऽतिशयितशैत्यादिस्वाभाविकं पावनत्वं द्योतयतोऽप्यधिकं स्तोतुकामस्तस्य प्रवाहतादात्म्यप्रतिपत्त्यातद्गतातिशयितपावनत्वद्योतनाय तस्मिन् गङ्गापदं प्रयुङ्क्ते[2] इति दर्शनाच्च। अतो जहल्लक्षणायामपि अभेदाभिव्यक्तिरविशिष्टा। उक्तं च काव्यप्रकाशिकायाम्—'तटादीनां गङ्गादिशब्दप्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसम्प्रत्यय' इति।

रत्नाकरेणा[3]ऽप्युक्तम्—स्रोतस्तीरयोरेकशब्दबोध्यत्वे नदी[4]तादात्म्यप्रतीतेः स्रोतोधर्मा[5] शैत्यपावत्वादयस्तीरे प्रतीयन्त—इति प्रयोजनसिद्धिरिति।

अतः साध्यवसायलक्षणायाः फलकृतोऽन्यकृतो वा न जहल्लक्षणातो भेदः सम्भवतीति न तदुदाहरणपार्थक्यं युक्तम्। तथा सारोपलक्षणोदाहरणे उपमानोपमेयानु[6]गतसाधारणधर्ममुखेन लक्षणेत्ययुक्तम्। तथा सति यत्र[7] साधारणधर्मस्याऽपि पदान्तरेणोपादानं तत्र तेन पौनरुक्त्यापत्तेः। यथा—

ताराभिराम परिणाहलसत्सिताभ्रं तापिच्छमेचकमुरः शरदन्तरिक्षम्।
प्राप्यैव देव तव कौस्तुभपूर्णचन्द्रः पूर्णां विभर्त्ति पुरुषोत्तमकान्तिरेखाम्॥

अत्र हि वक्षोऽन्तरिक्षयोः साधारणः परिणाहित्वमेचकत्वादिधर्मोऽपि पृथगुपात्त[8] एव, उपात्तधर्मातिरिक्तधर्ममुखेन लक्षणाऽस्त्विति चेत् न।

उपात्तमेचक[9]त्वादि [10]व्यतिरिक्तसामान्य[11]धर्मास्फुरणेऽपि सहृदयानां परिपूर्णवाक्यार्थप्रतीतिदर्शनात्। द्रव्यत्वादिसामान्यधर्मस्य कविताऽनङ्गत्वात्। अन्ततः कवयितुरप्येतादृशस्थलेषूपात्तधर्मातिरिक्तधर्मगर्भीकाराभावाच्च।

नन्विह मा भूत् सारोपलक्षणा, उर एव शरदन्तरिक्षमिति मयूरव्यंसकादिसमासोपगमे[12] हि सा भवति; किन्तु उरः शरदन्तरिक्षमिवेत्युपमितसमासोऽस्तु। तत्र च विग्रहवाक्यस्थो लुप्त इवकारः सादृश्यं प्रतिपादयतीति नोपमानवाचकस्यो[13]पमेये लक्षणेत्यालङ्कारिकाणामभ्युपगमः। तत्र तैर्लुप्तोपमाङ्गीकारादिति न कश्चिद् दोष इति चेत्, न। मेचकत्वादिसामान्य[14]धर्मस्य शब्दोपात्ततया

१. घ पुस्तके गादिलभ्येति पाठः। २. क पुस्तके प्रयुङ्क्ते इतीति पाठः। ३. ख घ पुस्तकयोः रत्नापणेऽपीति पाठः। ४. ख ग घ पुस्तकेषुत्वेन तादात्म्येति पाठः। ५. धर्माच्छैत्येति पाठः। ६. ख घ पुस्तकयोः अनु इति नास्ति। ७. ङ पुस्तके तत्रेति पाठः। ८. उपादान इति पाठः घ पुस्तके। ९. घ पुस्तकेमेकत्वादीत्ति पाठः। १०. घ ङ पुस्तके व्यक्त्यतिरिक्तेति पाठः। ११. घ पुस्तके सामान्यादिति पाठः। १२. क पुस्तके सोपगमे इति पाठः। १३. घ पुस्तके स्योपचये इति पाठः। १४. ग घ ङ पुस्तकेषु सामान्यस्येत्येव पाठः।

उपमितसमासाऽसम्भवात्। "उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे" इति सामान्याऽप्रयोग एव तत् समासाऽनुशासनात्। आलङ्कारिकैरपि सामान्यप्रयोगे सत्युपमा[1]बाधकसत्वात् सारोपलक्षणामूलको रूपकाऽलङ्कारः, नतूपमालङ्कार इत्युपगमात्। उपमितसमासे धर्मवाचकलुप्तोपमाऽलङ्कारस्यैव तैरुदाहरणाच्च। सामान्यधर्मप्रयोगेप्युपमितसमासाङ्गीकारे [2]हि केवलवाचकलुप्ताऽपि तत्रोदाह्रियेत।

नन्वेवं साधारणधर्मप्रयोगे सादृश्य[3]मुखेन लक्षणाऽस्तु तद्वाचकस्य यथेवादेरप्रयोगेन पौनरुक्त्या[4]प्रसङ्गात्। तत् प्रयोगे उपमानवाचकस्य सादृश्यप्रतियोगिभूतस्ववाच्यपरतयोपमेयलक्षणाया अवाच्यत्वादिति चेत् न, तथा सति सादृश्यस्य शब्दोपात्तत्वेनोपमाऽलङ्कारस्य प्राप्त्या 'सारोपलक्षणायां रूपकादिरलङ्कारो नोपमेत्यलङ्कारविभागासामञ्जस्यप्रसङ्गात्। नहि सादृश्यस्य वाच्यत्व एवोपमा। 'कमलसुहृन् मुखमित्यादौ सुहृदादिपदेन तल्लक्षणायामप्युपमासम्प्रतिपत्तेः।

अपि च पादाम्बुजमित्यादौ [5]व्याघ्रादिसमासेनोपमाया, मयूरव्यंसकादिसमासेन रूपकस्य च [6]सम्भवेन सर्वत्राऽनवधारणे प्राप्ते यत्र 'पादाम्बुजं भवतु वो विजयाय [7]मञ्जुमञ्जीरशिञ्जितमनोहरमम्बिकायाः, इत्यादौ [8]पादे सम्भवन् मञ्जीरयोगादिकं निबध्यते। तत्र तदाऽनुगुण्यात् पूर्वपदार्थप्रधानेन व्याघ्रादिसमासेन उपमाऽलङ्कारः। यत्र तु—"यस्याऽनिशं दिविषदश्चरणाऽरविन्दमुत्तंसयन्त्यमितभक्तिभराऽवनम्राः" इत्यादावरविन्दकार्यमुत्तंसनादिकं निबध्यते, तत्र तदाऽनुगुण्यादुत्तरपदार्थप्रधानेन मयूरा[9]दिसमासेन रूपकाऽलङ्कार इति व्यवस्था सर्वैरपि प्रतिपाद्यते।

[10]नन्वेवं व्यवस्था चरणारविन्दमित्यादिरूपकस्थलेऽप्यरविन्दादिपदानामरविन्दत्वाद्याकारमपहायारुणिमादिसाधारणधर्ममुखेन तन्निबन्धनसादृश्यमुखेन वा चरणादिलक्षकत्वे युज्यते। तथा सत्युत्तरपदार्थस्यारुण्यसादृश्यादि[11] गुणस्य प्राधान्या[12]योगेन मयूरव्यंसकादिसमासाश्रयणेऽपि व्याघ्रादिसमासाश्रयण इव पूर्वपदार्थचरणस्यैव प्राधान्यापत्त्या उत्तंसनाऽनुगुण्यस्य विरहतौल्यापत्तेः।

गुणजात्योर्जातिप्राधान्यस्य नीलोत्पलादौ व्यवस्थितेः। उत्तरपदार्थस्य प्राधान्येऽपि अरविन्दजातेरिवारुण्यसादृश्यादिगुणस्योत्तंसनाऽनुगुणत्वाभावाच्च। तस्मात् सारोपलक्षणोदाहरणेषु साधारणधर्मादिमुखेन लक्षणेत्ययुक्तम्। तथा तादूरूप्यप्रतीतिरत्र फलमित्यप्य[13]युक्तम्।

१. वाचकेति घ पुस्तके पाठः। २. घ पुस्तके हीतिपाठो नास्ति। ३. घ पुस्तके मुचितेति पाठः। ४. ख पुस्तकेक्त्यप्रसङ्गादिति पाठः। ५. व्याघ्रादिः इति ङ। ६. घ पुस्तके सम्भवेनेति नास्ति। ७. घ पुस्तके मञ्जु इति नास्ति। ८. क पुस्तके पादे इति नास्ति। ९. ग ङ पुस्तके व्यंसकादीत्यधिकः। १०. न चेयमिति ङ पु०। ११. सादृश्य गु० ङ पु०। १२. प्राधान्यादि इति ङ पु०। १३. क पुस्तके प्येति नास्ति।

सामान्यधर्ममुखेन सादृश्यमुखेन वा लक्षणोपगमे ताद्रूप्याऽभिव्यक्त्ययोगात्। तदा[1] हि "कान्तिमन् मुखम्" चन्द्रसदृशं मुखमित्यादिरर्थः सम्पद्यते। न चैतावता ताद्रूप्याऽभिव्यक्तिः। 'कान्तिमन् मुखम्' इत्यादिप्रयोगेऽपि तत्प्रसङ्गात्।

न च 'गङ्गायां घोषः' इत्यादौ स्रोतस्तीरयोरभेदाध्यवसायवन्मुखचन्द्रयोरेकशब्दबोध्यतया केवलशब्दशक्तिमूलव्यञ्जनव्यापारेण ताद्रूप्याऽध्यवसाय इति नाऽतिप्रसङ्ग इति वाच्यम्, तदा मुखकान्तिमतोरेव ताद्रूप्याऽभिव्यक्तेः सम्भवेन "वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते" इत्यादावानुभविकस्य[2] मुखत्वोपरक्तचन्द्रताद्रूप्यप्रत्ययस्याक्लिष्टसमर्थनासम्भवात्। तथा मुखं कमलमित्यादि व्यासेऽपि सर्वत्र विषयविषयिपदयोः सामानाधिकरण्ये सारोपलक्षणेत्यप्ययुक्तम्।

विद्वन्मानसहंस वैरिकमलासंकोचदीप्तद्युते
दुर्गामार्गणनीललोहितसमित् स्वीकारवैश्वानर !
सत्यप्रीतिविधानदक्षविजयप्राग्भावभीम प्रभो !
साम्राज्यं [3]वरवीरवत्सरशतं वैरिञ्चमुच्चैः क्रियाः।

इत्यत्र हंसादिशब्दानां वर्ण्ये राजनि प्रत्यासत्तिरूपमुख्यसादृश्याप्रतीत्या लक्षणाऽसम्भवात्। तथा हि—

विदुषां मानसं हृदयमेव मानसं[4]सर इत्यादिश्लेष[5]भित्तिकाऽभेदाऽध्यवसायलभ्यमानस[6]वासित्वादिसाधारणधर्मनिबन्धनमेव तत्र सादृश्यं वाच्यम्। तदन्य[7]मुखकमलादिवत् प्रसिद्धसादृश्यस्याभावात्। न च तेन सादृश्येन लक्षणा सम्भवति, तल्लम्भकस्य श्लेषस्य रूपकोत्थाप्यतया रूपकापेक्ष[8]लक्षणादशायां तस्य बुद्धि[9]पथाऽनारोहात्। न च श्लेषस्यैव प्राथम्यं किं न स्यादिति वाच्यम्, रूपकं विना कवेरर्थद्वयविवक्षायामिह गमकाऽभावेन श्लेषानिवृत्तेः।

अभिधायाः प्रकरणनियम्यत्वपक्षे प्राचीनाऽभिमते रूपकात् प्राक्[10]प्रकरणसम्बन्धरहितसारोपलक्षणार्थान्तराभिधानस्यैवाऽसम्भवात्।

'रूपकं पूर्वसंसिद्धं श्लेषं तज्ज्ञापयेद्यदि।
[11]तदा रूपकमेव स्यादन्यथा श्लेष इष्यते॥

---

१. तथा इति ङ पु०। २. ग ङ पुस्तके भाविकस्येति पाठः। ३. ख घ पुस्तकयोः परवीरेति पाठः। ४. घ पुस्तके सर इति नास्ति। ५. निमित्तकेति घ पुस्तके। ६. क ख पुस्तकयोः वासि इति नास्ति। ७. क ख ग पुस्तकेषु न्यस्येति पाठः। ८. पेक्षणेति क पु०। ९. यथेति घ पुस्तके। १०. घ पुस्तके प्रागिति नास्ति। ११. ख पुस्तके यथेति पाठः।

इति श्लेषरूपकयोर्विभागं व्यवस्थापितवता चक्रवर्तिनाऽप्यस्मिन्नुदाहरणे रूपकोपवर्णनेनात्र श्लेष[1]पश्चात्त्वस्य स्फुटीकरणाच्चेति ।

अत्रेदं तत्त्वं—'विद्वन्मानस हंस' इत्यादौ हंसादिपदानां वर्ण्ये राजनि लक्षणा नाङ्गीकर्तव्या। सामानाधिकरण्येन [2]वर्ण्यस्य राज्ञः प्रसिद्ध हंस[3]जातीयादिभिरभेदस्य वाक्यार्थविषयैव प्रतीत्युपपत्तेः । न चैवमभेदप्रत्ययसम्भवेऽपि तादृरूप्यप्रत्ययो न लक्षणां विना सिध्येत् । स एव च विषयविषयिपदसामानाधिकरण्यस्थले सर्वत्र विवक्षित इति वाच्यम्, तत्र मानाऽभावात् । 'उर्ध्वं विरञ्चिभव[4]नादित्यादौ विषयविषयिपदसामानाधिकरण्येऽपि एवकारसाक्षात् पदाभ्याम् उरःस्थले प्रसिद्धपरम[5]पदाभेदविवक्षाया एव स्फुटीकरणाच्च ।

न चैवं 'विद्वन् मानसहंसे'त्यादौ अतिशयोक्तिरेव स्यात् विषयस्य विषयितादूरूप्ये रूपकं, [6]विषय्यभेदेऽतिशयोक्तिरिति व्यवस्थितेः । तथा च विषयविषयिसामानाधिकरण्यस्थले रूपकं विषय्य[7]भेदमात्र[8]निर्देशस्थलेऽतिशयोक्तिरिति व्यवस्थाविभाग इति वाच्यम् ।

हृत्पङ्कजानि भजतां प्रतिवोधयन्ती संसारसागरमपि प्रविशोषयन्ती ।
ज्योत्स्नात्वदङ्घ्रिनखचन्द्रसमुद्गतेयमन्यादृशीमभयद[9] प्रकृतिं बिभर्ति ।।६।।

इत्यत्र नखकान्तिरूपविषयनिगरणेन ज्योत्स्नेति विषयिपदमात्रनिर्देशेऽपि पङ्कजविकासकत्वादिना प्रसिद्धज्योत्स्नातो व्यतिरेकेण तत्तादृरूप्यमात्रप्रतीतेर्दर्शनेन व्यवस्थाद्वयस्याप्यशक्या[10]ऽङ्गीकारत्वात् । तथा च यदि तादृरूप्ये रूपकमभेदेऽतिशयोक्तिरिति व्यवस्थां परित्यज्य विषयविषयिपदसामानाधिकरण्ये रूपकम्, विषयिपदमात्रनिर्देशेऽतिशयोक्तिरिति व्यवस्थाऽऽद्रियते, तदा विद्वन्मानसहंसेत्यादावभेदप्रतीतौ सत्यामपि रूपकं सम्भवतीति न काचिदनुपपत्तिः । यदि च तथा सति रूपकातिशयोक्त्योः शब्दवैचित्र्य[11]मात्रभेदप्राप्त्या परस्परमर्थाऽलङ्काररूपत्वं न स्यात्, इत्या[12]द्याव्यवस्थाऽऽद्रियते, तदा 'ज्योत्स्ना त्वदङ्घ्रिनखे'त्यादौ विषयिपदमात्र निर्देशेऽपि प्राचीनमर्यादायामतिशयोक्तिमपहाय रूपकमेवाङ्गीकर्तव्यम् ।

तद्वद् 'विद्वन् मानसहंस'इत्यादौ विषयविषयिपदसामानाधिकरण्येऽप्यतिशयोक्तिरङ्गीक्रियताम् । किमनुपपन्नम् ?

---

१. घ पुस्तके श्लेषभ्रान्यत्वस्येति पाठः । २. ख पुस्तके वर्णनीयस्येति पाठः । ३. ख पुस्तके द्वितीयेति पाठः । ङ पुस्तके पाश्च्यात्यत्वस्येति पाठः । ४. ग घ ङ पुस्तकेषु त्तवनाभिपद्मादित्यधिकः पाठः । ५. क पुस्तके परं पदा इति ङ पुस्त० पद्मपदा इति पाठः । ६. विषयाभेदे इति क पुस्तके । ७. क पुस्तके विषयाभेदे इति । घ. पुस्तके विषयिपदेतिपाठः । ८. ख पुस्तके स्थले निर्देशेतिपाठः । ९. अभयदामिति ङ० पु० । १०. प्यर्थशक्त्याङ्गीकारात् क० पु० । घ पुस्तके अशक्येति पाठः । ११. ग पुस्तके निबन्धनेत्यधिकः । १२. क ख पुस्तके इत्याद्यवस्थेति पाठः ।

तस्मादेतादृशस्थले समभिव्याहाराद[1]भेदप्रतीत्युपगमे न कश्चिद् दोष इति व्यर्थो लक्षणोपपादनप्रयासः ।

न चैवं सर्वत्र विषयविषयिपद[2]सामानाधिकरण्यस्थले समभिव्याहारादभेदप्रतीतेर्वक्तुं शक्यत्वात् क्वचिदपि सारोपलक्षणा न स्यादिति वाच्यम्, इष्टापत्तेः ।

इति श्रीमदप्पय्यदीक्षितविरचिते[3] वृत्तिवार्तिके लक्षणा-
वृत्तिनिर्णयो नाम द्वितीयपरिच्छेदः ।[4]
श्रीसीतारामाभ्यां नमः ॥

—:o:—

१. ख पुस्तके राभेदेतिपाठः । २. ङ पुस्तके पदेति नास्ति । ३. क पुस्तके इति वृत्तिवार्तिके लक्षणावृत्तिर्द्वितीयः परिच्छेद इति पाठः । ४. इति श्री अप्पदीक्षितविरचिते वृत्तिवार्तिके लक्षणावृत्तिनिर्णयो नाम द्वितीयपरिच्छेदः । समाप्तश्चायं समुपलभ्यमानो ग्रन्थः । इति ङ पुस्तके ।

## शुद्धाशुद्धिपत्रम्

| पृ० सं० | पङ्क्ति सं० | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| १ | २ | हरमूति वि० | हरमूर्तिवि० |
| ३ | २ | वेयर्थ्या० | वैयर्थ्या० |
| ,, | १६ | तदासुधा० | तदायुधा० |
| ४ | १७ | लोकेशयत् | लोकेश यत् |
| ५ | २ | विशिष्टोपस्थिते वि० | विशिष्टोपस्थितेर्वि० |
| ६ | २२ | प्रतिपादिताथ संयोगादिभिभिधा० | प्रतिपादितार्थसंयोगादिभिरभिधा० |
| ,, | २५ | महति | मर्हति |
| ११ | २३ | प्रतातेरेव | प्रतीतेरेव |
| ,, | ,, | वपरात्या० | वैपरीत्या० |
| १४ | ५ | मन्मया० | (मन्मथा०) लघुकोष्ठान्तर्गतोऽयं शब्दः |
| १५ | ६ | विरोधोकरण० | विरोधाधिकरण० |
| ,, | १८ | निखिल: प्रता० | निखिलै. प्रती० |
| १६ | १६ | सुखत० | सुखित० |
| १७ | २८ | स्फुटेव | स्फुटैव |
| २० | १९ | पदाथ० | पदार्थ० |
| २१ | ६ | केवलब्द० | केवलशब्दं० |
| ,, | १५ | प्रव्यामत्ति० | प्र यासत्ति० |
| २२ | १ | रूपकयोवि०, चक्रवतिना | रूपकयोर्वि०, चक्रवर्तिना |
| २२ | २२ | शब्दवचित्र्य० | शब्दवै चित्र्य० |

चिह्नत्रुटिः—११ पृष्ठे चतुर्थपङ्क्तौ-'व्यर्थः' इत्यस्याग्रेऽर्धविरामचिह्नो न स्वीकार्यः, परिश्रमः इत्यस्याग्रे स चिह्नो ज्ञेयः। एवं 'दुर्वाश्च' इत्यस्याग्रे पूर्णविरामचिह्नो '।' ज्ञेयः।

अङ्कसम्बन्धिनी त्रुटिः—३ पृष्ठे ११ तमपङ्क्तौ 'इन्द्र' शब्दोपरि ३ अङ्को ज्ञेयः। अष्टम पृष्ठे दशमपङ्क्तौ 'अनेकार्थ' शब्दस्योपरि ९ अङ्को ज्ञेयः।

पाठभेदविषये त्रुटिः—तृतीयपृष्ठे पाठभेदस्य प्रथमपङ्क्तौ 'ग पुस्तके-गर्भीकारेण' इत्यस्यादौ २ अङ्को ज्ञेयः।

प्रथमपृष्ठे पाठभेदे तृतीयपङ्क्तौ नास्तिकपुस्तके इत्यशुद्धम्। नास्ति क पुस्तके इति शुद्धम्।

१० पृष्ठे ,, १ ,, अपि नास्ति — अपि इति नास्ति
१५ ,, ,, ६ संख्याकः, पाठभेदश्चतुर्थसंख्यके ज्ञेयम्।
२२ ,, ,, २ पङ्क्तिस्थ ङ पुस्तके इत्यादि पाठभेदः प्रथमसंख्यकपाठभेदे ज्ञेयः।

———

रजिस्टर्ड न्यूजपेपर्स एक्ट के अन्तर्गत

# विज्ञप्ति

| | | |
|---|---|---|
| १. | प्रकाशन का नाम | सारस्वती सुषमा |
| २. | प्रकाशन की तिथि | त्रैमासिक |
| ३. | प्रकाशक का नाम | भागीरथ प्रसाद त्रिपाठी |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, |
| ४. | सम्पादक का नाम | भागीरथ प्रसाद त्रिपाठी |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |
| ५. | मुद्रक का नाम | श्री रमाशंकर पंड्या |
| | राष्ट्रियता | भारतीय |
| | पता | तारा प्रिंटिंग वर्क्स, कमच्छा, वाराणसी |
| ६. | स्वामित्व | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |

मैं भागीरथ प्रसाद त्रिपाठी घोषित करता हूँ कि उल्लिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है।

हस्ताक्षर
भागीरथ प्रसाद त्रिपाठी
गवेषणालय-संचालक
सं० सं० वि० वि०, वाराणसी—२२१००२.

पञ्जीकरणसंख्या—६६८१।५७

# सारस्वती सुषमा

## सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्वोधनं प्रोत्साहनं चास्ति।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाना निवन्धाः प्रकाश्यन्ते।

५. प्रकाशितनिवन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. 'कुलसचिव, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय, वाराणसी-२२१००२ (उ०प्र०) इति सङ्केतेन ('बैंकड्राफ्ट' अथवा 'पोस्टल आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम्।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी—२२१००२ (उ० प्र०) इति सङ्केतेन विधेयः।



प्रकाशकः—सञ्चालकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी-२२१००२ (उ० प्र०)।

मुद्रकः—तारा प्रिंटिंगवर्क्स, कमच्छा, वाराणसी।

# सुसङ्ग्राह्या दर्शनग्रन्था:

| क्रमसं० | ग्रन्थनाम | | मूल्यम् |
|---|---|---|---|
| १. | न्यायसिद्धाञ्जनम् — | [ श्रीवेदान्तदेशिकाचार्यविरचितम् ] पुस्तकरत्नमिदं विदुषा सम्पादकेन स्वर्गीयनीलमेघाचार्येण हिन्दीभाषयानूद्य विविधैर्विमर्शप्रधानैः परिशिष्टैः, अथ च विषयसारभूतया भूमिकया सनाथीकृतम् — | २५–०० |
| २. | न्यायकुसुमाञ्जलिः — | [ उदयनाचार्यप्रणीतः ] गद्यपद्यात्मकन्यायकुसुमाञ्जलिरयं सर्वप्रथमं हिन्दीभाषयानूद्य प्रकाशितः। बुधा सम्पादकेन श्रीदुर्गाधरझाशर्मणा विमर्शात्मिकया भूमिकया शास्त्रानुमोदिन्या स्वोपज्ञया टिप्पण्या च समलङ्कृतः — | ५६–५० |
| ३. | न्यायकौस्तुभः — | [ श्रीमहादेवपुणतामकरविरचितः ] अनुमानखण्डात्मकस्यास्य द्वितीयभागस्य सम्पादनं न्यायधुरन्धरैः स्वर्गतैः श्रीदामोदरलालगोस्वामिभिर्निपुणं व्यधायि — | १०–९० |
| ४. | पदवाक्यरत्नाकरः — | [ श्रीगोकुलनाथोपाध्यायविरचितः ] न्यायशास्त्रस्य ग्रन्थरत्नमिदं श्रीयदुनाथमिश्रविनिर्मितया गूढार्थदीपिकाख्यया व्याख्यया, अथ च विदुषा सम्पादकेन श्रीनन्दिनाथमिश्रेण कृतया गवेषणाप्रधानभूमिकया विविधैः परिशिष्टैश्च समुद्भासितम् — | १५–०० |
| ५. | श्रीमद्भगवद्गीता — | [ भट्टभास्करभाष्यविभूषिता ] नवमाध्यायपर्यन्तेयं श्रीमद्भगवद्गीता तत्तत्पाठभेदनिर्णयैर्विविधैः परिशिष्टैश्चालङ्कृता शोभते — | ५–०० |
| ६. | तत्त्वचिन्तामणिः — | [ गङ्गेशोपाध्यायविरचितः ] मङ्गलवादान्तोऽयं ग्रन्थः श्रीमथुरानाथकृतमाथुरीव्याख्यया समुद्भासितः, अथ च विदुषा सम्पादकेन श्रीवदरीनाथशुक्लमहोदयेन विमर्शात्मिकया भूमिकया तथा अनेकैः परिशिष्टैः टिप्पण्यादिभिश्च सनाथितः — | १५–०० |
| ७. | विज्ञप्तिमात्रतासिद्धिप्रकरणद्वयम् — | [ आचार्यवसुवन्धुविरचितम् ] वौद्धदर्शनग्रन्थोऽयं विंशतिकापर्यन्तं स्वोपज्ञवृत्त्या, त्रिंशतिकापर्यन्तम् आचार्यस्थिरमतिविरचितभाष्यविभूषितः। अयं प्रथमतया गूढार्थदीपिकाख्यया हिन्दीव्याख्यया शास्त्रसारभूतया भूमिकया विविधैरानुसन्धानिकैः परिशिष्टैश्च समलङ्कृत्य प्रकाशितः — | ३९–२५ |

प्रकाशक :— निदेशकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी ।

## अभिनवप्रकाशनानि सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

| क्रम सं० | ग्रन्थनाम | | मूल्यम् |
| --- | --- | --- | --- |
| १. | शुक्लयजुर्वेदकाण्वसंहिता | [उत्तरविंशतिः] संहितेयं सायणभाष्य-सहिता प्रकाशिता विविधैः खलु गवेषणा-प्रधानैः भूमिका-टिप्पण-परिशिष्टैः समलङ्कृता | २६-२५ |
| २. | वाक्यपदीयम् | [वृत्तिसमुद्देशात्मकम्] ग्रन्थरत्नमिदं हेलाराज-प्रणीतया प्रकाशव्याख्यया तथा च प० रघुनाथशर्मविरचितया अम्बाकर्त्रीटीकया विभूषितम् | ६५-५० |
| ३. | वैयाकरणसिद्धान्तमञ्जूषा | [नागेशभट्टविरचिता] ग्रन्थोऽयं सर्वतः प्रथमं सम्पादककृतविविधैः सारभूतैः टिप्पण-भूमिका-परिशिष्टैः समलङ्कृत्य प्रकाशितः | ३६-०० |
| ४. | प्रक्रियाकौमुदी | [भागद्वयात्मिका] रामचन्द्राचार्यप्रणीतेयं प्रक्रियाकौमुदी सर्वतः प्रथमं शेषश्रीकृष्णपण्डित-प्रणीतया प्रकाशव्याख्यया विभूष्य प्रकाशिता। तृतीयो भागोऽप्यचिरादेव प्राकाश्यमेष्यति । प्रथमभागस्य | ५२-०० |
| | | द्वितीयभागस्य | ६७-०० |
| ५. | सरलत्रिकोणमितिः | [ज्योतिषम्] म० म० श्रीबापूदेवशास्त्रि-विरचियोऽयं ग्रन्थो गवेषणापूर्णैः उपोद्घात-परिशिष्टैः सम्भूष्य प्रकाशितः | २९-०० |
| ६. | प्रशस्तपादभाष्यम् | [प्रशस्तपादाचार्यप्रणीतम्] न्यायदर्शनस्य प्राणभूतमिदं ग्रन्थरत्नं श्रीधरभट्टकृतन्याय-कन्दलीव्याख्यया, श्रीदुर्गाधरझाकृतहिन्दी-भाषानुवादेन च समलङ्कृतं पुनः प्रकाशितम् | ६८-०० |
| ७. | रसगङ्गाधरः | [पण्डितराजजगन्नाथविरचितः] साहित्य-शास्त्रग्रन्थोऽयं प० केदारनाथओझाप्रणीतया रसचन्द्रिकाख्यया व्याख्यया विभूष्य प्रकाशितः। द्वितीयभागोऽपि किलाचिरादेवा प्रकाश्यमेष्यति | २२-०० |
| ८. | नानकचन्द्रोदयमहाकाव्यम् | [श्रीदेवराजशर्मविरचितम्] गुरुनानक-चरितमुपजीव्यत्वेनाङ्गीकृत्य प्रतिभावता देवराजशर्मणा महाकविना विरचितमिदं महाकाव्यं कामं संस्कृतवाङ्मयस्य श्रियं समेधयति | ७४-६० |
| ९. | रसिकजीवनम् | [पण्डितश्रीरामानन्दपतित्रिपाठिविरचितम्] नायिकाभेदनिरूपणपरमिदं काव्यं सर्वतः प्रथमं विस्तृतगवेषणात्मिकया प्रस्तावनया समलङ्कृत्य प्रकाशितम् | |

प्रकाशकः-निदेशकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-२२१००२